# सूर्योदयः ।

सप्तमे वर्षे } गुरुपूर्णिमा सं० १९८८ । { प्रथम संख्या

## सप्तमाब्दावतरणिका ।

सम्बोधयन् विबुध-मानस-पद्म-राशीन्
उन्मीलयंश्च निगमागमलुब्धभृङ्गान् ।
धूकावलीं विकलयन् कलयन् महत्त्वम्
"सूर्योदयः" शिवमुदञ्चतु सप्तमेऽब्दे ॥

## धर्मशिक्षायाः सुव्यवस्था ।

( १ ) नूतनाया भारतीयशासनशृङ्खलायाः क्रान्त्या येयं भाविनी शासनसुवस्था भवित्री, तद्विषये श्रीमान् सम्राट्प्रतिनिधिमहोदयः श्रीभारतधर्ममहामण्डलं सविश्वासमभ्यधात् यत्—भाविन्यां शासनशृङ्खलायां तादृशो दृढो नियमोऽवश्यमेव संरक्षितो भविष्यति, येन भाविनी शासनपद्धतिः केषांचन धर्मे सदाचारे वा न स्वीयं हस्तं निक्षेप्स्यति, निखिलेभ्यस्तत्तद्धर्ममतावलम्बिभ्यश्च समुचितया रीत्या तत्तद्धर्ममतशिक्षां दातुं सुप्रबन्धं विधास्यति इति। सनातनधर्मावलम्बिनस्तु स्वीयधर्मशिक्षाविषये अन्यधर्मावलम्बिनामपेक्षया निरतिशयमन्यमनस्काः परिदृश्यन्ते । अन्यच्च—धर्मशिक्षाया अभावात् सनातनस्थानां तद्बालकबालिकानांच सामाजिकीम् आध्यात्मिकीं च दशा दिनानुदिनं सुतरां शोचनीयतामासादयति । अतोऽस्मिन् सदवसरे सनातनधर्मावलम्बिनाम् अखिलभारतवर्षीय-विराट्धर्मसभा श्रीभारतधर्ममहामण्डलस्तदर्थं विशिष्टं सुदृढं च सुप्रबन्धमनुतिष्ठतु । स च सुप्रयत्नस्तादृशीं सुकौशलपूर्णां सरलसरलां च सरणिं समाश्रयतु, येन सर्वत्रैव सविशेषं सौविध्यं सम्पद्यतामिति ।

( २ ) सनातनधर्मावलम्बिनां धर्मकेन्द्रे श्रीवाराणसीक्षेत्रे संस्थापितस्य

निखिलभारतवर्षीयस्य संस्कृतविश्वविद्यालयस्य सर्वतः प्रथमं तदेव धर्मशिक्षा-कार्यं उद्देश्यं भविष्यति। तत्साफल्याय निम्ननिर्दिष्टा उपाया अवलम्बयिष्यन्ते—

( क ) छात्रवृत्तिप्रदानं सुव्यवस्थाप्य सर्वप्रान्तीयेषु आङ्गलविद्यालय-महाविद्यालय-( स्कूलकालेज ) संस्कृतपाठालयेषु धर्मशिक्षाप्रसारो विधायिष्यते।

( ख ) यत्र यत्र स्वीकृतिरधिगता, अथवाऽधिगमिष्यते, तत्र सर्वविध-विद्यालयेषु राजकीयनियमानुसारं स्थानीयेनैवोद्योगेन प्रतिसप्ताहं धर्मशिक्षा-प्रदानसुव्यवस्था।

( ग ) एतत्कार्यसुव्यवस्थापक-स्वदेशीयस्वाधीन-राज्यानां स्कूलकालेजादिषु विद्यागारेषु अनिवार्य्यधर्मशिक्षायाः प्रसारणम्, तथा—

( घ ) तत्साधकानामुपायानामवलम्बनं चेति।

( ३ ) निखिलेषु भारतवर्षेषु यानि वृटिशराज्यानि देशीयराज्यानि च, तेषु सर्वेष्वेव तत्तत्स्थानीयाधिकारिणां सम्मत्या परीक्षाकेन्द्राणि संस्थापयिष्यन्ते तानि च द्वारीकृत्य धर्मपरीक्षाः प्रचारयिष्यन्ते। विषयेऽत्र भारतीय-शासकस्यं पूर्णा सहानुभूतिः सहयोगिता च नूनं समधिगमिष्यते। प्रतिवर्षं-निर्द्धारिते समये परीक्षा इमाः प्रारप्स्यन्ते, तादृशः सुप्रयत्नश्च समनुष्ठास्यते येन प्रतिमण्डलं, प्रतिनगरं, प्रतिराजधानि च परीक्षाप्रदानप्रबन्धो भविष्यति।

( ४ ) बालकानां बालिकानां वा धर्मपरीक्षा बहुविधासु श्रेणिषु विभक्ताः। परीक्षोत्तीर्णबालकबालिकाभ्यः, उच्चश्रेण्यामुत्तीर्णेभ्योऽन्येभ्यश्चानेकेभ्यः, साध्वीः छात्रवृत्तीः पारितोषिकाणि च प्रदातुं नियमं स्थिरीकृत्य सर्व एवैते धार्मिकीः परीक्षाः प्रदातुं समुत्साहयिष्यन्ते। एतया सुकौशलपूर्णया पद्धत्या ते धार्मिकं ज्ञानं लभमाना विद्याऽधिगमने च यथाशक्यमुत्तरोत्तरमग्रेसरिष्यन्ति।

( ५ ) परीक्षकमण्डली वाराणस्यामेव स्थास्यति। सा चाखिलभारतीय-संस्कृतविश्वविद्यालयस्याङ्गभूता। परीक्षोपयोगिनो ग्रन्थान् धार्मिकानि पुस्तकानि च निर्मातुं भारः श्रीभारतधर्ममहामण्डलस्य सहयोगितया संस्कृतविश्वविद्यालयेनैव वक्ष्यते। कार्यमिदमतीव कठिनं, परमस्य महीयान् अंशः सफलता-पूर्वकमग्रेसरस्तिष्ठति।

( ६ ) निखिलभारतवर्षीयसंस्कृतविश्वविद्यालयेन ये ये परीक्षोपयोगिनो ग्रन्था निर्णेष्यन्ते, तत्सम्बन्धे भारतीयैः प्रान्तीयैश्च शासकैः स्वदेशीयैः राज्यैश्चापि स्वकीयविचारप्रकाशनं कर्त्तुं शक्यते, येन मतभेदो निराकृतः स्यात्।

( ७ ) सनातनधर्मशिक्षाग्रन्थाः साधारणेन धर्मेण विशुद्धया धर्मनीत्या

च परिपूर्णा भविष्यन्ति, येन साम्प्रदायिको विरोधो मतभेदो वा जन्मैव न लप्स्यते।

( ८ ) सनातनधर्मान्तर्गता यदि केचन विशिष्टाः सम्प्रदायाः स्वसाम्प्रदायिकधर्मपरीक्षाः प्रदापयितुं समीहेरन्, तदर्थं च धनसाहाय्यं प्रदद्युस्तदा संस्कृतविश्वविद्यालयेन तत्साम्प्रदायिकपरीक्षाप्रदानप्रबन्धः, तदर्थं छात्रवृत्तिदानव्यवस्था च विधीयेत।

( ९ ) विद्यार्थिभ्योऽतिस्वल्पमेव परीक्षाशुल्कं ग्रहीष्यते। तत् च विश्वविद्यालयः स्वयमगृहीत्वा तत्केन्द्रकार्यव्ययनिर्वाहार्थं प्रदास्यति,

( १० ) हिन्दुस्थाधीनराजन्यवर्ग-राज-महाराज-भूमिपति-धनशालि-नर-नारीप्रभृतिभ्यो धनसंग्रहं विधाय तत्कुसीदेन प्राप्तभूमिदानलाभांशेन च छात्रवृत्तयो दास्यन्ते। कार्यमिदं किञ्चिदग्रेगतं चास्ति। उपर्युक्तेन द्विविधेनाप्युपायेन संगृहीतधनभूमयः स्थायिकोषे स्थास्यन्ति।

( ११ ) कस्यचन व्यक्तिविशेषस्य राज्यानां वा दानतः प्राप्तधनेन विशेषाः छात्रवृत्तयो दास्यन्ते। देशीयानि राज्यानि यदि समीहेरन्, तदा तद्दानानुसारं तेषु तेषु छात्रवृत्तिवैशिष्ट्यं विधास्यते, तत्तद्राज्यप्रदत्तधनस्य यावानायो भविष्यति, तस्यैकोऽशः समितिनिर्णयानुसारं तद्राज्यबालक-बालिकाभ्यो दास्यते। इत्थमेव यदि कश्चित् व्यक्तिविशेषः स्वीयजातिहिताय काञ्चनविशेषतां कारयितुमिच्छेच्चेत् तदा तां विधातुं नियमोऽपि स्यात्।

( १२ ) समस्तेऽपि भारते प्रतिवर्षं यावन्तो बालका-बालिका वा परीक्षामुत्तरिष्यन्ति, तेषु तासु च कतिभ्यश्चन स्वीयामार्थिकीं परिस्थितिमनुसृत्य छात्रवृत्तयो दास्यन्ते। वृत्तिरियं ३) रूप्यकत्रयादारभ्य ३०) त्रिंशन्मुद्रापर्यंतं निर्द्धारिता भविष्यति।

( १३ ) स्वदेशीयराज्यानि, राजानो, महाराजाः, श्रेष्ठिनो, महाजनाश्च ये धर्मबुद्ध्या विद्यानुरागेण वा छात्रवृत्ती वितरन्ति, ते यदि संस्कृतविश्वविद्यालयसहायकाः सन्तः छात्रवृत्ती लब्धवतो विद्यार्थिनः संस्कृतविश्वविद्यालयनियमानुसारं तदीयधर्मपरीक्षासु काञ्चन परीक्षां प्रदातुं प्रेरयेयुस्तदाऽनयासेनैव पुण्यतमकार्यस्यैतस्य कार्यक्षेत्रं सुविस्तृतं स्यात्।

( १४ ) कोषेऽत्र संस्कृतविश्वविद्यालयीये ये साहाय्यमनुष्ठास्यन्ति, तेषां नाम्ना छात्रवृत्तयः प्रदास्यन्ते, विशिष्टधनदातॄणां छात्रवृत्तिसम्बन्धे परामर्शोऽपि सादरमङ्गीकरिष्यते।

( १५ ) अनेके उदाराशया राजानो महाराजाश्च पूर्णरूपेण सहायतां प्रदातु-

मुक्तचन्तः । एतत्कार्यसम्बन्धीयविस्तृतनियमावलीनिर्माणावसरे तदीयाः सत्सम्मतयो नूनं ग्रहीष्यन्ते ।

( १६ ) एतस्य विधेयस्य संक्षिप्तमिदमनुष्ठानपत्रं प्रकाशितं भवति । अत्र विदुषां सम्मतयः प्रार्थ्यन्ते ।

× × + × ×

सनातनधर्मावलम्बिनीनां नारीणामुपकारार्थं काश्यामत्र अखिलभारतवर्षीया आर्यमहिला-हितकारिणी महापरिषद् संस्थापिता विद्यत इति तद्विदो विदन्त्येव । वर्षेऽस्मिन् जनवरीमासतः तत्संस्थामुखपत्रिकायां हिन्दीभाषामय्यां सचित्रायामार्यमहिलायां मार्कण्डेयपुराणस्य सटिप्पणोऽनुवादः क्रमशः प्रकाश्यते । एतत्पत्रिकाग्राहकैस्तु अनायासेनैव विशिष्टटिप्पणीसंवलितो मार्कण्डेयपुराणस्य हिन्दीभाषानुवादो लभ्यते । टिप्पणीपठनेन पुराणविषये बोभूयमाना आशङ्काः समूलं प्रणश्यन्ति । अतः हिन्दीभाषाऽध्येतृभिः पत्रिकेयं नूनं गृहेत्विमा ।

गताङ्के कुत्रचन प्रकाशितं यत् सप्तमवर्षारम्भतः पुराणरहस्यं सूर्योदयेऽस्माभिरपि प्रकाशयिष्यते । तत् कीदृशमिति पाठकैरध्ययनेनैव ज्ञास्यते । अस्माकन्तु बलवान् विश्वासो यदेतेन पुराणपाठकानां महानुपकारः स्यात् ।

---

## कालिदासकालविमर्शः ।

—ॐ:०:ॐ—

आर्याः पाठकमहाशयाः ! सूर्योदयस्य नवमदशमसंख्याकाङ्के १७२ पत्रे "कालिदास" इति कृतशीर्षके लेखे कालिदासः कदाऽऽसीत् स्वजन्मना कं देशं चालञ्चकारेत्यादिना विदुषां मनोविनोदकरणं प्रतिज्ञाय कालिदासरचितग्रन्थैरेव मनोविनोदः कृतः, न तु कालदेशनिर्देशेन । वयमिदानीं तैस्तैर्लेखकमहाशयैर्निर्दिष्टं कालिदासकालादिकं यथामति विमृशामः । कविवरः कालिदासः क्रिस्त्वजननात्परं पञ्चमशतके भूमण्डलमलञ्चकारेति "म्याक्सम्यूलर" महाशयः कथयतीति केचित् वदन्ति ।

( १ ) केचित्तु, अनेन कविना विरचिते मेघदूतकाव्ये, दिङ्नागानां पथि परिहरन् इत्युक्त्या दिङ्नामा कश्चित् कविः आसीदिति ज्ञायते, तस्य कालस्तु क्रिस्त्वात्परं षष्ठशतक इति ( 6th A. D ) प्रतीयते । तेन 6th. A. D. कालीनः कालिदास इति वक्तुं शक्यत इति । तथापि एतादृशार्थद्योतने प्रमाणाभावात् निराकरणीयोऽयं हेतुः ।

(२) विजयतां कविकीर्तिः कविताश्रितकालिदासभारविकीर्तिरिति 634. A. D. वर्षीयशिलालेखे दृश्यते। अनेन प्रमाणेन कवेः कालिदासस्य कालः 7ht A. D. इति निश्चेतुं युक्तो भवेत्।

(३) क्रिस्त्वजननात्परं सप्तमशतकीयः श्रीहर्षसदस्यो बाणः "निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु। प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव दृश्यते" इति कालिदासमधिकृत्य ब्रूते। एवं च बाणकालात्प्राक् कालिदासकाल इति ज्ञायते।

(४) अयं कविः विक्रमादित्यसमकालिक इति केचित्। तत्र प्रमाणं तु "धन्वन्तरिक्षपणकामरसिंहशङ्कु—वेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहरः नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥" इति। इदमपि न युक्तम्। कुतः प्रमाणान्तरपर्यालोचने अयं विक्रमः षष्ठशतकीयो न भवति। अतो विक्रमममवलम्ब्य कालिदासकालो न निश्चेतुं शक्यः।

(५) ज्योतिर्विदार्यभटात् अर्वाक् अयं कालिदास इति केचित्। तत्र-प्रमाणं तु रघुवंशे ( स० १४ ४० ) श्लोके चन्द्रग्रहणप्रस्ताव इति। तन्न। तत्र श्लोके पौराणिकी रीतिरेव प्रस्तूयते इति वक्तुं शक्यत्वात्। अन्ये केचिद्विमर्शका एवं प्रत्यवतिष्ठन्ते—"संपत्स्यते न खलु गोप्तरि नाग्निमित्रे" इति मालविकाग्निमित्रभरतवाक्येन कालिदासस्य तत्कालिकत्वं वक्तुं युक्तम्। अग्निमित्रश्च Ist. B. C. or and B. C. शताब्दीयः। पतञ्जलिः इह पुष्पमित्रं याजयाम इति वक्ति। अयं पुष्पमित्रः अग्निमित्रपितेति ज्ञायते।

(६) अपि च शाकुन्तलनाटकधनमित्रेतिवृत्तेन ज्ञायते यत् कालिदासकाले विधवा भर्तृरिक्थं कथं मपि नार्हतीति। मनुबोधायनप्रभृतयो विधवाया न रिक्थावकाशमनुमोदन्ते। नारदकात्यायनादयस्तुवृत्तिमात्रमङ्गीकुर्वन्ति विधवायाः। गौतमादयः सपिण्डसमानभागार्हत्वमभिप्रयन्ति। याज्ञवल्क्यादयः सर्वथा भागमर्हत्येवेति वदन्ति। एवं क्रमेण विधवानां रिक्थावकाशः सुस्थिरः संवृत्तः। तस्मात् मन्वादीनाम् अर्वाक् नारदादीनां प्राक् च कालिदास आसीदिति। अपि च बृहस्पतिः 1st A. D. शतकीय इति सुविदितमेव। मोषणे वधं शिक्षयन्ति मन्वादयः। बृहस्पतिप्रभृतयः प्रायश्चित्तं वधो वेति विकल्पयन्ति। कालिदासकाले वध एवेति शाकुन्तलनाटकषष्ठाङ्कप्रवेशके निवेदिताङ्गुलीयकवृत्तान्तेन ज्ञायते। एवंच क्रैस्त्वजननात्परं प्रथमशतकीयबृहस्पतेः प्राक्तनः, मन्वादेरनन्तरकालिकः कालिदास इति प्रतीयते।

एवं विचार्यमाणे हेतुजाते शिलालेखादीनां प्रामाण्यमभ्युपगम्य कविसार्व-

भौमः कालिदासः क्रिस्त्वजननात्परं पञ्चमशतके अथवा षष्ठशतके आहो स्वित् तत्सन्निकृष्टकाले भूमण्डलमण्डनो बभूवेति शक्यमभ्युपगन्तुमिति ज्ञायते ।

उज्जयिनी-सिप्रानदी-विन्ध्यपर्वतादीनां वर्णनेन तद्देशीय इति च प्रतीयते ।

रा० सुदर्शनशर्मा "साहित्यशिरोमणिः"

(कुम्भकोणम् ।)

---

## 'नलचम्पू'-समालोचना ।

निबन्द्धा—दीनानाथशर्म्मा सारस्वतशास्त्री ।

('मुल्तान' स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः)

"नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाऽक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्" ॥

— श्रीबाणभट्टः ।

"किङ्कवेस्तेन काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥
प्रसन्नाः कान्तिहारिण्यो नाना (ऽऽ) श्लेषविचक्षणाः ।
भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥
निश्चितं स-सुरःकोऽपि न कुलीनः समे (ऽ) मतिः ।
सर्व्वथा (ऽ) सुरसम्बद्धं काव्यं यो नाऽभिनन्दति ॥"

—श्रीत्रिविक्रमभट्टस्य ।

गीर्व्वाणवाणीसाहितीसंहतौ व्युत्पित्सूनां यद्यपि व्याकृत्यादीनि साधनानि जागरूकाण्येव वर्त्तन्ते, तथाऽपि न तैस्तथा स्वारस्येन व्युत्पत्तिर्भवितुं शक्यते-यथा हि वैशद्येन काव्यादिभिर्भवितुमर्हति । यतो व्याकृत्यादि र्व्युत्पित्सुतारुण्याय कटुकौषधिः, परङ्काव्यादिस्तु मधुरौषधिस्तथा परिणतावपि लाभलम्भिका । 'अर्के चेन्मधु विन्देत किमर्थम्पर्व्वतं व्रजेद्' इति सुभणित्या च सर्व्व एव स्वत एव काव्याऽऽदिके प्रवृत्तः स्याद् । एतत्सत्यं यद् व्याकरणेन द्रढीयस्त्वेन व्युत्पत्तिर्भवितुमर्हति काव्याऽपेक्षया, परम्—

"अनन्तपारङ्किलशब्दशास्त्रं
स्वल्पं तथाऽऽयुर्बहवश्च विघ्नाः ।

सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाऽम्बुमध्याद्”

इदमपि न मृषोद्यम् । एतदर्थम् उपयोगयोग्यमेव व्याकरणं काव्योपक्रमात् प्राक् प्रयोजनीयम्, न तु शुष्कवैयाकरणत्वमपि । यतो न सर्व्वदा शब्देनैवाऽर्थो भवत्यस्माकम्, प्रत्युत अर्थेनाऽप्यर्थो भवत्येव । तस्यैवाऽर्थस्य लम्भकानि काव्यान्येव जाग्रति । काव्यानि च त्रैविध्यमश्नुवते गद्यपद्यमिश्रत्वाऽऽदिभिः । तत्र केवलपद्यकाव्यान्यपि न सुविश्रावन्ति सन्ति । यतस्तत्रच्छन्दः-पारवश्यात् स्वच्छन्दः-पदप्रयोगो न भवितुं शक्यते । इत्यनीहमानेनाऽपि कविना कविताप्रसङ्गप्राप्तं स्वाभाविकं स्वल्पमपि 'चन्द्र' इत्यादिपदम् 'अत्रेर्नयनसमुत्थज्ज्योति, रित्यादिना विस्तारयितुमापत्यते । क्वचिच्च तदीयम् अनल्पमपि कल्पनं सङ्कोचितुमेव आपतति । कुत्रचन च क्लिष्टस्वाभाविकपदप्रयोगसमापयितव्यान्यपि वाक्यानि वैवश्येनैव ( न तु स्वेच्छया ) जटिलीकर्त्तुम्पात्यन्त इत्यादिक्लेशराशिरासाद्यते ।

एवञ्च केवलगद्यकाव्येष्वपि महत् कठिन्यन्नाम । यतः पद्ये सत्यपि प्रागुक्ताऽसौविध्ये एतद् महदेव सौविध्यम्, यत्-तदीयस्य एकस्याऽपि अंशस्य विच्छित्तिविशेषजनकत्वे सर्व्वमपि पद्यं तोष्टूयते मध्ये मध्ये सामान्यतां वहदपि । परं गद्ये न तथा सुकरं सौष्ठवम् । तत्र सर्व्वाऽङ्गीणविच्छित्तिशालिता चेदासाद्येत, तदैव तत् परीक्षककर्त्तृक-प्रशस्तिप्रकर्षसन्निकर्षम्प्रपद्येत नाऽन्यथा । एवञ्च पद्ये वैवश्यवशाद् विद्यमानः सामन्योऽपि दोष उपेक्षाविषयीक्रियते; परन्तु गद्ये यदि काऽपि तादृशी प्रयत्न-निष्पाद्यता दृश्येत, तर्हि गद्यकर्त्तुरेव वचनीयतामाख्यापयेद् । इत्यादिभिर्निदानैर्गद्यस्य काठिन्यात् पद्याऽऽदिसन्दृब्धकाव्यबंहिम्नि सत्यपि शुद्धगद्यकाव्यानि अङ्गुलीगणनीयान्येव ( उपदशानि ) प्राप्यन्ते ।

एवञ्च उभयोरेव काठिन्यम् । तेन केवलपद्यकवयोऽपि स्ववाग्मण्डले स्तुतिपात्राणि, तथैव गद्यकवनाऽध्यक्षा अपि । परं यो हि कविरुभयस्मिन्नेव गद्ये पद्ये चाऽपि प्रक्रमते कृतिम्; असौ तु तावुभावेव कवी अपेक्ष्य स्तुत्यो भवितुमर्हति । यत उभयोरेव काठिन्यस्य निर्व्वहणमसौ विधत्ते । तत्राऽपि यः श्लेषविरोधपरिसङ्ख्याद्यलङ्कृतिमतीमेव सर्व्वाम्मिश्रकविताङ्कुर्य्याद्; असौ तु कविस्सर्व्वाऽपेक्षयैव गरिष्ठो वरिष्ठश्चाऽप्याख्यातुं शक्योऽर्हश्च । ईदृश एवोपाधावस्माभिः श्रीत्रिविक्रमभट्टस्य नाम सर्व्वतः प्राग् ग्रहीतुं शक्यते; येन 'नलचम्पू' नाम्नीङ्कृतिं विरचय्य प्रसह्यैव महाकविपदवी कव्यन्तरेभ्य आकृष्टा । अदसीयायाञ्चम्प्वां न केवलं श्लेषः प्रत्युत विरोधो व्याजनिन्दा परिसंख्याऽऽदयोऽपि दृश्य-

न्ते । अत्रत्योऽनुप्रासोऽपि मनोमोहको यमकञ्चाऽपि रमणीयम् । यद्यपि-गद्य-काव्ये तत्राऽपि श्लेषाऽऽदिप्रपञ्चे बाणभट्टस्यैव महत्त्वङ्कीर्त्यते 'बाणोच्छिष्टञ्जगत् सर्व्वं मित्याद्या किंवदन्त्या; तथाऽपि वयन्तु एतदेव कथयामः; यादृशः श्लेषो यादृशप्रकारेण अनेन कविना निर्व्यूढः, स बाणेन स्वप्नेऽपि नाऽऽघ्रातः स्याद् । यतः श्लेषे द्व्यर्थकैकपदप्रयोगो दुष्करो न भवति । यस्या ऽमरकोषीयो नानाऽर्थवर्गो मेदिनीकोशो वा स्यात् कण्ठोपकण्ठम्; स बाणसदृशश्लेषाऽऽश्लेषे न काठिन्यं वोढुमीष्टे । परङ्काठिन्यं वर्त्तते त्रिविक्रमप्रक्रान्तश्लेषप्रश्लेषे । अनेन महाकविना ईदृशः श्लेषो न विन्यस्तो यत्र किल द्व्यर्थकैकपदनिवेशः स्यात्; प्रत्युत ईदृशः स्थापितो यत्र अक्षराणामितस्ततोविधानेनैवाऽर्थभेदः स्याद् । एवन्तु श्लेषनिर्मितिरेव काठिन्यमिभृते; तत्र अभङ्गश्लेषस्य सौगम्येऽपि सभङ्गश्लेषे महत् काठिन्यम् । तत्राऽपि पदश्लेषस्तत्राऽपि चाऽक्षरश्लेषोऽर्थाद् अक्षराणामितस्ततो विधानेन अर्थाऽन्तरनिष्पादो महाकठिनो भवति । यद्यप्यस्याञ्चम्प्वां शब्दस्यैव प्राधान्यं नाऽर्थस्य, अतएव तया न कोऽपि पारमार्थिकलाभ इत्येतद् वक्तुं शक्यते; तथाऽप्ययं शब्दविन्यासोऽपि विलक्षणवैचक्षण्यं वहति, विनोदस्य च स्थानम् । तेनेयमपि ( चम्पूः ) समादर्त्तव्यैव । तदैव साहित्यस्य सर्व्वाऽङ्गीणता जायते । यद्यपीदृश एव श्लेषाऽऽदिः सौबन्धव्यां 'वासवदत्ताया' मपि लभ्यते; तथाऽपि तत्र एतच्चम्प्वपेक्षया महाकाठिन्यवशान्नीरसताऽजनि । अत्र च सुगमत्वान्महतीं प्रसत्त्यासक्तिं निदधाति श्लेषसंश्लेषः । यद्यपि श्रीत्रिविक्रमभट्टो "यत्र च मनोहारिसरसङ्गन्धास्ततपुरुषेण द्विगुना चाऽधिष्ठताः 'कादम्बरी गद्यबन्धा इव दृश्यमानबहुव्रीहयः केदारा" इति क्षेत्रवर्णनव्याजेन श्लेषं द्वारीकृत्य बाणात् स्वकीयामर्व्वाचीनताम्प्राचकटत्; तेन च बाणोपजीवकतां व्यनक्ति, तथाऽप्यस्मन्मते तु तेन बाणस्याऽनुच्छिष्टमेव श्लेषप्रकरणं प्राचीनोऽपि बाणो द्वेषित एव । यदि तदा बाणजीवनमभविष्यद्, ध्रुवमसौ बाणो 'हर्षचरित' कविकीर्त्तकपद्येषु एतस्याऽपि निवेशमकरिष्यदेव । अधुनाऽस्य श्लेषस्य कतिपये चमत्कारकारक अंशा द्रष्टव्याः :—कविर्नलं विशिनष्टि—

( क ) कदाचिद् गरुड इव अनुत्पन्न-विषम-रण-भयो ( विष-मरण-भयो ) ऽहिताऽपकारी ( अहि-ताप कारी ) । ( ख ) कदाचिन्नलिनयोनिरिव राजसभाऽवस्थितः ( राजस-भाव-स्थितः ) । ( ग ) कदाचिदम्भोधिरिव उच्चैस्तननाभि-रम्या ( उच्चैः स्तननाऽभिरम्याः ) वेलाविलासिनीः सिषेवे ।

( घ ) कदाचिद् वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्याऽलघुकाकुस्थस्यस्याऽर्थिनः प्रार्थना क्रियतां सफलेति वा नरपुङ्गवानादिदेश ।

( क्रमशः ) ।

# याचना ।

भगवञ्छृणु याचनावचो नय चाऽऽकर्णितमाशु पूर्णताम् ।
व्यतियातु न नाथ ! सर्वथा विफलं मे मनुजन्मनो जनुः ॥ १ ॥
विपदापतनं कदाऽपि मे शुभमेवाऽऽचरतोऽपि संभवेत् ।
न तदाऽपि परं स्खलदयतो विचलेन्नाथ ! मनः कथंचन ॥ २ ॥
प्रकृतेर्वशगेन जन्तुना मयि मन्तौ रचितेऽपि कर्हिचित् ।
मतिरेतु न मे प्रतिक्रियाविषयेच्छाजनितामनच्छताम् ॥ ३ ॥
सहसाऽऽपतितेऽपि कारणे मम दुःखस्य सुखस्य वा क्वचित् ।
गतजन्मजवासनार्जिते न मनस्ताम्यतु नाऽपि नृत्यतु ॥ ४ ॥
मयि यावदवार्पितं त्वया मम तोषोऽस्तु च तावतो धनात् ।
द्रविणं परकीयमप्यणु न मयाऽन्यायत आर्जितं भवेत् ॥ ५ ॥
अपवर्गसुखैषिणां नृणामपि तत्साधन आदिमं धनम् ।
अपि गात्रमिदं पवित्रतामवलम्बेत सदा यथाविधि ॥ ६ ॥
विषमाणि गवयान्यियासवोऽदमिता अत्नहया अथाऽऽसताम् ।
मतिसारथिनाऽऽत्र सत्पथा मनसः प्रग्रहतः कृतग्रहाः ॥ ७ ॥
इतिहासपुराणदर्शनस्मृतिसाहित्ययुजां त्रयीगिराम् ।
प्रतिबिम्बति यत्र मर्म सद्धिषणादर्पणमस्तु मे तथा ॥ ८ ॥
मनसा वचसा च कर्मणा मम यावान्व्यवहार उद्भवेत् ।
स भवेत्सकलोऽप्यनुष्ठितः प्रियसत्येन सहैकमत्यतः ॥ ९ ॥
चरिते चरितेऽपि केनचिन्निजकामप्रतिकूलताकुले ।
सरलं मृदुलं मनोमृगं मम नाऽऽक्राम्यतु रोषकेसरी ॥ १० ॥
धनधान्यकलत्रपुत्रकेऽपि पराऽऽसक्तिरुदेतु नैव मे ।
क्षणिकेन विलोभ्य शर्मणा च्युतयत्यच्युतचिन्मयात्सुखात् ॥ ११ ॥
भवतिस्म यतो भवोदयो दयते यश्च जगत्तथाऽस्यति ।
त्वयि तत्र सदाऽस्तु मे रतिर्विरतिः स्याद्यत एव संसृतेः ॥ १२ ॥
नियमाच्चरतोऽप्यमूः क्रिया निजवर्णाश्रमधर्मतां गताः ।
मम माऽस्तु फलानुसन्धिता न यतः स्युर्भवबन्धदाश्च ताः ॥ १३ ॥
मयि पुष्करपात्रमेव तद्भवताऽऽदर्शतयाऽस्तु दर्शितम् ।
जलयोगवतोऽप्यलेपना सकलानामपि यस्य संमता ॥ १४ ॥
भगवन्ननवद्यतत्त्वदामथ विद्यां प्रतियच्छ मे, यया ।

अनुभूयत एव चिद्घनः परमानन्दमयोऽव्ययो भवान् ॥ १५ ॥
अथवा परिचालयेद्भवाञ्जगदन्तर्यमयँस्तथैव माम् ।
अविनश्वरशान्ति सुन्दरं स्थिरमानन्दमहं यथाऽऽप्नुयाम् ॥ १६ ॥

श्रीमाधवप्रसादशर्मा देवकुटः ।
( नेपाल प्रान्त–पालपा )

## भवभूतिः ।

अस्य पिता नीलकण्ठः । माता जातुकर्णी । विदर्भराज्ये पद्मपुरेऽयं कविरासीत् । पण्डितप्रकाण्डः, यजुर्वेदी चायम् । सरसकथावस्तुसंघटने कवीनन्यानत्येति । तत्रापि करुणरससमावेशोऽस्यानितरसाधारणं सामर्थ्यम् । एतत्कृत उत्तररामचरित्रे "एकोरसः करुण एव" त्यादि श्लोकेन प्रतीयते ।

स्वयमेवास्य वश्यवाक्त्वं, "यं ब्रह्माणमियं देवी" "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इत्यादिना ज्ञायते ।

"नव इव रघुवंशस्याप्रसिद्ध प्ररोहः" इत्यनेन रघुवंशादपि श्रेष्ठं मदीय मुत्तररामचरित्रमिति निवेदयतीव कविः । अस्य गूढव्यङ्गत्वं प्रसिद्धम् ।

अयं बाल्येऽनधीतविद्यः, ग्रामवीथिष्वितस्ततः पर्यटन् , किंचित्कालं यापयित्वा पश्चात् बुधवरोऽजनि ।

कान्यकुब्जस्य यशोवर्मणस्सभायामयमासीत् 693 to 729 A-D). कालमध्ये, ललितादित्यः यशोवर्माणं युद्धे जितवान् । अतएव भवभूतेः कालः सप्तमशतकान्तिमभागो वा, अष्टमाग्रिमभागो वा स्यात् ।

वाक्पतिराजश्चेत्थं कथयति—भवभूतिः श्रोत्रियः । "भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इवस्फुरति" इति एतेन भवभूतेरवस्थानं वाक्पतिकालात् पूर्वकाले वा समानकाले वा स्यात् इति ।

केचिन्मुक्तकश्लोकाः भवभूतिप्रणीताः दृश्यन्ते । अनेनरचिताः ग्रन्थाः—प्रथमं महावीर चरितं, द्वितीयं मालतीमाधवं तृतीयमुत्तररामचरित्रम् । प्रथमे वीररसस्य प्राधान्यं, द्वितीये शृङ्गाररसस्य प्राधान्यं, तृतीये उत्तररामचरित्रे करुणरसस्य प्राधान्यम् ।

महावीरचरित्रे, वर्णनांशे प्रसिद्धरामायणात् कचिद्भेदः दृश्यते । मालतीमाधवे नायिकानायकौ कल्पितौ ।

अत एवैतत्प्रकरणम् । बौद्धसंन्यासिद्वारात्र नायिकानायकयोः समागमः ।

कालिदासस्तु संग्रहेण व्यङ्ग्यात्मना च निर्वक्ति काव्यतत्त्वान्। भवभूतिस्तु विस्तरेण वाच्यतया च निर्माति काव्यवस्तु। भवभूतेः कविता Natural, कालिदासस्य तु सा Artificial, कालिदासः रमणीयान् पदार्थान् भावनाद्भ्यस्त्वाविविच्य वर्णयति। भवभूतिस्तु सर्वानपि विषयान् स्ववर्णनावैदग्ध्येन रमणीयान् करोति। अस्य शब्दमाधुर्यमधुपर्कप्रदानादि बहुत्र दृश्यते तच्च श्रोत्रियानुगुणम्। भवभूतीय ग्रन्थेविदूषकोनास्ति। मालविकाग्निमित्रानुकरणार्थं मालतीमाधवं शृङ्गाररसप्रधानकं कृतं तेनेत्यलम्।

—रा० सुदर्शनशर्मा ( साहित्य शिरोमणिः )

# अभिनवपञ्चापकेसरिमतविमर्शः।

## लेखको—रामनारायणशास्त्री साहित्याचार्योमहेन्द्रगढीयः।

— —:*:— —

अयि पण्डितमण्डलीमण्डनायमानाः! विद्वांसः!

दर्शनाचार्य-पं० नृसिंहदेवशास्त्रिकृता प्रभाख्या मुक्तावलीव्याख्या दृष्टिपथे पथिकायिता भवेत्। तत्र तद्विषये छात्रजनोपकारिणी अतीवसारल्यमावधाना सा इति नृसिंहदेवशास्त्रिणोऽतितमां धन्यवादार्हाः। परन्तत्र बहुत्र स्थलेषु पदार्थव्यामोहकारिण्यस्त्रुटिमाला इति। परं द्वितीयावृत्तावपनेष्यन्ते इति मन्वानोऽहमासम्, किन्तु द्वितीयावृत्तावपि ता दर्शं दर्शं खिद्यमानचेताः किञ्चिन्निवेदयामि, येन भूयः संस्करणे ता दूरीभूताः स्युरिति। तथा हि-प्रथमश्लोक एव-चूडामणीकृतेत्यत्र अथवा किमर्थं विधोश्चूडामणीकरणं किमर्थम्वा वासुकेर्वलयीकरणमित्याकाङ्क्षां निरूप्य तदुपशमायैव लीलेत्यादिविशेषणमिति च विलिख्य निराकाङ्क्षा काचित् प्रतिपत्ति ( वाक्यार्थबोधः ) र्न सम्भवति इति न्यायादिति लिखितवन्तस्तत्रेदन्निवेद्यते-निराकाङ्क्षा काचित् प्रतिपत्तिर्न सम्भवति इति कुत्रत्योऽयं न्यायः? अर्थात्-वाक्यमेव साकाङ्क्षं भवति न तु वाक्यार्थबोधः साकाङ्क्ष इति। अथ च यदि निराकाङ्क्षा काचित् प्रतिपत्तिर्न सम्भवति तदा कीदृशी? साकाङ्क्षैवेति उत्तरे किमर्थमिदं पुनः-लीलाताण्डव पण्डितः इत्युपादानं तेन तु निराकाङ्क्षत्वं भविष्यति तत्तु भवतामनिष्टमेव। अस्माकन्तु इत्थं प्रतिभाति यत्—ते महोदयाः—"किमर्थम् विधोश्चूडामणीकरणम् किमर्थम्वा वासुकेर्वलयीकरणमित्याकाङ्क्षायां निराकाङ्क्षाप्रतीतिर्न भवति" इति दिनकरभट्टोक्तिमविविच्यैव तत्र "काचित्" इति पदञ्च संनिवेश्य तस्या न्यायरूपतामाकलयाम्बभूवुः। परमि-

यान् खेदस्य विषयो यत्ते स्वयमुक्तम्–"तदुपशमायैव लीलेत्यादि–विशेषणम्" इति झटिति विस्मृतवन्त इति । सेयं दिनकर्याद्यालोचनपराकाष्ठा शास्त्रिवर्याणाम् ।

किञ्च मानुषादिशरीराणाम् पार्थिवत्वसाधनप्रकरणे –

"न च मानुषादिशरीराणां पार्थिवत्वे किम्मानमितिवाच्यम् गन्धादिमत्त्वस्यैव प्रमाणत्वात् । न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादितिवाच्यम् । जलत्वपृथिवीत्वादिना संकरप्रसंगात्" इत्यस्य टीकायाम् "संकरप्रसङ्गात् इति । पृथिवीत्वं विहाय शरीरत्वं जलादित्रितयशरीरेषु शरीरत्वं विहाय पृथिवीत्वं घटादौ मानुषशरीरे तु पृथिवीत्वशरीरत्वयोः द्वयोः समावेश इति जातिबाधकसंकरदोषभयादित्यर्थः" । अत्र जलत्वपृथिवीत्वयोः संकरप्रदर्शनस्थले पृथिवीत्वशरीरत्वयोः संकरं प्रदर्शितवन्तः । वयन्त्वित्थमनुमिमीमहे यत्—"शरीरत्वन्तु न जातिः । पृथिवीत्वादिना साङ्कर्यात्" इत्यत्र शरीरत्वपृथित्वयोः संकरप्रदर्शनस्यावश्यकतासीत् परन्तत्तु तत्रैव दर्शितम् "जलत्वपृथ्वीत्वयोः संकरप्रदर्शनस्थले" किञ्च द्वितीयावृत्तावपि न विचारितवन्त इति महदाश्चर्यं प्रतिभाति । किञ्च –शरीरत्वन्तु न जातिः पृथिवीत्वादिना सांकर्यादित्यस्यटीकायाम् "अस्यार्थः पूर्वग्रन्थार्थेन गतार्थः" इति प्रकटितवन्तो यत्पूर्वापरं विविच्यैव लिखितमिति धन्योऽयमत्रत्यो नृसिंहदेवशास्त्रिणां सिंहावलोकनन्याय प्रयोगइति अन्यदन्यदा प्रकाशयिष्यते अथैतावदेवेति शम् ।

---

## अखिल-भारतीय-संस्कृत-विश्वविद्यालयान्तर्गतायाः

### काशी–आयुर्वेदसम्मिलन्याः परीक्षा-फलम् ।

गुणानुसारतः नामानि

---

आचार्य्य परीक्षायाम्

**प्रथमविभागे—**

| छात्रनामानि ] | [ अध्यापकनामानि– |
|---|---|
| श्रीगोपालदत्त पाण्डेयः आयुर्वेदशास्त्री | श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्यवाचस्पतिः कवीन्द्र आयुर्वेद विद्यालयः, दशाश्वमेध घाट, बनारस । |

( शास्त्रिपरीक्षायाम् )

छात्रनामानि ] [ अध्यापकनामानि

श्रीरुक्मिणीमोहनभट्टाचार्यः, श्रीधीरेन्द्रचन्द्र शास्त्री महेशायुर्वेदविद्यालयः, काशी।
श्रीगिरिजादत्तशर्मा श्रीकालीकिशोर विद्याविनोदः, प्रणव विद्यालयः, काशी।
श्रीमहादेवोपाध्यायः } श्रीयतीन्द्रनाथ काव्यतीर्थः
श्रीहरिहर त्रिपाठी } सम्मिलनी विद्यालयः, काशी।
श्रीकमलेश्वरनाथ शर्मा [अयं धर्मशास्त्रेऽपि समुत्तीर्णः ] } प्राईवेट सरस्वती-विद्यालयः सहथा।
श्रीरामप्रतापमिश्रः } श्रीशम्भुदेवशास्त्री षट्दर्शनायुर्वेद विद्यालयः, काशी

वैद्यभूषण-परीक्षायाम्।

द्वितीयविभागे।

छात्रनामानि ] [ अध्यापकनामानि

श्रीमती मृणालिनी देवी,
श्रीमती निस्तारिणीदेवी } श्रीजगदम्बायुर्वेद-विद्यालयः काशी।

मध्यम परीक्षायाम्

[ प्रथम विभागे ]

छात्रनामानि ] [ अध्यापकनामानि—

श्रीरामनाथ वैद्यः श्रीकालीकिशोर विद्याविनोदः, प्रणव-विद्यालयः, काशी
श्रीपुलिनविहारी पट्टनायकः (अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः) श्रीहरिदास शास्त्री तिलूड़ी शिक्षाश्रमः, बांकुड़ा
श्रीअमरेन्द्रनाथ नियोगी (अयं धर्म्मशास्त्रेऽपि समुत्तीर्णः) " " "
श्रीपुरुषोत्तम शर्म्मा कण्डवालः (अयं धर्म्मशास्त्रेऽपि समुत्तीर्णः) श्रीकालीकिशोर विद्याविनोदः, प्रणव-विद्यालयः काशी
श्रीमती कृष्णादेवी जगदम्बायुर्वेद विद्यालयः काशी
श्रीहरदत्त पाण्डेयः श्रीकालीकिशोर विद्याविनोदः प्रणव-विद्यालयः काशी
श्रीमती पद्मादेवी जगदम्बायुर्वेद विद्यालयः काशी
श्रीनन्दवल्लभ पाण्डेयः श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्यवाचस्पतिः, कवीन्द्र विद्यालयः दशाश्वमेध काशी।
श्रीशमीरणचन्द्र धरः श्रीधीरेन्द्रचन्द्र शास्त्री महेशायुर्वेद विद्यालयः काशी।

श्रीमुरलीमनोहरनाथः — श्रीकमलेश्वरनाथ शर्मा सहथायुर्वेद विद्यालयः सहथा ।

श्रीअम्बिकेश्वरः — श्रीयतीन्द्रनाथ काव्यतीर्थः सम्मिलनी-विद्यालयः काशी

[ द्वितीय विभागे ]

छात्रनामानि ] — [ अध्यापकनामानि—

श्रीजयमंगलनाथः — श्रीकमलेश्वरनाथ शर्मा सहथायुर्वेदविद्यालयः सहथा ।

श्रीक्षितीन्द्रकुमार भट्टाचार्यः — श्रीधीरेन्द्रचन्द्र शास्त्री महेशायुर्वेद-विद्यालयः, काशी ।

श्रीराधाकृष्णनाथः — श्रीकमलेश्वरनाथशर्मा सहथायुर्वेदविद्यालयः सहथा ।

श्रीरामानन्द शर्मा मिश्रः, — श्रीकाली किशोर विद्याविनोदः प्रणवविद्यालयः काशी ।

श्रीरविदत्त शर्मा, — श्रीईश्वरीदत्त शास्त्री महाबीर विद्यालयः मिश्रपोखरा काशी ।

श्रीअक्षयवटोपाध्यायः — श्रीयतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालयः काशी

श्रीमती दुर्गादेवी — जगदम्बायुर्वेदविद्यालयः काशी ।

श्रीजितेन्द्रनाथ भट्टाचार्यः — श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्यवाचस्पतिः कवीन्द्र विद्यालयः दशाश्वमेध, काशी ।

श्रीदेवेन्द्रदत्त शुक्लः — " " " "

श्रीदाताराम शर्मा — श्रीयतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालयः काशी ।

श्रीशिवनाथ त्रिपाठी — श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्यवाचस्पतिः, कवीन्द्रविद्यालयः, दशाश्वमेध काशी ।

श्रीहरिसेवक द्विवेदी — " " " "

श्रीटीकाराम उपाध्यायः — श्रीयतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालयः काशी ।

## प्रथमपरीक्षायाम् ( प्रथमविभागे )

छात्रनामानि— — अध्यापकनामानि—

श्रीपुलिन विहारी चक्रवर्ती — श्रीधीरेन्द्र चन्द्रायुर्वेद शास्त्री महेशायुर्वेद-विद्यालयः—दशाश्वमेधघाट बनारस

श्रीत्रिपुरानन्द भट्टाचार्यः — श्रीयतीन्द्रनाथकाव्यतीर्थः सम्मिलनी-विद्यालयः-दशाश्वमेध घाट बनारस ।

श्रीमती सुधाराणी बसु }
श्रीमती रमाराय } — श्रीजगदम्बायुर्वेद-विद्यालयः दुर्गाकुण्ड काशी ।

श्रीजयदेव शर्म्मा पाठकः ( अयं धर्म्म शास्त्रे समुत्तीर्णः ) — श्रीशम्भुदेवशास्त्री षड्दर्शनायुर्वेदभवनम् काशी ।

श्रीमती सत्यबाला देवी — श्रीजगदम्बायुर्वेद—विद्यालयः काशी ।

## [ द्वितीय विभागे ]

| [ छात्रनामानि | [ अध्यापकनामानि– |
|---|---|
| श्रीरामसुन्दर दीक्षितः<br>श्रीहरेश्वर मिश्रः | श्रीशिवदास मिश्रः धन्वन्तरि संस्कृत-विद्यालयः चैनपुर । |
| श्रीगोपेश्वर हाजरा ( अयं धर्म्म-शास्त्रे समुत्तीर्णः ) | श्रीहरिदास शास्त्री तिलोरि शिक्षाश्रमः-बाँकुरा |
| श्रीनागेश्वर मिश्रः | श्रीशिवदास मिश्रः धन्वन्तरि-संस्कृत विद्यालयः-चैनपुर । |
| श्रीहरिपद बकसी (अयं धर्म-शास्त्रेऽपि समुत्तीर्णः ) | श्रीहरिदास शास्त्री तिलोरि शिक्षाश्रमः, बाँकुरा । |
| श्रीसिद्धनाथ पाण्डेयः<br>श्रीविष्णुदत्त जोशी | श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्यवाचस्पतिः-कवीन्द्रायुर्वेद विद्यालयः दशाश्वमेध घाट बनारस । |
| श्री नवलकिशोर मिश्रः | श्रीकमलेश्वरनाथ शर्म्मा सहथायुर्वेद-विद्यालयः— |
| श्रीरामानन्दोपाध्यायः | श्रीयतीन्द्रनाथ काव्यतीर्थः सम्मिलनी-विद्यालयः—काशी । |
| श्रीरेवती रमण मिश्रः | श्रीकमलेश्वरनाथः सहथायुर्वेद विद्यालयः- |
| श्रीतारादत्त त्रिपाठी | श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्य वाचस्पतिः कवीन्द्र विद्यालयः काशी । |
| श्रीरामसेवक पाठकः | श्रीकमलेश्वरनाथशर्मा सहथायुर्वेद विद्यालयः। |
| श्रीगङ्गाविष्णु शर्म्मा | श्रीज्योतिश्चन्द्र भट्टाचार्यः वैद्य वाचस्पतिः कवीन्द्र आयुर्वेद विद्यालयः दशाश्वमेध-घाट, बनारस । |
| श्रीसुधीररञ्जन भट्टाचार्यः | श्रीयतीन्द्रनाथ भट्टाचार्यः काव्यतीर्थः सम्मिलनी आयुर्वेद विद्यालयः दशाश्वमेध-घाट, बनारस । |
| श्रीगौरीशंकरमिश्रः<br>श्रीउद्धवदास मेहता (अयं धर्म-शास्त्रेऽपि समुत्तीर्णः ) | श्रीवासुदेव शास्त्री विद्याभूषणः तैलंग संस्कृत पाठशाला भूपाल । |
| श्रीध्रुवदेव द्विवेदी | श्रीशिवदास मिश्रः धन्वन्तरि संस्कृत विद्यालयः चैनपुर । |
| श्रीहृषीकेश चक्रवर्ती | श्रीधीरेन्द्रचन्द्र शास्त्री महेशायुर्वेद विद्यालयः, दशाश्वमेध घाट बनारस । |

—श्रीज्योतिश्चन्द्र भट्टाचार्य्यः वैद्यवाचस्पतिः—
( सम्पादक—आयुर्वेद सम्मिलनी काशी )

## ग्रीष्म-षट्कम् ।

सप्ताश्वः सरसीरुहं स्वकिरणैरुद्घाटयन् काशिभिः ।
संतापं प्रचुरं ददद् भुवि जनान् दीनान् पुनर्निर्दयः ।
शोषं शोषमहो पयः सुसरसां भूमिं मुधा निर्जलां,
व्याधत्ते हृतशाद्वलां सुरुचिरां सानोश्च मालान्तताम् ॥ १ ॥

रे रेऽध्वा गमने प्रपीडयति किं पादाविती लोहितां,
स्वेदालिः क्षणदाजलेन कमलेवाभासते तुण्डके ।
भुक्तं यच्च मनोरमं तदपि हा कोष्णायते सत्वरम्,
किं किं त्वन्न करोषि वह्निदुहितर्विश्वं त्वया ग्लानितम् ॥ २ ॥

निःश्वासा रविदीर्घतापमलिना आस्यं सदा पाण्डुरम्,
गाढं गाढमदः शरीरमपि हा वन्हिर्यथा द्योतते ।
दीनां नाम दशामिमामसुहृदां लोकन्न भो लज्जते,
धेहीतोऽपि दयां यया सुखभुजो लोके वयं स्याम हे ॥ ३ ॥

बालाः शीतपयःप्रसारितकरा मातुः पुरः स्वल्पकाः
स्वेदोघैर्धृतधौतमौक्तिकफला रात्रिन्दिवं रोदनम् ।
कुर्वन्तः समयं मुधा हिमतृषो वीथीपु ते दुःखिताः,
भूयो मत्कुणपंक्तयोऽपि ददते दोषा रदांस्तिग्मकान् ॥ ४ ॥

तुभ्यं यत्र सुरोचते नय मनस्तत्रैव मां स्वेच्छया,
तापेनाकुलितो निदाघसमयस्याहं गतो मूकताम् ।
शीतं गन्धवहं सुनिर्मलरसं पेपीयतामीप्सितम्
शैलानाञ्च पलाशिनामविरलां छायां श्रयस्वाधुना ॥ ५ ॥

द्रुमा एते तापं ददति न च शीतं नवदलाः
परिश्रान्ता लोका धरणितलमेषामधिगताः
समीरं मुञ्चन्तः परगतमिहासुं सुरपुरीं
दधानाः प्रेमाणं लुलितनयनासारवदनाः ॥ ६ ॥

—ब्र० रामभद्र धर्मेन्दुः

ब्राह्ममहाविद्यालयः, लवपुरम् ।

· विज्ञानं परिपुष्णाति—

**विधिदर्शनाच्च ॥ १२३ ॥**

सर्वत्रैवेयं नियमपद्धतिः समुपलभ्यते यद् गुणसम्बन्धानुसारमेव स्थावरजङ्गमात्मकास्वपि सृष्टिषु जातिभेदः स्वीक्रियते। ज्योतिःशास्त्रादिषु समुपलभ्यमानो नक्षत्रग्रहादीनां ब्राह्मणत्वादिजातिनिर्णयः, पुराणादिभिः क्रियमाणो देवतादीनां जातिनिश्चयः, पदार्थ-विज्ञानशास्त्रेण विधीयमानो रत्नादीन जातिनिर्णयः, आयुर्वेदशास्त्रेण निश्चीयमान उद्भिज्जौषधादीनां जातिविवेकः, इमे सर्वेऽपि जातिविभेदा गुणभेदविवेचनयैव तत्तच्छास्त्रे विवेचिताः ॥ १२३ ॥

पुरुषधर्म्म-सम्बन्धतः स्वाभाविक-संस्कारक्रमाभिव्यक्त्या पुरुषवर्गाणां मङ्गलवर्णनानन्तरम् इदानीं तत्सम्बन्धेन नारीजातेर्माङ्गल्यं विवेचयति—

**नारीष्वपि माङ्गल्यं स्वाभाविकसंस्कारात् ॥ १२४ ॥**

मूलप्रकृत्युदाहरणतो नारीजातीनां तदीयपूर्वप्रकृत्यनुरूपं स्वाभाविक-संस्काररूपेण पातिव्रत्यधर्म्म एव सर्वमङ्गलहेतुः। यथार्य्यपुरुषेषु वर्णाश्रम-धर्मः सर्वहिताधायकस्तथैवार्य्यनारीषु पातिव्रत्यधर्मो मङ्गलकृत्।

मनुनाऽप्युक्तम्—

"नास्ति स्त्रीणां पृथग्यज्ञो नो व्रतं नाऽप्युपोषितम्।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥"

सर्वाण्यपि दर्शनशास्त्राणि मूलपुरुषस्य मूलप्रकृतेश्च द्वैतप्रपञ्चे कारणतां समानतयैवाभ्युपगच्छन्ति। तत्र पुरुषस्यैव कस्मिंश्चिद् दर्शनान्तरे आत्मेति नाम, कुत्रचन पुरुष इति क्वचनेश्वर इति क्वापि ब्रह्मेति गीयते। सर्वत्रापि नामभेदे सत्यपि तस्य लक्षणमेकमेव यथा सर्वत्रोपलभ्यते, तथैव मूलप्रकृतिरपि केनचन प्रकृतिरित्यभिधीयते केनचित् ब्रह्मशक्तिरिति कैश्चन मायेति संज्ञायते। परन्तु सृष्टिविज्ञाने सर्वेऽप्येकमत्येन मूलप्रकृतेर्मूलपुरुषस्य चोभयोरेव हेतुतामङ्गी-कुर्वन्ति। तेनैव शाश्वतिकसत्यसिद्धान्तेन सृष्टिलीलायां सर्वत्रैव पुरुषधारा नारीधारा चेत्युभयविधापि धारा दृष्टिगोचरी भवति। यथोपलभ्यते मनु-संहितायाम्—

"द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥"

उद्भिज्जेषु आहो स्वेदजेषु उताण्डजेषु अथवा जरायुजेषु एवमेव दैवीषु सृष्टिषु मानवीषु वा सर्वत्रैव दाम्पत्यभावः परस्परं स्त्रीपुरुषभावो वा विद्यत एव। एवञ्च मूलसृष्टावेव पुम्भावस्त्रीभावयोरुभयोरपि सत्ताया विद्यमानत्वात्

पुरुषेषु मूलपुरुषस्य स्त्रीषु मूलप्रकृतेः साहजिको भावः स्वत एव निगूढस्तिष्ठतीति किमत्र वक्तव्यम् । इत्यस्माद् हेतो मानवसृष्टौ पुरुषाः स्त्रीणामपेक्षया निःसङ्गाः स्वाधीनाः प्रातिभाव्यरहिता भवन्ति, स्त्रियश्च इतो विरुद्धलक्षणोपेता भवन्ति । इत्यनेनास्य सूत्रस्य तात्पर्य्यमिदं सिध्यति यत् स्वाभाविकसंस्कारस्य क्रमाभिव्यक्तितः पुरुषधारा क्रमशोऽभ्युदयमश्नुवती निःश्रेयसभूमिमधिगच्छति । तथैव नारीधारापि स्वभावानुकूलं स्वाभाविक संस्कारमाश्रयन्ती तत्क्रमाभिव्यक्त्याऽभ्युदयनिःश्रेयसावधिगन्तुमर्हति । पुरुष-गणाश्च यथा वर्णाश्रम-सदाचारादिना त्रिविधामपि शुद्धिं नियमतः समासादयन्तः क्रमशो मल-विक्षेपाऽवरणादि-विरहिता मुक्ति-भूमिमुपतिष्ठन्ते । स्त्रियश्च तथैव वेदोक्त-पातिव्रत्यादीन् स्त्रीजनोचितान् सदाचारान् प्रतिपालयन्त्यो निःश्रेयस-पथपथिकाः सरलतयैव सम्पद्यन्ते ।

मूल प्रकृतिर्हि मूलपुरुषस्यैव कृते यथा परिणमते ; पुरुषस्य निःसङ्गत्वे निष्क्रियत्वेऽपि तत्संयोगादेव सा सृष्टि-क्रियां प्रवर्तयति । तस्यैव कृते सा स्वस्वरूपं स्थापयतीति सांख्यदर्शनीयं विज्ञानं प्रतिपादयति । तद्वदेव तस्यैव मौलिकस्य स्वाभाविकस्य संस्कारस्यानुरूप्येण पुरुषार्थं विदधती नारीजातिः स्वाभ्युदयमासादयितुमर्हति ॥१२४॥

नारीषु स्वाभाविकस्य संस्कारस्य कथङ्क्रमाभिव्यक्तिरिति प्रतिपादयन्नाह—

**तास्वेकतत्त्वतपोभ्यां तदुपगमः ॥ १२५ ॥**

पूर्वोक्त प्रकारतोऽभिव्यज्यते यत् मानवजातिषु वर्णधर्माश्रमधर्म्मयो र्विविधानाचारान् प्रतिपालयन्ती पुरुषजातिर्यथा स्वाध्यात्मिकोन्नतिपथात् पतिता नैव भवति, तथैव नार्य्योऽपि तपोमूलकैकतत्त्वमूलकान् सदाचारानवलम्ब्य स्वाभाविकान् संस्कारान् क्रमशोऽभिव्यञ्जयन्त्यो निःश्रेयसपदमपि विन्दन्ति, नैवाधःपातस्तासां कापि भवति । उक्तञ्च मनुना—

"कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥
आसीदामरणात् क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥
अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥"

इत्यत एव हेतो र्नारीणां कृते यावन्तः सदाचारा वेदशास्त्रादिषु प्रतिपादिताः ते सर्वेऽपि एकतत्त्वतपोमूलका एवोहनीयाः। एकस्मिन्नेव पुंसि रतिः, संसारे भर्तर्य्येव पुंस्त्वज्ञानम्, अन्यत्र स्वभर्तृव्यतिरिक्तेषु पुरुषेषु स्त्रीत्वबुद्धिः, स्वस्मिन्नेव पत्यौ लक्ष्यस्थैर्य्यम्, इमे सर्वेऽपि धार्मिकाः स्त्रीनियमा एकतत्त्वमूलका एव। अन्ये च ये गतिभ्रमणोत्थानोपवेशनाशन-पान-वस्त्रपरिधान-पतिसेवाप्रभृतयः सतीधर्माः सन्ति ते सर्वेऽपि तपोमूलका ज्ञेया इत्यसन्दिग्धम्॥ १२५॥

प्रसङ्गतः सतीत्वविज्ञानं विस्पष्टयति—

## सतीभावप्राधान्यमतो नारीधर्मे ॥ १२६ ॥

महर्षिः सूत्रकारोऽधुना त्रिलोकीपावनस्य सतीधर्म्मस्य स्वाभाविकसंस्कारानुकूलमस्तित्वमार्य्यनारीष्वेव कथमधितिष्ठतीति विस्पष्टयन् प्रतिपादयति-यत् सतीधर्म्मे एकतत्त्वस्य तपसश्च प्राधान्याद् आर्य्यनारीषु सतीधर्म एवादर्शरूपः। सतीलक्षणस्य चातुर्विध्यं यत् पूर्वमुक्तम्, तत्र लक्षणेषु वर्णितायामुत्तमसतीधारणायां संयमकरणेन स्वत एव ज्ञायते यत् सत्या योषितोऽन्तःकरणं कीदृगेकतत्त्वधारणया परिपूर्णं भवति। तेषु लक्षणेषु शास्त्रीयसतीधर्म्माचारादिषु च संयमादेतदपि स्फुटमेव परिलक्ष्यते यत् सतीधर्मस्तपोधर्मपराकाष्ठया परिपूर्ण इति।

उक्तञ्च विष्णुसंहितायां—

"मृते भर्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा"

अथर्ववेदेऽपि—

"इयं नारी पतिलोकं वृणाना......धर्म्मं पुराणमनुपालयन्ती"

एतदपि विज्ञानसिद्धं यद् यासु जातिषु नारीणां पत्यन्तरग्रहणसंस्कारो हृदि विरूढस्तत्र जातिषु सतीधर्मस्यादर्शः कदापि नैव सम्भवति। आर्य्यजातिषु सतीधर्म्मस्य जाज्वल्यमानं विज्ञानमिदं सर्वैः सदानुभवनीयम् यन्नैवास्ति तत्र पत्यन्तरग्रहणस्य मानसोऽपि संकल्पः तदनुष्ठानं तु दूरेऽपास्ताम्॥ १२६॥

प्रसङ्गतः शङ्कासमाधाने विवृणोति—

## भ्रष्टाऽपि योगिनी श्रेयोभाक्॥ १२७॥

धर्माचार्य्याः सर्वहितैषिणो विश्वजनीनहिताधायका आसन्, तैः प्रवर्तितः सनातनधर्मश्च सर्वजीवसंरक्षक इति निर्विवादम्। एवं सति यदि कश्चन धर्मजिज्ञासुरिदमाशङ्केत यत् स्त्रीणां कृते सतीधर्मस्यैव सर्वमङ्गलकरत्वे पूर्वजन्मार्जितकर्म्मवेगेन आहोस्विदन्येनैव केनापि विशेषकारणेन यदि काचन नारी स्वसतीधर्मादर्शतो विच्युता स्यात्तर्हि तस्या मङ्गलं किं न भविष्यति? अघटनघटना-

पटीयस्या मायाया दुर्दमनीयेन प्रभावेण काचन योग्यतमापि नारी स्वसतीधर्मतो विच्युता स्याच्चेत्तदा तस्या अभ्युदयनिःश्रेयसयोः पन्था निरुद्धः स्यात् किम् ? इति प्रश्नस्योत्तरं ब्रूते परमकारुणिको महर्षिः सूत्रकारः ।

सर्वहिताधायकेऽस्मिन् सनातने धर्म्मे कस्यापि कदाप्यभ्युदयनिःश्रेयसौ नैव निरुद्धौ सम्भवतः । तथा हि कापि योग्या नारी दैववशात् क्वापि स्वादर्श-सतीधर्म्मतो विच्युता स्यात्तदा सा योगिनी भूत्वा स्वाभ्युदयनिःश्रेयसावधिगन्तुमर्हति । कर्म्मिणोऽपि चरमे ज्ञानाश्रयेणैव मुक्तिमधिगच्छन्ति उपासका अपि तथैवावसाने ज्ञानपथपथिका भवन्त्येव । यतो हि "ऋते ज्ञानान्न मुक्तिः" इति निराकुलः पन्थाः । यदि कापि नारी सतीधर्मोचितकर्मकाण्ड-मार्गतो भक्तिमार्गतो वा विरहिता दैवात् स्वकर्तव्यभ्रष्टा भवेत्तदा योगमार्गावलम्बेन सावश्यं स्वाभ्युदयनिःश्रेयसौ सम्पादयितुमर्हतीति ।

अत्रैतावानेव भेदो यत् सतीनां योषितां योगसाधनस्य प्रयोजनमेव नायाति । ता हि केवलं सतीधर्म्मप्रभावेणैव उच्चतरमपि सतीलोकमधितिष्ठन्ति । ततश्च ज्ञानाधिकारप्रधानां पुरुषयोनिमधिगत्य सरलतयैव पद्धत्या निःश्रेयसभूमिमारोहन्ति । स्त्रीणामयं नैसर्गिको भावः । अन्यथा ताः सद्गुर्वाश्रयेण योगमार्गावलम्बतोऽसाधारणधर्म्मसाहाय्येन निःश्रेयसमार्गाधिकारिण्यो भवन्तीति ॥१२७॥

समाधानपरिपुष्ट्यै धर्म्मस्य सर्वव्यापकतां निदर्शयति—

## सा तु नैव सती रम्भावत् ॥ १२८ ॥

सर्वजीवहितकारी सनातनो धर्म्मः कमपि विमुखं नैव करोति । अत्र विषये पौराणिकमेकमुपाख्यानमुदाहरति ।

कस्मिंश्चित्काले कोऽप्यसुरराजः स्वर्गाधिपतिमिन्द्रं विजित्य नाकाधिराज्यमधितिष्ठन् रम्भानाम्नीमप्सरसं ग्रहीतुकामोऽभूत् । साऽप्सराः तु तस्यां रात्रौ तस्यासुरराजस्य भ्रातृपुत्रेण वृताऽसीत् । तदानीं सा स्वर्गीया वेश्या धर्म्मपथानुगतमसुरराजं प्रार्थितवती यदहमद्य धर्मतस्ते भ्रातृपुत्रजायाऽस्मि नाद्याहं ते भोग्या श्वस्तव योग्या भाविनी तवाज्ञां शिरसा वक्ष्ये ।

स्ववेश्याया अयं विचारस्तस्यै सुतरां धर्म्माधायक आसीत् । यतो हि सा नारीधर्मादर्शरूपतः सतीधर्म्मतो विच्युतापि असुरराजस्यामन्त्रणं धर्म्ममर्यादयैवास्वीचकार । अयञ्च सनातनधर्म्मस्य सार्वभौमभाव-सर्वहिताधायक-गौरवयोरुपयुक्तमुदाहरणम् । अन्यतश्च सतीधर्म्मश्चैको विशेषो धर्म्म इति कापि योग्या स्त्री तेन विशेषधर्म्मेण विरहिताऽपि साधारणधर्म्म-बलेनापि स्वोन्नतिं

विधातुं समर्था भवितुमर्हति । यतः साधारणो धर्मः सर्वजीवहितकारीति, सनातनधर्मस्येदं सार्वभौमं महत्त्वं न विस्मरणीयम् ।

अन्यथापीमं प्रकृतं विषयमवगन्तुमर्हन्ति जनाः । तथा हि स्त्रीणां सतीधर्मो विशेषधर्म इति सुसाध्यः सर्वमान्यो भयरहितश्चेति । योगिनीभावस्तु असाधारणो धर्म इत्यलौकिकः । इत्यत एवानेन सूत्रेण साधारणधर्मस्यैव महत्त्वमुद्घोष्यते ॥ १२८ ॥

प्रसङ्गतः सती-धर्म-पद्धतिमाह—

**एकतत्त्वतपोभ्यां सतीलोकलाभः ॥ १२९ ॥**

इतः प्राक् स्वाभाविकसंस्कारस्य क्रमाभिव्यक्त्या नारीधर्मे मुक्तिमार्गः सरलो भवतीति निर्णीतम् । अधुनात्र शङ्केयं समुदेति यत् सर्वत्रैव वेदेषु वेदाविरोधिशास्त्रेष्वपि "ऋते ज्ञानान्न मुक्तिरिति" सर्वसम्मतः सिद्धान्त एवाङ्गीकृतः समुपलभ्यते, तत्कथं विरुद्धयोरनयोः मार्गयोः सामञ्जस्यं स्यात्, कथञ्च नारी सतीधर्म-बलेनैव मुक्तिमपि लब्धुमर्हति ? इत्यादि शङ्काकलापं व्यपोहितुमेवास्य सूत्रस्यावतारः । तथा हि सत्या योषितः उर्ध्वगतेरयमस्ति क्रमो यत् सत्याः तपःप्रभावेण स्वत एव पञ्चमलोकःसतीलोकः समुपतिष्ठते । तत्र च एकतत्त्वाभ्यासेन तस्या अन्तःकरणं योगयुक्तं भूत्वा ज्ञानार्जनक्षमं सम्पद्यते । ईदृशी धार्मिका सती शरीरपातानन्तरमवश्यं सतीलोकमुपसर्पति । यथोक्तं दक्षपराशराभ्याम्—

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
एवमुद्धृत्य भर्तारं तेनैव सह मोदते ॥ इत्यादि ॥ १२९ ॥

प्रसङ्गसङ्गतिसम्प्राप्तं शङ्कासमाधानमाह—

**पतिमयत्वात् पुरुषत्वम् ॥ १३० ॥**

ननु तृतीयलोकः स्वर्लोको वा स्यादन्योऽप्यस्मादूर्ध्वलोकः सतीलोको वा स्यात्सर्वेऽपीमे स्वर्लोकाः सुखभोगहेतुका एवेति सतीधर्मस्यापि स्वर्गसुखभोजकत्वलक्ष्यकमेव सिध्यति । एवञ्चेदूर्ध्वगतिप्रदत्वेन सतीधर्मोऽभ्युदयप्रद एव भवितुमर्हति, न निःश्रेयसपदप्रदातेति शङ्कायाः समाहित्यर्थं सूत्रमिदमाह सूत्रकारः । तथा हि यथाऽन्ये कीटा भ्रमरातिनिदिध्यासात्तन्मयतामुपेत्य भ्रमरत्वमेवासादयन्ति तथैव सर्वोन्नतश्रेणिगा सती नारी स्वपतौ तन्मयतामुपेत्य पुरुषत्वमेवासादयति । यथोक्तं स्मृतिशास्त्रे—

सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया ।
कीटको भ्रमरं ध्यायन् भ्रमरत्वमवाप्स्यते ॥

गीतोपनिषद्यपि—

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय ! सदा तद्भावभावितः ॥

अन्यत्रापि—

कीटोऽयं भ्रमरीभवत्यतिनिदिध्यासाद्यथाहं तथा ।
स्यामेवं रघुनन्दनोऽथ त्रिजटे ! दाम्पत्यसौख्यं गतम् ॥
शोकं मा वह मैथिलेन्द्रतनये ! तेनापि योगः कृतः ।
सीता सोऽपि भविष्यतीति सरले ! तन्मे मतं जानकि !

इति प्रथमतः पतितन्मयतैव नार्य्याः पुरुषत्वप्राप्तेर्निश्चितं निदानम्, द्वितीयतः शरीरत्यागवेलायां या हि भावना समुदेति तदनुसारिण्येवाग्रे गतिर्भवति । सती योषित् सहमरण-धर्मानुरूपं चितायां पत्या सह भस्मीभवेदाहो पतिध्याननिमग्ना शरीरं जह्यादुभयथापि तस्याः पतितन्मयता विज्ञानसिद्धा । अन्यतश्च सतीलोकेऽपि भोगसमाप्त्यनन्तरं पुरुषत्वप्राप्तिर्हि दार्शनिकविज्ञानतःसिद्ध्यति । विशेषतः सतीलोकस्य ज्ञानमयलोकत्वात् तत्र ज्ञानप्रधानपुरुषदेहोपलब्धिर्न विज्ञानविरुद्धा, नापि तत्प्राप्त्यनन्तरं ज्ञानप्रधानपुरुषदेहोपलब्ध्या मुक्तिद्वारोद्घाटनेन तत्पदप्राप्तावपि सन्देहः । इत्यतः सतीधर्म्मपूर्णतया नारीणां निःश्रेयसोपलब्धिरिति सर्वसम्मतः सिद्धान्तः ॥ १३० ॥

पुरुषधर्मनारीधर्मयो रहस्यं यथाक्रमं प्रतिपाद्येदानीं सृष्टिरहस्यं ब्रूते—

**परिणति–सत्तामयी प्रकृतिर्ब्रह्मवत् ॥ १३१ ॥**

स्वाभाविको हि संस्कारो मुक्ति-कारणम्, अस्वाभाविकस्तु बन्धनकारणम् इति प्रागेव प्रतिपादितम् । स्वाभाविकसंस्काराश्रयेण पुरुषः स्त्री वा स्वाभाविकसंस्कारहानं कुर्वन्तौ कथं मुक्तिभूमिमुपतिष्ठेते इत्येतदप्युक्तमेव । स्वाभाविको हि संस्कारो जीवोत्पत्ति-कारणं स एव च मुक्तिनिदानम् इति कथं सृष्टिविज्ञानेनास्य सामञ्जस्यम् ? इतिशङ्कायाः समुदय एव न स्यादित्याह । ब्रह्मप्रकृतेः स्वभावो हि परिणाममयः सत्तामयश्च, सा च ब्रह्मणः प्रकृतिरिति ब्रह्मवदेव ज्ञेया । उक्तञ्च प्रागपि यथा "अहं ममेतिवत्" ब्रह्म-तत्प्रकृत्योरभेद इति ।

विष्णुपुराणेऽप्युक्तम्—

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥

ब्रह्मणः स्वरूपे सच्चिदानन्दानामद्वैतसत्ता यदा वर्त्तते, तदा हि ब्रह्म-

प्रकृतिस्तस्मिन्नव्यक्ततया लीना तिष्ठति। यदा ब्रह्मणः सकाशाद् ब्रह्मप्रकृति र्व्यक्ततामासादयति तदा सद्भावमवलम्ब्यैव परिणमते। तदेव प्रकृते र्व्यक्ताव्यक्तदशारहस्यम्। अतश्च प्रकृतिस्वरूपं यद्यपि सत्भावमयं त्रिगुणतरङ्गपरिणामि च तथापि ब्रह्मैव सेति निःसंदेहः ब्रह्मणोऽनाद्यनन्तत्वादिलक्षणमवश्यन्तत्र विद्यत एवेति सुनिश्चितम्॥ १३१॥

सृष्टिपक्षे किमस्मात् सिद्धमिति ब्रवीति—

**तस्मादनाद्यनन्ता जीवधारा॥ १३२॥**

यदा सद्भावमयी ब्रह्मप्रकृतिरनाद्यनन्ता त्रिगुणात्मकतया परिणामिनी चेति तत्स्वभावादेव सृष्टिलीलापि अनाद्यनन्ता। अतश्च जीवधारापि अनाद्यनन्ता। अत्र नाणुरस्ति सन्देहो यद् ब्रह्माण्डपिण्डमयी व्यष्टिसृष्टिः सादिः सान्तेति स्वाभाविकसंस्कार उद्भिज्जदशायामुत्पत्तिशीलो जीवमुक्तिविधानसमये च लयशीलः। परन्तु धारारूपतो जीवसृष्टिरनादिरनन्तेति गीयते॥ १३२॥

शङ्कासमाधाने अभिधत्ते—

**सादि-सान्तत्वात्संस्कारस्य तन्मुक्तिः॥ १३३॥**

अत्र यदि कश्चन जिज्ञासुराशङ्केत यद् ब्रह्माण्डपिण्डात्मक-सृष्टिधारा तथा जीवधारा च अनादिरनन्ता चेत्तदा सृष्टिविनाशकस्य मुक्तिपदस्योदयः कथं स्याद् इति शङ्कायामिदं सूत्रम्। तथा हि—

इदं हि निसर्ग-सिद्धम् यत् संस्कारस्य स्वाभाविकत्वेऽस्वाभाविकत्वे वा सादित्वसान्तत्वाभ्यां जीवस्य मुक्तिरपि स्वभावसिद्धा। यदि कयाचिदपि युक्त्या यस्य पुंसः संस्कारसमूहो विनाशितः स्यात्तर्हि निर्बीजत्वात् तस्य महापुरुषस्य कृते कर्मसृष्टिरेकपदे एव निरुद्धा स्यादेवञ्च तस्य मुक्तिर्हस्तगतेव विज्ञेया। बीजाद् वृक्षोत्पत्तिं विधाय संस्कारनाशो विहितः स्यादाहोस्विद् भर्जितबीजवदेव संस्कारः शक्तिविरहितः सम्पादितः स्यादुभयथापि संस्कारविलये जीवमुक्तिरवश्यम्भाविनी॥ १३३॥

विज्ञानं विस्पष्टयितुं संस्कारहानक्रममाह—

**कालतः संस्कारक्षयो बीजवत्॥ १३४॥**

कर्मणो बीजस्य संस्कारस्य सादि-सान्तत्वेन तस्य हानप्रकाराः कियन्तः सन्ति। तत्र प्रथमः प्रकारो यथा संसारे सर्वाण्येव तत्त्वानि कालेन विनाशमुपयान्ति तथैव संस्कारोऽपि कालकवलितो भवत्येव। जीवस्याविर्भावस्य स्वाभाविकत्वे तस्य विलयस्याऽपि स्वाभाविकत्वे कः सन्देहः।

बीजोदाहरणेऽपि सरलोऽयं पन्था यत् कस्यचनोद्भिज्जस्य बीजं महता प्रयत्नेन गोपायितं स्यात् तस्मिन्नङ्कुरोत्पत्तये नावसरः समुपलभ्येत तथापि बहुतर-कालानन्तरं तस्याङ्कुरोत्पादनशक्तिरेव विनष्टा भवति, बहुत्र प्रत्यक्षत एवोपलभ्यते यदतिचिरन्तने बीजे कीटस्पर्शविरहितेऽप्यङ्कुरोत्पादनशक्तिर्नैवोपलभ्यते, नापि तस्य वापेनाङ्कुरोपलब्धिर्दृश्यते। एवञ्च स्वाभाविको हि संस्कारः स्वभावेनैव जीवानाविर्भाव्य क्रमशस्तानग्रेसरान् विदधदन्ते मुक्तांश्च कृत्वा स्वयमेव हानमृच्छति ।

स्वाभाविकेन संस्कारेणास्य विज्ञानस्य स्वाभाविक एव सम्बन्ध इति प्रागेव विवृतम् । यतो हि स्वाभाविकः संस्कारः केवलं कालमहिम्नैव स्वयं स्वाभाविकमेव परिणाममासादयन् अवसाने हानमुपैति नान्या विधा तस्य विलयने ।

इदानीमस्वाभाविकसंस्कारस्य सम्बन्धं विवृणुते । जीवस्य मुक्ति सहजकर्मतो जीवन्मुक्तावस्थयाऽस्मिन्नेव काये भवेदुत जैवकर्मवशतः शुक्लमार्गेण सप्तमे लोके सम्पद्येताथवा ऐशकर्मप्रभावेणोन्नते देवाधिकारप्राप्ते प्राप्येत, सर्वत्रापि दशायां तस्य जीवस्य सञ्चितं कर्म तं विहाय ब्रह्माण्डप्रकृत्याश्रयेण कालान्तरे हानमुपैति । एवञ्च जीवस्य बन्धनदशायामेकस्मिन्नेव जन्मनि कालप्रभावतोऽनेके संस्कारा विलयं गच्छन्ति । यथा च बाल्यकालिकः संस्कारो यौवने विनश्यति, तौ च जराजीर्णेन्द्रिये वार्द्धक्ये विलयं गच्छतः ।

तत्त्वजिज्ञासूनां शङ्कापनोदायेदमाह–यत् कालमहिम्ना केवलं स्वाभाविक एव संस्कारो विलयमृच्छति । यतः कालसाहाय्येन जीवत्वस्योत्पादकः स्वाभाविकः संस्कारः कालमहिम्नैव जीवानुद्भिज्जावस्थातो मनुष्ययोनौ प्रापय्य पूर्णज्ञानाधिगमे च तान् मुक्तिपदं प्रापय्य स्वयमपि विलीनो भवति ।

पुनश्च शङ्कते यज्जीवन्मुक्तावस्थामधिगते जीवे सहजकर्म्मणाऽपीयं दशा समुदेतुमर्हति ? अत्रोदाहरणरूपत इदं ज्ञातव्यं यत् शुकदेवजनक-शङ्कराचार्य्यप्रभृतयो जीवन्मुक्ता महात्मानोऽनेकविधान् अस्वाभाविकान् संस्कारान् बहुषु जन्मसु भुञ्जाना यदा जीवन्मुक्तपदप्रापके चरमे जन्मनि समुपस्थिता आसन्, तदा तेषां प्रारब्धसंस्कारा भोगान् समुत्पाद्य विलयं गता आसन् । तेषामस्वाभाविकाः संस्कारास्तु न मुक्तिबाधका अभूवन् । अपरतश्च तेषां स्वाभाविकाः संस्काराः ये च तेषां मनुष्यत्वप्राप्तौ विहतगतय आसन् ते च पुनः सारल्यं जुषमाणाः विदेहमुक्तावस्थायां पूर्णतामुपेत्य विलीनाः सञ्जाताः ।

# पुराण-रहस्यम् ।

## अथ मङ्गलाचरणम् ।

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ १ ॥
नमोऽस्तु ते व्यास ! विशालबुद्धे ! फुल्लारविन्दायतपत्रनेत्र !
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥ २॥
व्यासं वशिष्ठ-नप्तारं, शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ३ ॥
व्यासाय विष्णुरूपाय, व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वाशिष्ठाय नमोनमः ॥ ४ ॥
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाल-लोचनः शम्भुर्भगवान् बादरायणः ॥ ५ ॥
नमस्ते भगवन् व्यास ! सर्वशास्त्रार्थ-कोविद !
ब्रह्म-विष्णु-महेशानां मूर्ते ! सत्यवतीसुत ! ॥ ६ ॥

---

### प्रस्तावना ।

अङ्गानि वेदाश्चत्वारो मीमांसा न्याय-विस्तरः ।
धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश ॥

इति चतुर्दशसु विद्यासु पुराणस्य परिगणना विद्यते। छान्दोग्योपनिषदि नारद-सनत्कुमार-संवादे सप्तमाध्याये—

"स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳसामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳसर्पदेवजनविद्यामेतद्भगवोऽध्येमीति"। पुराणानां कृते "पञ्चमं वेदानां वेदम्" इति स्पष्टत एव श्रुतावपि स्तुतिवाक्यमुपलभ्यते ।

"इतिहासः पुराणश्च पञ्चमो वेद उच्यते"

इति भागवते प्रथमस्कन्धे चतुर्थाध्यायेऽपि । मत्स्यपुराणेऽप्येवमेव—

"पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।
पुरा पुराणमेवासीत्तदा कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्" ।

इति पुराणमहिमा श्रूयते । पुराणमहत्त्वमुग्धेन मनुनापि महर्षिणा स्फुटमुद्गीतं पुराणानां वेदाभ्यनुग्राहकत्वम् । तथाहि—

इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति ॥

इत्यादि बहुशः सर्वसंस्तुतस्य पुराणस्य माहात्म्यं केन वक्तुं पार्य्यते ? तेषां लक्षणन्तु—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ।

श्रीमद्भागवते द्वितीयस्कन्धे दशमाध्याये चैवम्—

अत्र सर्गो विसर्गश्च स्थानपोषणपूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तराशयः ॥ इति ।

इत्येवं लक्षणलक्षितस्य पुराणस्याष्टादशभेदा उपलभ्यन्ते । तथा हि—

मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणानि त्रिषड् विदुः ।

एवमष्टादशभेदैर्विभक्तेषु पुराणेषु श्रीमता वेदव्यासेन महर्षिणा मानवचरितचित्रणं सर्वधर्मरहस्यकीर्तनम्, वर्णाश्रमधर्मप्रतिपादनम् विहितमस्ति । किं बहुना सर्वेऽपि सामान्य-विशेषासाधारणापद्धर्मादयः सर्वोपयोगिनो ज्ञातव्या विषया विनिवेशिताः सन्ति । विशेषतो भारतीय-आर्य्य ( हिन्दू ) संस्कृतेर्हृदयमेव पुराणमित्यभिधाने नास्त्यतिशयोक्तिलेशः,—

समाधिभाषा प्रथमा लौकिकीति ततः परा ।
तृतीया परकीयेति शास्त्रभाषा त्रिधा मता" ॥

इत्येवं भाषात्रितयसम्वलितेषु सरलतया भाषासौष्ठवेन च स्त्रीशूद्राणामपि अनायासेनैव बोधगम्येषु महोपकर्तृषु तेष्वपि पुराणेषु इदानीं कालप्रभावतो बहूनां विद्यते वैमत्यम् । विधर्मणान्तु कथैव का, आर्य्येषु ( हिन्दूषु ) एव कियतां तत्र न तादृशी दृश्यते आस्था यथाऽपेक्षिता । केषाञ्चन तु दृढाऽश्रद्धैव दृश्यते तर्कप्रियाणां पुराणेष्वश्रद्धालूनाम् । तथा—

पुराणं मानवो धर्मः साङ्गोपाङ्गश्चिकित्सकः ।
आज्ञासिद्धानि सर्वाणि न हन्तव्यानि हेतुभिः"

इति तेषु श्रद्धाजुषां मान्यमानवानामुभयेषामपि पुराणरहस्यस्फुटावगतये पुराणगत-सर्वविधशङ्कापनोदनपूर्वकं तेषां मनःसन्तोषाय पुराणस्थानर्घरत्न-जिघ्राहयिषया सर्वतः सर्वदार्य्ये (हिन्दू) जातौ प्राणवत् प्रियस्य, सर्वाभ्यर्हितस्य सर्वैर्धार्मिकशिरोमणिभिः सर्वथा समादृतस्य सर्वदर्शनसिद्धान्त-समवलितस्य सर्वोपासना-सम्प्रदायाविरोधिनोऽत्यलौकिक-विचित्र-भावगुम्फितस्य श्रीमार्कण्डेयपुराणस्य रहस्यं विव्रियते। तत्र यस्य पद्यस्य रहस्यं प्रकटीक्रियते तत्पद्यार्थसंकेतोऽप्युपरि निर्दिष्टो विद्यते। येन पीपठिषूणां तदर्थावगतये महत् सौविध्यं स्यात्। रहस्यभाषा तु मञ्जुलतरा प्रसादगुणगुम्फिता भावमयी भविष्यति। येन बाला अपि स्वल्पप्रयासेनैव तदध्ययनतस्तन्मर्मज्ञा भवितुमर्हन्ति। पुराण-रहस्याध्येतृभिः पुराणेषु समुज्जृम्भितानां सर्वासामपि शङ्कानां समाहितिः सुतरामनायासेनैव समासादिता स्यादिति सर्वथा प्रधानं लक्ष्यम्।

---

## तत्र श्रीमार्कण्डेय-पुराणस्य मङ्गलाचरण-रहस्यम् ।

यद् योगिभि र्भवभयार्त्तिविनाशयोग्य-
मासाद्य वन्दितमतीव विविक्तचित्तैः ॥
तद्वः पुनातु हरिपादसरोजयुग्म-
माविर्भवत् क्रमविलङ्घित-भूर्भुवः स्वः ॥ १ ॥
पायात् स वः सकलकल्मषभेददक्षः ।
क्षीरोदकुक्षिफणिभोग-निविष्टमूर्त्तिः ॥
श्वासावधूत-सलिलोत्कणिकाकरालः ।
सिन्धुः प्रनृत्यमिव यस्य करोति संगात् ॥ २ ॥
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ३ ॥

पूज्यपादेन त्रिकालदर्शिना महर्षिणा वेदव्यासेन प्रणीतस्यास्य मङ्गलात्मकस्य श्लोकत्रयस्य अलौकिकं महत्त्वमध्यात्मभावराशिपरिपूर्णत्वञ्चावर्णनीयमस्ति। परमकारुणिकेन महर्षिणा पतञ्जलिना प्रणीतस्य योगशास्त्रस्यायं सर्वसम्मतः सिद्धान्तोऽस्ति यत् समाधिना निरुद्धासु चित्तवृत्तिषु स्वयमेव सर्वद्रष्टा परमात्मा योगिनोऽन्तःकरणे स्वस्वरूपेण प्रकाशते; तथा हि—

योगश्चित्तवृत्तिनिरोधः ॥ १ ॥

तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ २ ॥

( योगसूत्रम्—अ० १-पा० १-सू०-१, २, )

इत्यतश्च हेतोः योगिनां तस्य श्रीमतः परमेश्वरस्य पदोपलब्धिः स्वाभाविकी ।

अस्मिंश्च महापुराणे सर्वप्राथम्येनादौ श्रीमतस्त्रिगुणात्मकस्य भगवतः परमेश्वरस्य चित्स्वरूपो विष्णुभावः संस्तुतोऽस्ति, यश्च ज्ञानमयश्चित्स्वरूपः सृष्टेरुत्तमाङ्गे विकाशक्रमेण क्रमश आविर्भवति । ऊर्ध्वस्थानामधस्थानाञ्च सप्तानां लोकानां स्थितिकल्पना श्रीमतो भगवतो विराड्रूपस्य नाभिप्रदेशतः ऊर्ध्वाधोभागेनैव व्यवस्थिता विद्यते । तत्र श्रीमतो भगवतो विराड्वपुषि सप्ताधस्तना लोकास्तमोमयाः; यत्रासुरा एव केवलं निवसन्ति । ऊर्ध्वस्थाश्च सप्त लोकाः सत्त्वमया यत्र देवगणास्तिष्ठन्ति ।

उक्तेषु सप्तसूर्ध्वलोकेष्वपि श्रीमद्भगवतश्चित्कलाया उत्तरोत्तरं क्रमविकाशाद्धेतोः क्रमशो ज्ञानानन्दयोस्तथा तदीयचित्कलायाश्च विकाशो भूत्वा सप्तमे चरमे ऊर्ध्वलोके पूर्णत्वमृच्छति । इत्यत एव षष्ठ-सप्तमयोर्लोकयोर्मध्ये उपासनालोकसमूहानां स्थितिरभ्युपेयते । यतश्च कदाचित् पुनरावृत्तिरपि सम्भाव्यते; किन्तु सप्तमाच्चरमलोकान्न पुनरावृत्तेराशङ्का । स एव लोकः सूर्य्यगतीनामन्तिमं स्थानम् ।

प्रथमतोऽत्र श्लोकत्रये 'भूर्भुवःस्वः' इति व्याहृतित्रयस्योपादानेन सप्तस्वप्यूर्ध्वलोकेषु श्रीमद्भगवतश्चिन्मयरूपस्य क्रमविकाशः स्फुटीभवति । द्वितीयतश्च गतागतचक्रस्य गहनतापर्य्यालोचनया भूर्भुवःस्वरिति लोकत्रयस्य प्राधान्यं परिलक्ष्यते । इत्यत एव वर्णाश्रमीयतुरीयाश्रमरूपे संन्यासे भूर्भुवःस्वरित्यस्य व्याहृतित्रयगम्यस्य लोकत्रयस्य त्यागादेव ज्ञानिनः सर्वस्वत्यागः स्वीक्रियते ।

गतागतचक्रस्य स्थिरीकरणायायमस्माकं मृत्युलोक एव प्रधानं केन्द्रम् । अयञ्चास्माकं मृत्युलोकः सप्तानामूर्ध्वलोकानां सप्तानाञ्चाधो लोकानां मध्ये मध्याकर्षणशक्तिरूपेण निवेशितो विद्यते । स चाऽयं ब्रह्माण्डस्यैकस्य चतुर्दशभागस्य चतुर्थो भागः । यतो हि भूर्लोकस्य चत्वारो विभागाः सन्ति । एकः पितृलोको यत्र धर्मराजापरनाम्नो भगवतो यमस्य राजधानी, द्वितीयो नरकलोकः, तृतीयः प्रेतलोकश्चतुर्थश्चायं मृत्युलोक इति ।

अस्मिन् मृत्युलोक एव मातृगर्भतो जीवा जायन्ते, अन्यत्र लोकेषु तु अयोनिजा एव जीवा उपलभ्यन्ते ।

अस्य मृत्युलोकस्य गतागतचक्रकेन्द्रस्थानत्वात् पुत्रैषणा-वित्तैषणा-लोकैष-

णेत्येषणात्रयासक्तत्वेन जीवा उपर्य्युक्त-पितृ-प्रेत-नरकात्मकेषु लोकत्रयेषु पौनः-पुन्येन बाभ्रम्यमाणाः पुनरत्रैव मृत्युलोके जनिं लभन्ते । इदमेव गतागतचक्रगति-रहस्यं संक्षिप्तं वेदितव्यम् ।

यावज्जीवेऽस्यैषणात्रयस्य तीव्रता तिष्ठति, तावद्भूलोकान्तर्गत-सुखप्रद-स्वर्ग-रूप-पितृलोकावधि एव तस्य गतागतचक्रं भ्रमति । एषणात्रयसंसक्तो जीवो यद्युन्नतोऽपि स्यात्तदापि 'भूर्भुवःस्वरि'ति लोकत्रयादूर्ध्वं नैव गन्तुमर्हति । अस्यै-षणात्रयस्य जेतारो महात्मान एव तस्माल्लोकत्रयादूर्ध्वलोकेषु गतागतमाचर-न्ति । इत्यत एव संन्यासाश्रमिणां मन्त्रेषु प्रथमलोकत्रयकर्मकसंन्यासोल्लेख उप-लभ्यते । अस्मादेव हेतोरस्मिन्मङ्गलाचरणे च त्रयाणामेव पदानामुपन्यासः ।

उत्तरोत्तरं चित्कलाया अभिवृद्ध्या एतल्लोकगतागतिदशोल्लङ्घनेनाग्रे प्रशा-न्तदशोपस्थितिरावश्यकी । अथवा सप्तव्याहृतिपक्षे तु सप्तमी प्रशान्तदशा ज्ञेया । इत्थं तस्य चिन्मयपदस्य निदर्शनं महर्षिभि र्दिव्यदर्शिभि र्विहितं वेदितव्यम् ॥१॥

मङ्गलाचरणस्य द्वितीये पद्ये श्रीमतो भगवतो विष्णोर्वाङ्मनसबुद्धिविष-यातीतस्य चिन्मयस्वरूपस्य लोकातीतमद्भुतं रहस्यमन्यप्रकारेणापि विव्रियते । तथाहि—योगिराजानामन्तःकरणे जगदीश्वरस्य परमात्मनः स्वानुभूतिः पञ्च-तत्त्वानामन्तिमस्याकाशतत्त्वस्याऽप्यूर्ध्वमेव भवति । आकाशतत्त्वं हि अनन्तशब्द-वाच्यमित्यत एव श्रीमद्भगवतो विष्णोः शय्याधिष्ठानमनन्तः शेषाऽपरपर्य्यायो गीयते । आकाशतत्त्वस्यानन्त्यसत्ताया याथार्थ्यतोऽनुभवे सत्येव योगिराजाना-मन्तःकरणं भगवत्सत्ताया अप्यनाद्यनन्ततामनुभवितुं योग्यं गण्यते ।

सृष्टेरादिस्वरूपवर्णनप्रस्तावे पुराणादिषु शास्त्रेष्वपि क्षीरसागरस्य कारण-वारिणश्चैवमन्येषामप्येवंविधानां यद्वर्णनमुपलभ्यते तत् चिदाकाशस्थितानां समष्टिकर्म्मबीजरूपाणां संस्कारराशीनां तात्पर्य्यत एव । यतोहि--साधारणजल-तत्त्वस्य अनुलोमक्रमतस्तुरीयतत्त्वरूपस्य तु कथमप्यनेन कारणार्णवेन सम्बन्ध एव न सङ्गच्छते । इत्यतो-"यथापूर्वमकल्पयदिति" श्रुतिप्रतिपाद्ये समष्टिसंस्का-रात्मके कारणार्णवे अनन्तशय्यामधितिष्ठतः श्रीमद्भगवतो विष्णोश्चिन्मयरूपस्य समाधिना दर्शनं योगिराजानां सुलभमेव ।

परमपुरुष-सत्तयैव "अहं ममेति" "अयमहं" ममेयं शक्तिरिति अनु-भवानुरूपं ब्रह्म-प्रकृते र्महामायायाः सम्बन्धो दर्शनशास्त्रादिषु गीयते । परमस्य पुंसो विष्णो र्भगवतोऽखिलात्मनः सत्तयैवानन्तात्मन आकाशस्यापि सत्ताऽभ्युपे-यते । तस्मिन्नाकाशतत्त्वे क्षोभोत्पत्त्यैवान्येषां तत्त्वानां क्रमश उत्पत्त्या सृष्टिलीला-विस्तारः सम्पद्यते इत्यत एवास्मिन्मङ्गलाचरणे श्रीमद्भगवतः सत्तया सम्बन्ध-

शालिन आकाश-तत्त्वस्य प्राधान्यं परिलक्षयता कारणसमुद्रस्य प्रक्षोभतःसमुद्र-तरङ्गवत् सृष्टि-विस्तारोपरि शालिन उपासकस्य चेतस आकर्षणमिहोपनिबध्यते महर्षिणा ॥ २ ॥

तृतीयं मङ्गलाचरणं सर्वव्यापकम्। तच्च सर्वत्रैव पुराणादिषूपलभ्यते। यो हि जीव इन्द्रियाश्वाधीन इन्द्रियारामः, यस्यान्तःकरणप्रवृत्तयः केवलमिन्द्रिय-सेवामुद्दिश्यैव परिस्फुरन्ति, स कथमपि नरशब्दवाच्यो भवितुं नार्हति। स तु साधारणः क्षुद्रो जीवः पशुतुल्यो विज्ञेयः। यो हि पुमान् भाग्यशाली भगवद्भा-वासक्तचेताः स एव नरलोके धन्यो नरशब्दवाच्यश्च। ये च पूर्णावयवाः स्वरूप-स्थिता अवतारिणो महापुरुषाः सर्वदा भगवद्भावापन्नचेतसस्त एव नरोत्तम-शब्दवाच्याः। सर्वशक्तिशाली निग्रहानुग्रहसमर्थोऽनन्तकोटिब्रह्माण्डनेता सर्वा-न्तर्यामी भगवान्नारायणशब्दाभिधेयो ज्ञेयः।

श्रीमतो भगवतो भागवती शक्तिः "अहं ममेतिवत्" ततोऽभिन्नापि शास्त्र-कारैर्द्विविधा विभक्ता। एकाऽज्ञानजननी अविद्येत्युच्यते द्वितीया ज्ञानजननी विद्येत्युच्यते। अविद्या हि जीवान् मोहजालेऽज्ञानान्धतमसि पातयित्वा गता-गतचक्रं दृढीकरोति। विद्या तु आत्मज्ञानप्रदानेन तद्बन्धनतो मोचने कारणं भवति। सा ज्ञानप्रदायिनी मुक्तिदात्री विद्यैवेह मङ्गलपद्ये सरस्वतीशब्दा-भिधेया।

धर्म्म एव सृष्टिधारकः, धर्म्म एव च मानवेभ्योऽभ्युदयनिःश्रेयसौ क्रमश उन्नतिपथप्रापणत आदावन्ते च प्रयच्छति। इत्यतो धर्माधर्मयोः फलप्रदात्री जग-द्धात्री धर्म्मरूपिणी सैव सरस्वती देवीह गीयते।

इह हि मङ्गलाचरणे "व्यास" पदम् आधिदैवविज्ञानपूर्णम्। तन्मर्मान-भिज्ञतया क्वचन पुराणादिषु लेखकैः 'व्यास' पदप्रयोगस्थाने 'चैव' पदप्रयोगो लि-खितो दृश्यते तन्न वरम्। 'व्यास' शब्दप्रयोगरहस्यन्त्वित्थम् वेदनीयम्। तथाहि--

यथा राष्ट्ररक्षानिमित्तं बहवो राजकीयविभागा निर्धारिता विद्यन्ते, तथैव ब्रह्माण्डस्यैकस्य सञ्चालने त्रयो मुख्या विभागा विद्यन्ते। एकोऽध्यात्म-विभागो द्वितीयोऽधिदैवविभागस्तृतीयोऽधिभूतविभागः। तत्र प्रथमस्य ज्ञान-विभागस्य सञ्चालका व्यासवशिष्ठादय ऋषयः। द्वितीयस्य कर्मरूपाधिदैववि-भागस्य सञ्चालका वसुरुद्रादिदेवगणाः। तृतीयस्य स्थूलशरीररूपाधिभौतिक-विभागस्य सञ्चालका अर्य्यमाग्निष्वात्तादिपितृगणाः। इत्थञ्च भगवतो वेदव्या-सापराह्वस्य कृष्णद्वैपायनस्यावतारोऽस्मिन्मृत्युलोके यद्यप्यभूत्तथापि नित्यर्षि-रूपस्य व्यासस्य देववत् चिरस्थायिपदाधिष्ठातृत्वं स्वभावसिद्धम्।

एवञ्चास्मिन्नलौकिके मङ्गलाचरणे श्रीमद्भगवतस्तच्छक्तेः तदीयानां सर्वासामपि विभूतीनां स्मरणेनैव जयोच्चारणस्य शास्त्रादेशो भवति । श्रुतयः सर्वाणि शास्त्राणि च स्वात्मन अध्यात्माधिदैवाधिभूतात्मकं त्रिविधमर्थमवगमयन्ति । अतश्च सर्वधर्माश्रयस्य श्रीमद्भगवतो विश्वधारकस्य धर्मस्य सर्वधर्मप्रकाशकस्य च महाभारतादिपुराणेतिहाससमूहस्य जयघोषणैव जयशब्देनाभिधीयते ॥३॥

## चतुर्थ-पद्यादारभ्य दशमपद्यावधि महाभारतमहिमवर्णनं विद्यते, तदीयरहस्यमिदमधो निर्दिश्यते—

महाभारतं हि सर्वपुराणेतिहासानां शिरोमणिः । सर्वमान्यपञ्चमवेदस्वरूपञ्च । पुराणानां पञ्च भेदाः ! तथाहि–महापुराणानि, पुराणानि, उपपुराणानि, पुराणसंहिता, इतिहासश्चेति । तत्र महाभारतन्तु इतिहासलक्षणोपेतमपि कर्मोपासनाज्ञानात्मककाण्डत्रयरहस्यपूर्णत्वात् सर्वाङ्गपूर्णं पुराणमङ्गीक्रियते । पुराणानि न लौकिकेतिहासरूपाणि नापि कल्पितगाथापूर्णानि । वस्तुतः पुराणानि ज्ञानमयत्रिकालदर्शिनो वेदस्य भाष्यरूपाणि । यदि पुराणानि लौकिकेतिहासपूर्णानि अभविष्यंस्तदा तत्रैकस्यैव पुंसश्चरितानि एकेनैव महापुरुषेण लिखितानि तत्तत्पुराणेषु पुराणान्तरेषु वा भिन्नप्रकाराणि नाभविष्यन् । श्रीमद्देवीभागवते प्रकाशिताच्छुकदेवचरिताच्छ्रीमद्विष्णुभागवते प्रकाशिते शुकदेवचरिते रात्रिन्दिववन्महद्वैषम्यं नैवाभविष्यत् । अतश्च पुराणादिषु निबद्धानि महापुरुषाणां जीवनचरितादीनि न लौकिकगाथावद्विज्ञेयानि, नापि तेषां चरितानां लौकिकवदुपयोगो विधेयः । किन्तु तानि चरितानि भगवता वेदव्यासेन महर्षिणा स्वाद्भुतालौकिकयोगशक्तिशालिनोऽन्तःकरणस्यामोघया स्मृतिशक्त्यानेककल्पकल्पान्तराश्रितानि स्मृत्वा लोकहिताय वेदरहस्य-विख्यापयिषया प्रकटीकृतानि । इत्यस्मादेव हेतोः पुराणान्यपि 'स्मृति' शब्दवाच्यानि भवन्ति ।

पुराणेषु वेदवत् भाषात्रयं भावत्रयं गुणाधिकारत्रयं विद्यत इति-यथा वेदार्थरहस्यविज्ञाने काठिन्यं तथैव पुराणार्थरहस्यावबोधनेऽपि तद् वेदनीयम् । तेषु यत्र केवलं समाधिगम्यविषयाणामेव वर्णनं विद्यते सैव समाधिभाषेति निगद्यते । यथा—आत्मस्वरूपविवेचनम्, ब्रह्म-प्रकृतिस्वरूपवर्णनम् । दुर्ज्ञेयकर्मरहस्यप्रतिपादनम् इत्यादि । समाधिभाषा तु सर्वत्रैव पुराणेष्वेकविधैवोपलभ्यते । नास्ति तत्र किमपि केषाञ्चिद् वैमत्यम् । यया वर्णनपद्धत्या समाधिगम्यं विषयं लौकिकरीत्या विव्रियते सा हि लौकिकी भाषा प्रतिपाद्यते । यथा च—ब्रह्म-प्रकृतिरूपयोः शिव-पार्वत्योर्विवाह-वर्णनम् । अनाद्यनन्तचिन्मय-शिव-लिङ्गवर्णनम्, रासलीलावर्णनम् इत्यादि । यत्र च समाधि-

गम्य-विषयाणां परिपुष्टये अनेककल्पसङ्घटितानां घटनावलीनां समाधिबलेन संस्मृत्य विस्तरशो वर्णनम् क्रियते सा परकीया भाषा कथ्यते। अस्या उदाहरणं पुराणेषु बहुश उपलभ्यते । भ्रम-प्रमादवशतः प्राकृतिका मानवा इमामेव वर्णनशैलीं लौकिकेतिहासरूपतोऽवगच्छन्ति यथोक्तमुपरितः । इत्यतो हि अस्या भाषात्रयपद्धतेः स्वरूपावगतिं विना यथा वेदार्थरहस्यज्ञानं दुस्तरं तथा पौराणिकार्थपरिचयोऽपि दुर्गम एव । इत्थञ्च यथा भगवान् ब्रह्मेशविराड्रूपतस्त्रिभावात्मकः तथैव वेदाः पुराणानि शास्त्राणि च अध्यात्माधिदैवाधिभौतिकरूपतो भावत्रयबोधकानि परिचेयानि ।

इत्यत एव वेदानां सर्वे मन्त्राः पुराणानाञ्च सर्वेऽपि विषया भावत्रितयात्मकाः । एतद्रहस्य-परिज्ञानाय द्विविधमुदाहरणमत्रोपन्यस्यते । श्रीमद्भगवतो विष्णो र्भावत्रितयात्मकं स्वरूपत्रयं विद्यते । तत्र प्रथमम् अध्यात्म-रूपम् आकाशतत्त्वतोऽपि परं विद्यते। इत्यत एव आकाशबोधकानन्तशय्यापि तद्रूपम् । फलतः सर्वतत्त्वातीतम् । कामार्थधर्ममोक्षाणां चतुर्णामपि फलानां स दातेति गदा-शङ्ख-चक्रपद्मधारी निगद्यते। माया तद्वशे विराजत इति लक्ष्मी पादप्रसेविका प्रख्याप्यते। फलतस्तत्प्रकृतिस्तदधीनैवेति ततः सूच्यते । भगवतो विष्णोर्गोलोकपीठादारभ्य सत्त्वगुणव्यापिनी याऽधिष्ठात्री सत्ता विद्यते सा तस्य भगवतोऽधिदैवस्वरूपम् । या सगुणमूर्तिः समये समये स्वभक्तानुग्रहार्थमाविरास्ते सा तस्याधिभौतिकी स्थितिः। उदाहरणान्तरं तु प्रतिपदार्थमिदमाम्नायते । तथाहि—

नेत्रेन्द्रियस्याध्यात्मरूपं तन्मात्रा, अधिदैवरूपं विश्वतश्चक्षूरूपः सूर्य्यदेवः । स्थूलमधिभूतरूपञ्च शरीरस्थं नेत्रेन्द्रियगोलकम् । अतश्च वेदे तत्सदृशपुराणादिषु च क्वचनाध्यात्मपुरुषस्याध्यात्मविषयस्य च वर्णनमासाद्यते । कुत्रचनाधिदैवव्यक्तेरधिदैवविषयस्योपनिबन्धनमुपलभ्यते । कुत्रचिदधिभूतभावविशिष्टस्य पुंसोऽधिभूतविषयस्य च विवरणं विद्यते। येषामवगतये भावत्रितयात्मिकाया विचारशक्तेरावश्यकत्वम् । एवं सति पुराणव्याख्यातुः शक्तिर्यदि भावत्रयरहस्यज्ञामार्हा न स्यात्तर्हि तस्य व्याख्यानेन पुराणविषये शङ्कोद्गमस्य पदे पदे सम्भवस्तु स्यादेव, प्रत्युत सर्वं पुराणशास्त्रमेवासम्बद्धं प्रतीयेत ।

इत्यस्मादेव हेतोः पुराणादिषु सत्त्वरजस्तमोरूपत्रिगुणात्मिका बहुशो वर्णनपद्धतयः समुपलभ्यन्ते । यदनुकूलमेव पुराणव्याख्यानमावश्यकम् । नित्यर्षिव्यासावतारो महर्षिः कृष्णद्वैपायनो वेदव्यासोऽनेकपुराणेतिहासादिप्रणयनानन्तरमन्ते श्रीमन्तमन्तर्यामिणं सर्वेश्वरं सर्वशक्तिमन्तमीश्वरमेवमधोनिर्दिष्टविधया तुष्टाव । तथाहि—

# सूर्योदयः ।

} श्रावणस्य पूर्णिमा सं० १९८८ । { द्वितीय संख्या

## सम्पादकीया अभिप्रायाः ।

——:*:——

### शोकाश्रुविन्दवः ।

——:*:——

हा हा हन्त नितान्तशान्तमनसामाशेन्दुरस्तं गतो
भग्नः कल्पमहीरुहः सुजनता श्वरता निरस्ताऽश्रिता ।
धर्मः कुब्जवपुः परं शुचमिता गीर्वाणवाग्देवता
काशी क्लान्तकलेवरा प्रभुयुते नारायणे स्वर्गते ॥

नाथेन तत्रभवता भवता वियुक्ता
वाराणसीयमधुना भवतापमग्ना ।
प्रावृट्सु तीव्रतरतुङ्गतरङ्गभङ्ग-
गङ्गाप्रवाह इह हन्त निमज्जतीव ॥

धर्मस्य वै सत्यसनातनस्य
संस्था चकास्तेऽखिलभारतीया ।
काश्यामसौ भारतधर्म-पूर्वा
श्रीमन्महामण्डलनामधेया ॥

स्वीकृत्य संरक्षकतां तदीयां
स्वाम्यं समासाद्य तदुत्सवानाम् ।
महोपकारो भवता कृतो य-
स्तं वर्णितुं को नु समुत्सहेत ॥

"सूर्योदयं" संस्कृत-पत्रमेतत्
संचाल्य धीमन् ! स्वकराम्बुजाभ्याम् ।

उत्साहिताः संस्कृतसेवकास्ते
सम्मानिता निर्जरभारती च ॥
संख्यातिगासु परिषत्सु च हिन्दुविश्व-
विद्यालयादिषु हि या विहिताऽनुकम्पा ।
शेषोऽप्यशेषरसनो बत वस्तुतस्तां
नास्त्येव वक्तुमलमेष नरः कथं स्यात् ॥
दत्त्वाऽऽस्पदं शुचि सनातनधर्मपूर्वा–
काशीस्थपण्डितसभोपकृता त्वया या ।
एतर्ह्यसह्यभवदीयवियोगदुःखैः
सा रौति मूर्च्छति विषीदति दैन्यमेति ॥
अन्तर्निगृह्य निजशोकजवाष्पवेगं
श्रीविश्वनाथमिदमर्थयते जनोऽयम् ।
निःश्रेयसं त्वमधिगच्छ, भवत्कुमारः
सिंहासने विजयतां शरदः शतञ्च ॥

× × × ×

विविधविरुदावलीविराजमानानां श्रीमतां काशीनरेशमहोदयानां १९३१ खृस्ताब्दीयागस्तमासस्य पञ्चम्यां तिथौ प्रातः षड्वादनसमये काशीस्थे नन्देश्वरभवने शरीरपरित्यागेन वयं नितरां विषीदामः। एते किल संस्कृतज्ञानां परमसहायकाः स्वयमपि प्रौढतमाः संस्कृतज्ञा आसन्! एतैः संस्कृतभाषामयं नाटकमप्येकं विरचितं, यत् किल वाराणसेयैर्विद्वद्भिर्बहुवारमभिनीतम्। इमे हि स्वभावमधुरा गम्भीरा प्रजाहितपरायणा नृपतयोऽभवन्। वाराणसेयाः प्रजा एतान् विलोक्य "हर हर महादेव" इत्युच्चैरुच्चारयन्त्यः काशीपुरपतिं भगवन्तं श्रीविश्वनाथमिव समाद्रियन्तेस्म। भारतवर्षस्य तत्तत्प्रान्तनिवासिनामाश्रयभूतायां काशिकायां न चास्ति सार्वजनिकं किमपि कार्यं, न वा वर्तते विद्यापरिषद् धर्मसंस्था वा, यत्र महाराजैरुदाराशयैरेतैर्विपुलं साहाय्यं न प्रदत्तमभूत्। निखिलभारतवर्षीयसनातनधर्मप्रतिनिधिभूताया विराड्धर्मसभायाः श्रीभारतधर्ममहामण्डलनामधेयाया इमे संरक्षकाः सन्तस्तदीयमहोत्सवेषु बहुवारं सभापतिपदमन्वगृह्णन्। अत्युदाराशयैर्मान्यैर्महाराजैः परमया कृपया "सूर्योदयं" पत्रमिदं पुरा पाक्षिकरूपं स्वीयेनैव करकमलेन स्वयं संचाल्य

धनप्रदानपूर्वकं तस्य संरक्षताऽङ्गीकृता। वाराणसेये 'हिन्दुकालेज' नामधेये महाविद्यालये हिन्दुविश्वविद्यालये च यादृशं साहाय्यमेतैरर्पितं तत् सर्वथाऽस्मत्प्रशंसनमतिशेते। व्यतीतेषु वर्षेषु सम्पन्नानां निखिलभारतवर्षीय-ब्राह्मण-महासम्मेलनादि-सभानां त एव कर्णधारा अभूवन्, एभिः काशीस्था श्रीसनातन पण्डितसभा आश्रयप्रदानेन समये समये यथोचितसाहाय्यप्रदानेन च पोषिता। निखिल-एशिया-शिक्षामहासम्मेलनप्रथमाधिवेशनप्रारम्भिककार्यं कृपया स्वयं समुपस्थाय एभिरेव सम्पादितं, तत्र समुपस्थिता भारतवर्षीया विदेशीयाश्च प्रतिनिधयः सर्वविधया सहायतया समाजिताः। किम्बहुना, एतेषां महोपकारकार्यकलापो न परिगणितुं शक्यते। एतेषां जन्म १८५५ खृस्ताब्दीय नवम्बरमासस्य षड्विंश्यां तिथौ समभवत्। १८८९ खृस्ताब्दीय-जूनमासस्य तृतीयायामेते राज्यसिंहासनमधिरूढाः। १९११ खृस्ताब्दे एते स्वाधीननरेशाः संवृत्ताः, जी० सी० एस० आई० जी० सी० आई० ई० लेफ्टिनेन्टकर्नल-प्रभृतिविरुदावलयश्चैतैः समधिगताः आसन्। एल्० एल्० डी० इत्युपाधिना हिन्दुविश्वविद्यालयोऽप्येतान् समभूषयत्। इमे किल षट्सप्ततिवर्षदेशीयाः सन्ति इमेति महाराज-मृत्युदिने षट्सप्ततिवारं शतघ्नीध्वनयस्तदीय-सम्मानार्थं समभूवन्। तेषां मरणदिवसे सर्वविधा अपि वाराणसेया-विद्या-धर्म-न्याय-कार्यालया पिहितद्वारा अभूवन्। महोपकार-कर्तॄणामेतेषां वियोगेन सातिशयं सन्तप्तमानसा वयं वाराणसीपुरपतेः श्रीविश्वनाथस्य चरण-सरसीरुहेषु सादरमभ्यर्थयामो यत् सोऽयं करुणावरुणालयो भगवान् तेभ्यो निजपदं प्रदाय तदीयांस्तनुजनुषो दीर्घायुषा संयोज्य बहुकालं यावत् राज्य-सिंहासनाधिरूढान् विदधात्विति।

---

## महामण्डलीयं साफल्यम्।

---

बहुविधासु प्रचारगोचरतामापन्नासु राजतन्त्रशासनपद्धतिषु, त्रिविधासु सुसंघटितासु प्रजातन्त्रशासनरीतिषु कापि च शासनपरिपाटी युगादौ पूज्यपादमहर्षिप्रवर्त्तितया राजाधीनशासनशैल्या न कथमपि समतां विधातुं क्षमा भवितुमर्हति। दैवेषु लोकेषु विश्वासमभ्युपेयुषी, आत्मतत्त्वदर्शिनां जगद्गुरूणां ब्राह्मणानां निर्देशं पालयित्री, संयमपरायणैर्निर्लोभैर्धर्मभीरुक्षत्रियैः

परिचालिता प्राचीना राजनीतिः सर्वातिशायिनी सर्वोत्कृष्टेति न तस्याः साम्यमिह युगे काऽपि शासनपद्धतिः कर्त्तुं शक्नोति । तथापि विद्यमान-देश-काल-पात्र-विचारानुसारेण "फेडरल गवर्नमेन्ट" इति नाम्ना प्रख्याता शासनरीतिरन्यापेक्षया समीचीनैवेति न कथमपि सन्देहावकाशः ।

शासनरीतिरियं संसारे न कुत्रापि समुपलभ्यते । भारतेऽपीदानीमेवास्या जनिरभवत् । एतां शासनपरिपाटीं द्वारीकृत्य प्रोन्मत्ततया स्वाधीनताप्रवाहे निमज्जन्ती प्रजा यथेच्छं धावन्ती प्रोन्मत्ता हस्तिनीव अङ्कुशाधीना सती स्वीयं कल्याणकरं पन्थानमाश्रयिष्यति । अनया शासनप्रणाल्या स्वाधीनचेतसो देशीया राजानो निजां प्रजावात्सल्यहीनां वृत्तिं परित्यजन्तः प्रजासु सुखसञ्चारिणीं स्नेहदृष्टिवृष्टिं कुर्वन्तश्च स्वीयां विषयासक्तिमूलिकां निरङ्कुशप्रवृत्तिं संकोचयिष्यन्ति, प्रजानामधिकारदाने साहाय्यं च विधास्यन्ति । शासनप्रणालीयं यूरोपीयायाः स्वेच्छाचारिण्या एकाकारकारिण्या निरङ्कुशोन्मत्तप्रजातन्त्रशासनपद्धत्या भारते वर्षे प्रवर्द्धमानं प्रबलं वेगं परितो निरोद्धुं सर्वथा समर्था भविष्यति। स्वभावसिद्धायाः समुन्नत्या आत्माभिव्यक्तयाश्च हेतुभूतेयं शासनरीतिः भारत-सम्राजि, वृटिशनेतृवर्गेषु, भारतीयेषु नेतृवृन्देषु, राजन्यमण्डलेषु, तदीयराज्येषु, भारतीयवृटिशप्रजासमवायेषु च परस्परं यथावश्यकं प्रेमसम्बन्धं संस्थापयिष्यति । अनया भारतवर्षदेशोऽयं शक्तिशाली सन् सर्वविधमभ्युदयं प्राप्स्यतीति बलवान् विश्वासः । यदीयं भाविनी शासनपद्धतिरस्मान् विश्वासयेत् यत् नेयं कथमपि कस्यापि धर्मे सदाचारे वा स्वीयं हस्तं निक्षेप्स्यति, परेषां वा निक्षेपयिष्यति, भारतीयायाः सर्वविधायाः प्रजायाः कृते आध्यात्मिकसमुन्नतिधर्मशिक्षाद्वारं निरावृतं च विधास्यतीति, तदैव वयं सर्वे सनातनधर्माणः सफलप्रयत्नाः सन्तुष्टाश्च भविष्यामः । श्रीभारतधर्ममहामण्डलः स्वीये प्रयत्ने कीदृशीं सफलतामासादितवानिति गताङ्कप्रकाशितेन माननीयभारतसम्राट्प्रतिनिधेर्भारतीयराष्ट्रसभायाश्च विशिष्टेन मन्तव्येनैव सर्वं विज्ञातं स्यात् ।

---

## मामकीनं विधेयम् ।

——:o:——

श्रीमता भारतसम्राट्प्रतिनिधिमहोदयेन भारतीयया राष्ट्रियमहासभया च यद् विधानमङ्गीकृतं तत् फेडरलनामधेया भाविनी शासनरीतिरपि स्वीकुर्या-

द्भिरत्र विषये सनातनधर्मावलम्बिभिः समुचिता तीव्रा दृष्टिः प्रदेया । प्रतिनगरं धार्मिकसंस्थानां धर्मशिक्षाप्रणालीनां स्थापन–प्रबन्धपूर्वकम् अद्वितीयस्य विराड्धर्मसंस्थानस्य श्रीभारतधर्ममहामण्डलस्य सहयोगिनो भूत्वा स्वीयां स्वीयां पुरुषार्थशक्तिं केन्द्रीभूतां विधाय सर्वेऽपि सनातनधर्मप्राणा धर्मस्य संघटनमायोजनं वा कुर्वन्तु । धार्मिकसंघटनेऽत्र स्वार्थपरतां परित्यज्य एकयैव केन्द्रभूतया शक्त्या एकत्रैव पताकातले समागत्य सर्वैरपि पुरुषार्थपरैर्भवितव्यम् । राजनीतिसभातो राजनीतिकपुरुषार्थतो वा धार्मिकसभां तदीयपुरुषार्थं च स्वतन्त्ररूपेण पृथक् संरक्ष्यैव सनातनधर्मभिः कार्यक्षेत्रे समवतीर्णैर्भवितव्यम्, येन राजनीतिकपुरुषार्थे न वा बाधा समुपस्थिता स्यात्, न वा राजनीतिकनेतृवृन्दतोऽन्योन्यं मनोमालिन्यं समुत्पद्येत । एवंकृते राजनीतिकसंसत्सु राजकीयासु सभासु च निजप्रभावोत्पादनपूर्वकमस्माभिरुभयविधाभिरपि ताभिः स्वकीयोद्देश्यपूर्त्तिः कारयिष्यते । विशुद्धेन धार्मिकसंघटनेन धर्मशिक्षाप्रसारेणैव च वयमाभ्यन्तरिकं वाह्यिकं च बलं वर्द्धयिष्यामः । सत्यं सूर्य इव न सदा तिरोहितं स्थास्यति । आस्माकीनं पुरुषार्थबलं सर्वत्रैव राजनीतिकनेतृवृन्दहृदयेषु राजनीतिपरिषत्सु च जागरूकं स्थास्यतीत्यत्र न कोऽपि संशयलेशोऽपि । तदानीमेव द्विविधामपि राष्ट्रसभाया भारतसम्राट्प्रतिनिधेश्च पूर्वोक्तां प्रतिज्ञां वयं साभिमानं सफलां कारयिष्यामः, स्वीयां धार्मिकीं सत्तां संरक्षन्तो राजनीतिकपुरुषार्थेऽपि सहयोगदानं च कर्त्तुं शक्ष्यामः ।

---

## आदर्शराज्यम् ।

--०:*:०--

राजप्रजयोर्मातृपुत्रयोरिव पारस्परिकः सम्बन्ध इति निर्विवादम् । कतिचनासावधाना जनन्यः प्रगाढनिद्राभिभूता निर्बोधं स्वपन्ति, तदीयास्तनुजनुषो बलवद्बुभुक्षापीड़िता जाग्रति, रुदन्ति च । तदानीमेव निजां निद्रां निरस्य तदीया जनन्यो यदि तद्बुभुक्षाशान्तिप्रबन्धं न कुर्वन्ति, तदा बालकाः सातिशयं विषीदन्ति, ततो नु सर्वोत्तम-खाद्यपदार्थ-दानेनापि न शान्तिं लभन्ते, ते दीयमानं समीचीनमपि भोज्यं वस्तु दूरे क्षिपन्ति । ततश्च चातुर्य्यशून्याभिर्मातृभिस्ताड्यमाना निरतिशयं विषादमापन्नास्ते न कथमपि सन्तुष्यन्ति । तदानीं

च तद्विषादापनोदनं सन्तोषप्रदानं च प्रायो दुःशकमेव भवति। शिक्षिता बुद्धिशालिन्यो जनन्यो हि न तादृशमाचरन्ति ! तास्तु बालकानां जागरणात् पूर्वमेव जाग्रति तद्भोज्यवस्तुयाचनात्पूर्वमेव तेभ्यो भोज्यमर्पयन्ति । तदानीं समये बालकाः प्रायोऽल्पभोज्यलाभेनापि साधीयान्सं सन्तोषं प्रयान्ति ।

इदानीं समये देशीयानां नृपतीनामवस्था पूर्वोक्तासावधानजननीवदेवा-भाति। पूर्वत एव न ते नृपतयः स्वीयां प्रजां सन्तोषयन्ति, प्रत्युत प्रपीड-यन्त्येव। अन्ते च प्रजानामसन्तोषे वृद्धिंगते प्रयत्नसहस्रेणापि विरोधभावो न प्रशाम्यति, पारस्परिकं वैमनस्यं च प्रतिदिनं प्रवर्धत एव ।

प्रजासमीहाविरुद्धं न कोऽपि राजा शासनं राज्यं वा विधातुं क्षम इति निर्विवादः पन्थाः। आस्माकीना च शासनपद्धतिपरम्परा नामशेषाऽभूत्। अवस्थायामस्यां प्रजासम्मत्यैव शासनविधानमुचितम्। प्राचीने समये राजानः प्रजानामिच्छानिच्छाविचारं सदा विदधतेस्म। येषां सूर्यचन्द्राग्निवंशोद्भ-वानां भूपतीनां वंशधरमात्मानमाधुनिका नृपतयः सगर्वं मन्यन्ते, तदन्वय-मुकुटमणिर्मर्यादापुरुषोत्तमो भगवान् श्रीमान् रामचन्द्र एकत्रैवमुदघोषयत्—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि, ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥

भगवतो रामस्य लोकोत्तरप्रतिश्रुतिरियमाधुनिकैर्नृपालम्मन्यै र्न विस्मर-णीया ! पुरा किल भारतवर्षेऽत्र राजसत्तात्मिकैव शासनप्रणाली प्रचारविषयी-भूताऽवलोक्यतेस्म। सा चैवास्माकं प्रकृतिप्रवृत्त्यनुकूला वर्त्तत इति नवित-थम्, किन्तु प्राचीनायाः शासनरीत्याः स एवादर्शो यः साम्प्रतिकेषु देशीय-राज्येषु समुपलभ्यत इति न मन्तव्यम्। बहूनां देशीयराज्यानां शासनपद्धति-र्निरतिशयं वैगुण्यमापन्नेति लिखतो मम खिद्यतेतरां चेतः। तदपेक्षया तु ब्रिटिशीया शासनरीतिरेव समीचीना समुपलभ्यते। यद्यपि ब्रिटिशाधि-कारिणामभिभावकतायामेव देशीयराज्यकार्याणि संचाल्यन्ते, तथापि नैकवारं ते देशीया नृपाला उत्तरदायित्वतो निजात्मानं सर्वथा पृथक्कर्तुं शक्ताः सन्ति। ज्ञातेनाज्ञातेन वा रूपेण देशीयं राज्यं ब्रिटिशशासनसमकक्षतायामुपवेष्टुं नैव क्षमत इति सर्ववादिसम्मतः सिद्धान्तः। कारणेनैतेनैव बरारप्रान्तनिवा-सिनो मानवा निजामशासनाधीनतापेक्षया ब्रिटिशतन्त्रतामेव बहुमन्यन्ते निर-तिशयं समाद्रियन्ते च। देशीयानां नृपतीनां कृते लज्जाजनकोऽयं विषयः। ब्रिटिशशासका हिन्दुस्थानीयाः प्रजाश्चोभयेऽपि वंश-संस्कृति-भाषा-धर्म-रीति-नीति-प्रभृतिषु विषयेषु परस्परं नितरां भिन्ना एव सन्ति। उभयेषां

स्वार्थो हितसम्बन्धो वा विभिन्न एव, किन्तु देशीयनृपतीनां तत्प्रजानां च नैतादृशी पारस्परिकी विभिन्नता। सर्वेष्वपि पूर्वोक्तेषु विषयेषु समानतया तत्र प्रेम-स्थापनं सुशकमेव। यदि स्वदेशीया भूमिपतयः प्रजासु विश्वसेयुः, ताभ्यश्च क्रमश उत्तरदायित्वभारं प्रदद्युस्तदा देशीयेषु राज्येषु राजप्रजासम्बन्ध आदर्शरूपो भवितु-मर्हति, तादृशानि स्वदेशीयराज्यानि च भाविन्याः फेडरलगवर्न्मेण्ट शासन-प्रणाल्याः स्तम्भरूपाणि भवितुमर्हन्ति। साम्प्रतं तु देशीयराज्येषु प्रजानां भाषण-लेखन-विचारादीनां स्वातन्त्र्यमपि तत्रत्यैः शासकैरपहृतम्, संघटितया परिषदा स्वीयं दुःखं प्रकाशयितुमपि नास्ति तत्रत्यप्रजानामधिकारः। एतेन कारणेन तत्र दिनानुदिनं विद्वेषाग्निर्जाज्वल्यते। परिणतिस्तु तस्य राजप्रजयोरुभयोरपि विपत्तिजनिकैव भविष्यति भविष्यति।

परां प्रीतिं प्राप्नोत्यन्तःकरणं यन्मुम्बापुरीप्रान्तस्थस्य औंध-राज्यस्याधिपते र्मनसि सर्वप्रथमं भावोऽसौ जनिमलभत। तेन तु १६२१ खृस्ताब्दतः प्रजाभ्य उत्तरदायित्वशासनाधिकारः क्रमशः प्रदीयते। एतया उदारतया राजनीति-प्रवीणतया च तस्य राज्यस्यैतादृशी अभूतपूर्वा समुन्नतिरभवत् यत् न तत्स-मता प्रतिवर्षं कोटिमार्यं कुर्वद्भिरपि राज्यैः कर्त्तुं शक्यते। सम्प्रति तु तत्रत्यो बालकोऽपि तदीयराज्यकार्येषु साहाय्यप्रदानं स्वीयगृहकार्येषु सहयोगिताचरण-मिव मन्यते, अहमहमिकया च तत्र भागं गृह्णाति। सम्प्रत्येव सम्पद्यमानायां प्रजापरिषदि तद्राज्याधिपतिना साभिनन्दनं तत्सभापतिसन्निधाने संदेशः प्रहितो घोषितवांश्च यत् पञ्चवर्षाभ्यन्तर एवात्र उत्तरदायित्वस्य सम्पूर्णोऽपि शासनाधिकारः प्रजाभ्यो नूनं दास्यत इति। किमिदं राज्यमन्येषां राज्यानां कृते पथप्रदर्शकं भवितुमर्हति ?



# शोकोच्छ्वासः ।

———:*:———

( श्रीमतो महाराजाधिराज लेफ्टनेन्ट कर्नल सर श्रीप्रभुनारायणसिंह-शर्मनृपतेः जी, सी, एस्, आई, जी, सी, आई, ई, एल्, एल्, डी; प्रमुखानेकबिरुदावलीसमलङ्कृतस्य निधनाशनिनिपतनसुलभः कश्चन हृदयोद्गारः ।)

अष्टाशीत्यधिकाङ्कभूपरिमिते श्रीवैक्रमे वत्सरे
मासे श्रावणिके च मेचकदले षष्ठ्यां कुजे वासरे ।
काशीवासिजनौघनेत्रकुमुदोल्लासैकजैवातृको
हा ! काशीपतिरस्मदन्वयगतिर्दैवतोऽस्तं गतः ॥१॥

अद्यौदार्यं समाप्तं प्रभुवरविरहे खण्डितः पण्डितानां
मानः शुष्को दयाब्धिर्धृतिरपरिमितिर्निस्तुलाऽस्तं प्रयाता ।
सौजन्यं शून्यभूतं क्षयमपि च गता साक्षमाऽक्षय्यपक्षा
विक्षिप्तो नीतिवृत्तः क्षितितलमखिलं रुक्षवद्भासते नः ॥२॥

यद्दानोद्भूतकीर्तिः कुमुदशशिपयःफाशनीकाशमूर्ति-
र्भूलोकं व्यश्नुवाना न परमिह जनानात्मना सन्धिनोति !
काश्यामेकत्र वासाच्चिरमखिलतया संस्तुता यद्गुणौघै-
र्गीर्वाणाः स्वर्गलोकेऽप्यपरिमितमुदा स्वं शिरः कम्पयन्ति ॥३॥

भूलोके किन्तु सर्वान् दिनकरकिरणस्पर्धितीव्रप्रतापो
ऽरातींस्तीव्राभिपङ्कव्यतिकरमलिनानानतान् संविधाय ।
किं सोऽयं जेतुकामः सुरवरविसरं प्रस्थितो नाकलोकं
प्रोत्सर्पन्ती समन्ताद्भृशमिह महतामर्थना वेत्ति नान्तम् ४॥

श्रीमद्भारतभूमिभाग्यविभवो मूर्तोऽवदातच्छविः
श्रीकाशीपतिरस्मदादिभिरहो, भूत्या कथा वर्ण्यताम् ।
आर्तानां "शरणं गुणोत्करचणं, कारुण्यपूर्णार्णवं
स्मारं स्मारममुं मनोऽशरणतामस्माकमारोहति ॥५॥

ध्यात्वाऽद्यास्माकमास्ते विकसितशरदम्भोजसच्छायशोभं
वात्सल्यस्निग्धमुग्धेक्षणममितमुदः स्यन्दनं यस्य चास्यम् ।
स्वान्तं कुन्तैः समन्ताद्विशकलितमिवाजस्रमातास्रमस्ति

प्रोद्यच्चञ्चूरिरोमोद्गममपि च वपुः स्तब्धतां सन्दधाति ॥६॥
देवालोक्य नस्त्वदेकशरणान् स्निग्धैः कटाक्षैः सकृत्
पीयूषप्रतिमैर्विदग्धवचनैः स्वीयैर्मनो नन्दय ।
त्वय्यस्तमिते धरा गतधवेवाभाति विद्वत्सभा
निश्चन्द्रेव निशा दुनोति हृदयं निःसारमेतज्जगत् ॥७॥
भूयांसः सन्ति भूपा भुवि वसुविसरोपार्जनाबद्धतृष्णाः
काशीभूपालसाम्यं कति खलु दधते तेषु दाक्षिण्यसिन्धोः ।
यस्योदाराधिकारामरधरणिरुहच्छायमासेवमानो
धर्मस्तुर्ये युगेऽस्मिन्नपि विधृतबलः पीनतां निर्विवेश ॥८॥
राज्यं सम्पत्तिभारोपहसितविबुधागारलक्ष्मीविलासं
भुक्त्वा पञ्चाशदब्दांस्तनुजनुष इव स्वाः प्रजाः पालयित्वा ।
नानातीर्थाटनादिप्रगुणितसुकृतव्रातपूतान्तरात्मा
स्नातुं किं प्रस्थितोऽसौ सुरवरतटिनीं काशिकेशः शुभंयुः ॥९॥
देवे स्वर्लोकपान्थे व्यथिततरहृदां देवपादाश्रितानां
चित्तेऽमान्तन्तु शोकं कथमपि दिशतां कैश्चिदेभिः पदैः स्वैः ।
आस्तामस्यांशमूर्तिर्धरणितलधुराधुर्य आदित्यदीप्तिः ।
श्रीमानादित्यनारायणनृपतिवरः केवलालम्बनं नः ॥१०॥
महेन्द्रभूतिः शरदिन्दुकीर्ति-
र्गुणौघसिन्धुः सुजनैकबन्धुः ।
श्रीमांश्चिरं जीवतु काशिकेश
आदित्यनारायणसिंहभूपः ॥ ११ ॥

तैलङ्गश्रीलक्ष्मणशास्त्रिणः ।
( महामहोपाध्यायस्य )

——

# 'नलचम्पू'-समालोचना ।

निबन्द्धा—दीनानाथशर्म्मा सारस्वतशास्त्री ।

( 'मुल्तान' स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः )

—:o:—

[ क्रमागता ]

अत्र सर्व्वेषामक्षराणामितस्ततोऽनुष्ठानेनैव अर्थभेदो विधेयः, एवमग्रेऽपि अधुनाऽनुप्रासयमकादिर्दृश्यताम् ।

( क ) समादिश्यन्तां कृतवैरिविपक्षयः, पक्षयः, पर्य्याणयन्तां मनस्तुरगास्तुरगाः । सज्जीक्रियन्तां निजवेगनिर्जितमातरिश्वानः श्वानः । समारोप्यन्तामपनीताऽहिताऽऽयूंषि धनूंषि । गृह्यन्तां निर्म्मथितप्रोथियूथपाऽऽशाः पाशाः ।

( ख ) सम्प्रति श्रेयस्करं प्रियमस्माकमैणं न स्त्रैणम् । आभरणाय योग्या जटाभारा न हाराः । शयनायोचिताः कुशपूलिका न तूलिकाः । क्रीडायै वरा निर्झरप्रवाहा न वाहाः । प्रार्थनीयाश्च हरप्रसादा न प्रासादाः ।

( ग ) ततः प्रभृति तस्याः सरलीभवन्ति निश्वासा न हासाः । वर्द्धते तन्द्रा न निद्रा । द्रवति स्वेदाऽम्भो न स्तम्भः । मन्दायते स्वरो न स्मरः । वाञ्छा चन्दनाय न स्पन्दनाय । सन्तापशान्तये नलगुणादानम्, न स्नानम् । प्रीयते हारेनाऽऽहारः । सुखायाऽङ्गे लगन्नुद्यानप्रभञ्जनो न जनः ।"

अन्यविधः श्लेषो दृश्यतामपरिसङ्ख्या च—

( क ) यत्र च लतासम्बन्धः कलिकोपक्रमश्च पादपेषु दृश्यते न पुरुषेषु । यत्र चमरकवार्त्ता परमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते न प्रजासु ।

( ख ) यस्याश्च बहुलक्षणाः सुधावन्तो दृश्यन्तेऽन्तः प्रचुराः प्रासादा बहिश्च वारणेन्द्राः । सुशोभितरङ्गाः समालोक्यन्तेऽन्तः सङ्गीतशाला बहिश्च क्रीडाकमलदीर्घिकाः । बहुधान्य-निरुद्धाः कथमप्यभिगम्यन्तेऽन्तः पण्यस्त्रियो बहिश्चक्षेत्रभूमयः । नानांशुकविभूषणाः शोभन्तेऽन्तःसभा बहिश्च सहकारवनराजयः ।

(ग) यस्याञ्च अक्षरसावधानाः कविगोष्ठीषु कवयो विलोक्यन्ते द्यूतस्थानेषु द्यूतकाराः । कान्ता रागप्रियाः करिणो राजद्वारेषु सञ्चरन्ति वेश्याऽङ्गणेषु भुजङ्गाश्च ।

अधुना विरोधो दृश्यताम्—

(क) ब्रह्मण्योऽपि ब्रह्मवित्तापहारी
स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः ।
सद्वेषोऽपि द्वेषनिर्मुक्तचेताः
को वा तादृग् दृश्यते श्रूयते वा ॥

(ख) कृतमन्युभिरपि मन्युशून्यैः, उक्तवृक्तैरपि निरुक्तपरैः, सन्मार्गस्थैरपि गृहस्थैः, सकलत्रैरपि ब्रह्मचारिभिः, अभ्यस्ततिथिभिरप्यतिथिकुशलैः, सामप्रयोगप्रधानैरपि दण्डाऽवलम्बिभिः, शतपथाऽनुसारिभिरप्येकमार्गैर्ब्राह्मणैरध्यासितम् ।

(ग) ससम्मदैरपि न मदाकारमाकलयद्भिः, अक्रीडैरपि च क्रीडापरैः, रोमशैरपि विप्रबालकैर्मुनिभिः परिवृतः, प्रसन्नशङ्करोऽप्यनाश्रितभवः, प्रबुद्धोऽपि अबन्दीकृतजनः, श्रमणोऽप्यजिनपरिग्रहः । इत्यादि ।"

अधुनाऽन्यादृशः सुन्दरतमः श्लेषोदृश्यताम्, योऽतिशयेन प्रशंसनीयः । यत्र विशेषणं त्वेकमेव, परं विशेष्यस्य द्वयी तत्र एकं विशेष्यमेकवचनाऽन्तम्, अपरञ्च बहुवचनान्तम् । विशेषणस्य चोभाभ्यामेव सामानाधिकरण्यम् । तद् यथा—

(क) यस्याऽनवरतम् उत्कृष्टालयः क्रीडावनपादपाः पौरलोकश्च । अपरुषो दायदा वाग्विभवश्च । विमत्सराः समासदो देशश्च । विकसद्रुचयोऽङ्गावयवाः क्रीडापर्वतश्च । अपराजयो मण्डनमणयः सेनासमूहश्च । अगतरुजोवने विनाशमन्वभवन्नितान्तं रिपवः पुष्पप्रकरश्च ॥

(ख) तस्य च मत्ताः करिणः सदामानो न मानिनीलोकः । कृतविटपानमनाः क्रीडोद्यानतरवोनाऽवरोधजनः । कटकाऽलङ्कृतदोषः सीमन्तिन्यो न परिपन्थिकः ॥

(ग) यस्य पद्माऽनुकारिणी कान्तिर्लोचने च । रम्भाप्रतिस्पर्धिनी रूपसम्पत्तिरूरुमण्डले च । सुमनोहारिणी केशकबरी भ्रूभङ्गचक्रे च । भ्रमरकोद्भासिनी ललाटपट्टिका कर्णोत्पले च । प्रवालाऽनुकारिणी दन्तच्छदच्छाया करचरणयुगले च ।

(क) उत्कृष्टाऽलयः, उत्कृष्टाऽऽलयः । अप—रुषः, अ—परुषः । वि—मत्सराः, विमत्—सराः । विकसद्—रुचयः, विकसद्—द्रु—चयः । अप—राजयः, अ—पराजयः । अगत—रुजः, अग—तरु—जः ॥ (ख) स—दामानः, सदा—मानः । कृत—विटपाऽऽनमनाः कृत—विट—पान—मनाः । कटकाऽलङ्कृतदोषः ( भुजाः )·········दोषः ( दोषशब्दैकवचनम् ) ॥ (ग) पद्माऽनुकारिणी ( स्त्रियामेकवचनं क्लीबे द्विवचनम् ) अग्रेऽप्येवमेव ॥

(घ) इह विषमविषाणि पन्नगकुलानि द्रोणीगहनञ्च । इह शरासनकरम्बाणि वनानि पापर्द्धिकपुलिन्दवृन्दञ्च । इह बहुसुखानि शबरवृन्दानि रत्नाकरस्थलञ्च । इह सुमधुराणि फलानि कीचकवनञ्च । इहाऽऽमोदितविश्वककुम्भि कुसुमानि सरित्तीरञ्च । इह सत्प्रभावन्ध्यानि दवगदन्धाऽरण्यानि मुनिमण्डलञ्च ॥

(ङ) यत्र सुपुष्करमालानि क्रीडावापीपयांसि नागयूथञ्च । सारवाणि लीलोद्यानसारसमिथुनानि सेवककविवृन्दञ्च । विलम्बितानि काञ्चनकुसुमदामानि गीतञ्च । अनलसङ्गानि लक्षप्रदीपवर्त्तिमुखानि प्रेक्षणकञ्च ।

(च) इह समकरन्दानि कमलवनानि राजराजन्यचक्रञ्च । इह बहुधामानि नगराणि लोकहृदयञ्च । इह सारम्भाणि कृपाणकुलानि दशरूपकप्रेक्षणञ्च । इह बहुकृपाणि जनमनांसि प्रजापालबलञ्च । इह महाविप्राणि ग्रामपुरपत्तनानि मेषगोष्ठञ्च ।

( छ ) ईदृशीमेव च्छायाङ्गृहीत्वा मयाऽपि लवपुरीय 'उद्योत' नामकसंस्कृतपत्रे भारतवर्षस्य वर्णनमन्वग्राथि; तदपि कृपयाऽवलोक्यम्—

"अत्रैव भारते सदासेवितभानवः सन्ध्यातारो मणिमाणिक्यनिकरश्च; नाना ( ऽऽ ) शुकवयः परिषदो रसालसालवृन्दश्च । विद्यमानपिपठिषो विद्यालया विद्याऽर्थिसार्थश्च ।—शौचकृत्स्नानि ब्राह्मणकुलानि कृत्योत्थितजननिकुरम्बकश्च । बहुलतानि गीतिसद्दोवनानि च । बहुलप्रज्ञानि विप्रकुलञ्चातुर्वर्ण्यजनवृन्दानि च चकासति स्म ॥

(घ) विषमविषाणि ( विषस्य बहुत्वम्, विषाणिन एकत्वम् ) । शराऽसनकरम्बाणि, शरासनकरं बाणि । बहुसुखानि, बहु—सु—खानि । सु—मधुराणि, सुमधु—राणि । ककुम्भि ( ककुभो बहु० कुम्भिशब्दस्यैकव० ) । सत्—प्रभा—वन्ध्यानि, सत्प्रभावं—ध्यानि ॥

(ङ) सुपुष्करमालानि, सुपुष्करम्—आलानि । सारवाणि, सार—वाणि । विलम्बितानि विलम्बि,—तानि । अनल-सङ्गानि, अनलसम्-गानि ॥

( च ) समकरन्दानि; सम-करम्; दानि । बहु-धामानि; बहुधामानि । साऽऽरम्भाणि; सारम्-भाणि । बहु-कृपाणि ( कृपायुक्तानि, कृपाणयुक्तञ्च ) । महाविप्राणि; महाऽवि-प्राणि ॥ ( छ ) सदासेवितो भानुर्यैस्ते; सदासेवितयाभासा नवः । नाना आशुकवयो यासु ताः; नाना शुकवयांसि यस्मिँस्तत् । विद्यमानाः पिपठिषो ( पठितुमिच्छवः, क्विप् ) येषु ते; विद्यमाना पिपठिषा ( पठितुमिच्छा, पिपठिषतेर-प्रत्ययः ) यस्य सः । शौचेन कृत्स्नानि, शौचकृत्-स्नानि च । बहुल-तानि; बहु-लतानि । बहुलं प्रज्ञानं यस्य तद्; बहुला प्रज्ञा येषां तानि ॥ इति सङ्क्षेपेणाऽर्थश्लेषा ।

अधुनाऽन्यविधश्श्लेषो दृश्यताम् । यत्र विशेष्यद्वयमभिन्नविभक्तिकं स्यात् तद्विशेषणञ्चैकमेव स्यात् ।—

(१) यस्याः सुमधुरया वाचा सदृशी शोभते कण्ठे कुसुममालिका । अलिकालयाऽप्यलकवल्लरीमालया सह विराजते तिलकमञ्जरी ॥

(२) सभ्रमरया कूलकीचकवेणुलतया सदृशी नावातरणयोग्या महानदी ।

(३) इह अकरभया सिंहलद्वीपभुवा सदृशी, बहुलवा सदृशी, बहुलदया त्यागिजनतया तुल्या, भूनिखातकृपणजननिक्षेपकुम्भिकया समाना प्रजा ॥

सम्प्रत्यन्यविधं गद्यं दृश्यताम्—

"मागा इत्यशकुनम्, गच्छेति निष्ठुरता, यदिष्टं तद्विधीयतामित्यौदासीन्यम्, आदर्शनात् प्रियोऽसीति क्रियाशून्याऽऽलापः, कस्त्वमेवंविधो दिव्यवाक् पटिरत्नमित्यप्रस्तुतप्रश्नः, केनोऽर्थीत्यप्रक्रान्तम्, किन्ते प्रियमाचरामीत्युपचारवचनम्, कृतोपकारोऽसीति प्रत्यक्षस्तुतिः ।"

साम्प्रतम्पद्येषु श्लेषादिच्छटा दृश्यताम्—

(A) लब्धाऽर्धचन्द्र ईशः कृतकं समयञ्च पौरुषं विष्णोः ।
ब्रह्माऽपि नाभिजातः केनोपमिमीमहे नृप ! भवन्तम् ॥

(B) वेधा वेदनयाश्लिष्टो गोविन्दश्च गदाधरः ।
शम्भुः शूली विषादी च देव ! केनोपमीयसे ॥

(C) अनुभवतु चिराय चञ्चलाऽत्री—
रसपरिणामफलानि गोपपुत्री ।
अपसरति म.ोद्यमेन यस्याः
कथमपि सम्प्रति नैप धेनुरागः ॥

(D) जननीति मुदितमनसा सततं सुखामिना कृतानन्दा ।
सा नगरी, नगतनया गौरीव मनोहरा भाति ॥

(E) अप्रगल्भाः पदन्यासे जननीरागहेतवः ।
सन्त्येके बहुलालापाः कवयो बालका इव ॥

(F) नलोऽपि माम्प्रत्यनलोऽसि यत्तद्
भवादृशां नैषध ! नैव धर्म्मः ।
तथाऽबलानां बलवद्ग्रहीतुं
न मानसम्मानसमुद्रयुक्तम् ॥

(G) अभिलषति नालमशनं स्वपिति नवाम्भोजपत्रशयनेऽपि ।
नीरागमना नृपते ! तव रिपुवनितायते हंसी ।

( H ) अहीनां मालिकाम्बिभ्रत्तथापीताम्बरं वपुः ।
हरो हरिश्च राजेन्द्र ! करोतु तव मङ्गलम् ॥

( I ) नित्यमुद्वहते तुभ्यमन्तः सारङ्गरञ्जितम् ।
भूतिपाण्डुर गोवाह ! सोम ! स्वामिन्नमो नमः ॥

( J ) वरसहकारकरञ्जक-वीरतरोऽशोकमदनपुन्नाग ।
विविधद्रुममय राजन् ! कथमसि न विभीतकः कोऽपि ॥

अधुना व्याजनिन्दाया आदर्शः श्रूयताम्—

( अ ) न यशोभाजन ! कृतकुटीक-कुशास्त्रग्राहिन्नवेदनोद्धारङ्कृतवानसि । सर्व्वदा ( ऽ ) नादेयेषु प्रतिकूलवर्त्तिषु जले ( ङे ) षु रतिं कुर्व्वाणः पाठीनदिसक्तो धीवर इवोपलक्षसे । कुरङ्गेषु प्रीतिं बध्नासि । कदम्बैः कुरबकैर्वंशुकवल्लीकैः पलाशप्रायैः कुजन्मभिः सह संवससि । यस्य ते सदाचार ( ! ) विरुद्धः पुष्पवत् कान्ताराग एव प्रियः ।

( आ ) वृत्तमुक्तोऽयं हारः, दीपालयमङ्गदम्,
जघन्यपदाश्रयं काञ्चीदाम । सदापदाधिष्ठानं नूपुरम् ॥

इत्यादिर्व्वैलक्षण्यास्ऽऽदर्शः सङ्क्षेपेण विवृतः । ईदृश इतोऽप्यधिका वा चमत्कारास्तस्याञ्चम्प्वां बाहुल्येन विराजन्ते । यत्सहन्तानुद्धिर्भोर्ययमत्र; नह्यस्य पद्यस्य एतद्वर्णीयाः सर्वा एव सङ्ख्यास्समाप्नुयुः । अत एवाऽहं नलचम्पवलोकनाऽर्थम्पाठकाननुरुणध्मि । न जाने, पुण्यश्लोकनलविचित्रचरित्रचित्रचित्रण एव कोऽपि वाग्देव्याः प्रसादोपभावः, यद्—यः कोऽप्यमुष्य पुण्यश्लोके पुण्यश्लोकमुपश्लोकयति, तस्यैव रचना चमत्कारकारिका जाजायते । तत्र श्रीहर्षसन्दृब्धं श्रीनैषधीयचरितमेव विलोक्यताम्, तत्र कीदृशोऽनुप्रासभासाविलासः, कीदृक्षश्श्लेषप्रश्लेषः, कीदृश्यनल्पकल्पना, कीदृक् शिरोविघूर्णकशब्दाऽर्थयोर्गरिमा । ततो द्वैतीयीकी नलस्पृक्कविता 'नलोदय' काव्यमवलोक्यताम् । तत्र कीदृशो यमकादिप्रपञ्चः । तस्य प्रतिसर्गान्तिमां पद्यचतुष्टयेन दिङ्मात्रमुदाह्रियते—

"शशिना सम-हासमहा नगरे जनतासमहासमहास्तमुदम् ।
अतिभासुरया सुरया व्यहरद्व्यतनोत् सुरया सुरयागमपि ॥ १ ॥"

स्वयंवरादनन्तरं महीमहीमहीनधीः ।
ररक्ष नैषधस्तदा ररास राजराजराः ॥ २ ॥

पदापदा परिभ्रमश्रयेनयाऽऽपदाऽऽपदा ।
वनावनाऽवनाथवत् सजीवना वनाऽभवत् ॥ ३ ॥

नलेन पुण्यैतायतायतायता पुरेव सा ।

सदा यमुन्महामहामहामहास्तसम्पदम् ॥ ४ ॥

नलचम्पाश्च दृष्ट एवाऽऽदर्शश्रीमद्भिः । परञ्चेदस्याऽयं व्यतिकरो-यद् इयन्नचम्पूरपूर्णाऽस्ति । तत्र विविधास्सन्ति प्रवादाः । केचिदाचक्षते, यद् एतत्प्रणेता मध्य एव मृतः । एके चाऽभिदधति, यद्—"अयमधीतकुकर्माऽनधीतविद्यश्चासीद् । अस्य च पिता देवादित्यनामा महाविद्वानवर्त्तिष्ट, राजपण्डितश्च । एकदा तत्पितरं ग्रामाऽन्तरगतं विभाव्य तदुद्वेजितकश्चिद् विपश्चिद् अदसीयनृपोपकण्ठमागत्य 'राजन् ! मया साकङ्कस्याऽपि बुधस्य शास्त्रार्थङ्कारय, अन्यथा जयपत्रन्देहि' इति प्रत्यपीपदद् । राजा च स्वपण्डिताऽभावात् तत्तनुजन्तुयं त्रिविक्रमभट्टमेव आजूहवत् । स च सरस्वतीं प्रार्थयत । सा च 'यावत्त्वत्पित्रागमनं त्वन्मुखे वसामी' ति प्रोचे । अथ प्रातस्सरस्वतीप्रसादोऽयमागन्तुकपण्डितं पराजित्य 'यावत्पित्रागमनं मन्मुखे सरस्वती; तावद् यशसे नलचम्पूमेव निबध्नामी' ति निश्चिकाय । एवम्प्रवृत्तस्याऽस्य सप्तमोच्छ्वाससमाप्तिदिवस एव ग्रन्थसमाप्तिप्रतिबन्धकपित्रागमनेन मुखाऽरविन्दान्निर्जगाम सरस्वती । तेनैव चम्पूग्रन्थोऽसमाप्तकथ एव स्थित इति"।

अस्तु । यत् किमपि स्याद्; अस्य कर्त्रे परिश्रमभूयिष्ठतां न केऽप्यपलपितुं शक्नुवन्ति । अधुनाऽस्या ईदृश्या एव पूर्त्याऽवश्यमेव भाव्यम् । यदा किल वाराणसेया 'कविचक्रवर्त्तिनः' श्रीपण्डितदेवीप्रसादशर्म्मशुक्ला भारतसम्राजा 'महामहोपाध्याये' त्युपाधिना सम्मानिताः; तदा हर्षप्रकर्षसन्निकर्षम्प्रकटयता मया तेषाम्पार्श्वे 'नलचम्पू' पूर्त्यैः पत्रद्वारा प्रार्थि; यतस्तत्सन्दृब्धे 'पुण्यश्लोकोदय' महानाटकेऽहमीदृशीं दृष्टां स्थाने स्थानेऽद्राक्षम् । तत्र तैरित्थमुत्तीर्णम्पद्येषु—

"श्रीदीनानाथशास्त्रिन् ! प्रणतितिरतिप्रीतचित्तेन श्रीमन् !
अङ्गीकार्य्या त्वयामे, कुशलमिह तवाऽनुग्रहेणाऽस्ति नूनम् ॥
तत्त्वाऽप्यस्तु, पत्रं सुखनिकरकरं तावकीनं मयाऽऽप्तं
तत्संवीक्ष्य प्रतीक्ष्य ! प्रचुरगुणनिधे ! सुप्रसन्नोऽस्मि जातः ॥ १ ॥
श्रीमन्नेतत्पदवी प्राप्तेः पर्य्याप्तकारणं तावद् ॥
भवदनुकम्पामात्रं मन्ये सौजन्यशेवधे ! मान्य ! ॥ २ ॥
श्रीत्रिविक्रमभट्टेन प्रणीता श्लेषशालिनी ॥
असमाप्तकथायाऽस्ति नलचम्पूः प्रकाशिता ॥ ३ ॥
मनीषिन् ! स्वयमेवाऽहं तत्पूर्त्तिं कर्तुमुत्तमाम् ।

कामये, किन्तु दुर्दैवं प्रतिबध्नाति हा ! भृशम् ॥ ४ ॥
तथाऽप्यवसरे प्राप्तेऽनुकूले किल कोविद !
भवदाज्ञामिमां मान्यां पालयिष्यामि सर्वथा ॥ ५ ॥
एवमेव दयादृष्टिः करणीया ममोपरि ।
श्रीमता भवता शश्वद् इयं मे प्रार्थना बुध ! ॥ ६ ॥

परस्तादहं पत्रान्तरं तदीयसन्निधौ प्राहैषम्; यद्—अस्याः श्लेषाऽऽदिकं सर्वथा नलचम्पूवदेव स्यादक्षराणामितस्ततो विधानेन । तथाऽपह्नुत्यतिशयोक्ति-विशेषोक्ति-विभावनोत्प्रेक्षाऽनुप्रासभासाञ्च विलासो नैषधचरितवत् स्याद् । व्याकृतिच्छटा च भट्टिकाव्यवत् स्याद् । एवं सर्वगुणगणसम्पन्नैवाऽस्याः पूर्त्तिर्भवतु । तत्र त इत्थमुदनीनरन् ।—

"स्वस्ति श्रीमद्गुरुपुण्यस्वरूपान्
दीनानाथाऽज्ञाश्रिणोऽहं नमामि ॥
नव्यं भव्यं भूरि भात्यत्र तत्राऽ—
प्यास्तां विश्वाऽधीश्वराऽनुग्रहात्तत् ॥ १ ॥
श्रीमन् ! विद्वद्वर्य्य ! पत्रं त्वदीयं
लब्धं दृब्धं चारुलेखैर्मयाऽर्हन् !
ज्ञाता सर्वा सुप्रवृत्तिर्मदीये
स्वान्तेऽतान्तेऽभूत् प्रहर्षप्रकर्षः ॥ २ ॥
यद्लेखि लेख गुरुकल्प ! कल्पक—
प्रवर ! त्वया खलु मया करिष्यते ।
निखिलं तदेव यदि विश्वकारणं
भविताऽनुकूलमिह दिष्टमिष्टकृत् ॥ ३ ॥
विद्वन् ! विधेया भवताऽनुकम्पा
देया शुभाऽऽशीः सुखदा सदा मे ॥
इत्यर्थयेऽहं किल तावकीनो
देवीप्रसादः सुकविः प्रणम्रः ॥ ४ ॥" इति ॥

एवमेवाऽहमनेनैव लेखेन 'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्ति' रिति सूत्ररूपपद्यस्य अपवादानां ( प्रत्युदाहरणानां ) महामहोपाध्यायपण्डितवर-श्रीगिरिधरशर्म्मचतुर्वेदन्यायशास्त्रिव्याकरणाचार्य्याणामपि पुरस्तात् प्रार्थनामिमामुपस्थापयामि; यत्—तेऽपि कृपयाऽस्मिन् विनोदविषयेऽवश्यमेव भागङ्गृहीत्वाऽस्मत्कार्यं सभाजयन्तु । अथवाऽन्योऽपि कोऽपि साऽवकाशोऽस्मिन्नलङ्कर्म्मीणो विद्वानस्मत्प्रार्थनयाऽनया तत्पूर्त्तिं तादृशीङ्कर्त्तुमुपगच्छेत यदि; तर्हि वयं तन्महाभागं परश्शतैर्धन्यवादैर्भूषयिष्याम—इति किमितोऽधिकेन ॥ इति ॥

इयमीदृशी दशा अन्ययोर्द्वयोर्मुक्तावस्थयोस्तयोः कथं सम्भवितुं शक्या। जीवन्मुक्तावस्थातिरिक्ते द्वे मुक्तावस्थे स्तः। एका ऐशकर्मप्रभावतो ब्रह्मादिदेवावस्था, द्वितीया च जीवकर्ममहिम्ना शुक्लमार्गेण सूर्य्यमण्डलभेदिनामवस्थेति।

तत्र प्रथमाया ब्रह्माद्यवस्थाया मीमांसा उदाहरणतो ज्ञेया। यथा—शास्त्रतो विज्ञायते-यत् भक्तकुलचूडामणिर्हनूमान् परस्मिन् जन्मनि ब्रह्मदेवपदे प्रतिष्ठितो भवितेति। ब्रह्मपदं हि ऐशकर्म्मणा प्राप्यते। तच्च जीवभावराहित्येन हेतुना सगुणब्रह्मपदत्वेनैव व्यवह्रियते। अत्र महावीरस्य हनूमतः पूर्वजन्मार्जितः प्रबलः शुभः संस्कारः, वर्तमानकालिकः सिद्धावस्थायां जायमानोऽलौकिकः शुभः संस्कारश्च, द्वावपीमौ सहभवौ तस्य प्रबलतपस्यायाः संस्कारात् प्रारब्धरूपेण परिणतौ सन्तौ तस्मै इमां महापदवीं प्रदास्यतः। अवशिष्टाश्च संस्कारा ब्रह्माण्डप्रकृतिमाश्रयिष्यन्ति। स्वाभाविकास्तु संस्काराः पूर्णतामुपेताः सगुणब्रह्मपदवीमुत्पादयिष्यन्ति।

एवञ्च जैवकर्मणा अत्युग्रतपोदानयज्ञादिसाहाय्यतः सप्तमे ऊर्ध्वलोके समुपेत्य सूर्य्यमण्डलं भिन्दन् शुक्लगतिसाहाय्येन शरभङ्गो महर्षिः भीष्मश्च पाण्डवपितामहस्तथाऽन्ये च यदा मुक्तिपदं प्राप्नुवन्, तदापीदमेवोदाहरणमवगमनीयम्। यच्छुक्लगत्युत्पादकः कश्चनोग्रोऽस्वाभाविकः शुभसंस्कार एवासीद्। स्वाभाविकश्च संस्कारस्तेभ्यो मुक्तिं वितीर्य्य हानमुपगत आसीत्। तात्पर्यतो जीवदशायामपि केचन संस्काराः कालमहिम्ना हानमुपयान्ति मुक्तावस्थायाञ्च स्वाभाविकस्य संस्कारस्य जाज्वल्यमानमुदाहरणम् अस्य विज्ञानस्य पर्य्यालोचनया समुदेति॥ १३४॥

इदानीं द्वितीयं क्रममाह—

## प्रतिक्रियातोऽङ्कुरवत्॥ १३५॥

संस्कारहानस्य द्वितीयस्तु क्रमोऽङ्कुरोत्पत्तिवज्ज्ञेयः। यथा हि एकस्माद्बीजादङ्कुरोत्पत्तौ सत्यां तरोरुत्पत्तिर्जायते बीजस्य च विनाशस्तथैव संस्कारस्यापि स्वाभाविकोऽयं क्रमो यद् आत्मना क्रियोत्पत्तिं कृत्वा तदनु विनश्यतीति। ये हि संस्काराः समानश्रेणिगाञ्जात्यायुर्भोगान्समुत्पादयन्तः प्रारब्धरूपतामासाद्य क्रियां समुत्पादयन्ति, ते हि तज्जीवनस्वरूपाञ्जात्यायुर्भोगात्मकान् परिणामान्समुत्पाद्य तज्जीवनावसाने स्वयमपि हानमुपगच्छन्त्येव। गमागमचक्रस्य स्थैर्य्य-सम्पादन-समयेऽस्मिन् मृत्युलोकेऽन्यासु वा भोगभूमिषु संस्का-

रस्यायमेव क्रमः प्राबल्येन प्रचलति। मोक्षदशायाः पूर्वोक्तप्रकारत्रयेऽपि जीवन्मुक्तगतौ, त्रिमूर्तिगतौ शुक्लमार्गदशायाञ्च प्रारब्धतः परिणमन्तः संस्काराः कथं विलयं व्रजन्तीति पूर्वसूत्रे साधु समाहितम् ॥ १३५ ॥

सम्प्रति तृतीयं क्रममभिधत्ते—

अन्यतोऽपि कीटसम्पर्कवत् ॥ १३६ ॥

संस्कारहानस्य तृतीयं क्रमं बीजकीटसम्पर्कोदाहरणात आह। यथा च कीटानुविद्धं बीजं नाङ्कुरोत्पादनायालम् तथैव केनापि स्वाभाविकेन हेतुना संस्काराणां क्रियोत्पादिनी शक्तिरेव विनाशिता स्यात्तदापि संस्कारहानमेव भवतीति ज्ञेयम्।

इतः प्राक् हानस्य क्रमद्वयं प्रतिपादितम्। तत्र कालाश्रयेण जायमानस्य हानक्रमस्य सम्बन्धः प्राधान्येन स्वाभाविकसंस्कारेण, तथा मुक्तात्मनो गत्या सहैवावबोधनीयः। द्वितीयश्चाङ्कुरोत्पत्त्या जायमानः स्वाभाविकः क्रमो यो निगदितः, तस्य प्रधानतो बद्धजीवेन सम्बन्धोऽस्वाभाविकसंस्कारसम्बन्धतोऽवसेयः। अस्मिन् सूत्रे वर्णितस्तृतीयः क्रमस्तु केवलं मुक्तात्मना अस्वाभाविकेन संस्कारेण च सम्बध्नाति। फलतो मुक्तात्मनि अस्वाभाविकः संस्कारः कथं विलीनो भवतीत्येतन्निदर्शकमेवेदं विज्ञानम्।

मुक्तात्मस्तु ज्ञानाग्निना भर्जिताः कथिताः क्रियमाणाः सञ्चिता वा संस्काराः स्वाङ्कुरोत्पादिकां शक्तिमेवोन्मूलयन्ति। जीवन्मुक्तपदवीमधिगता अपि महात्मानः स्वाभाविकसंस्काराधीनाः निर्वासनाः सन्तो यत् कर्म कुर्वन्ति न तेन कर्मबीजात्मका नूतनाः संस्काराः प्रादुर्भवन्ति। कदाचन प्रादुर्भवन्तोऽपि भर्जितबीजवदनुपयुक्ता एव भवन्ति। यथा हि—कीटानुविद्धं भर्जितं वा बीजम् अङ्कुरोत्पादिकया शक्त्या विहीनं भवति तथैव मुक्तात्मनां ज्ञानाग्निना दग्धाः क्रियमाणाः संस्कारा हानमेवच्छन्ति।

शङ्कासमाधानार्थमिदमभिधत्ते यथा भर्जितबीजादङ्कुरोत्पत्त्यभावेऽपि क्षुधार्त्तस्य क्षुन्निवृत्तिरन्यकार्यञ्च सिध्यत्येव, तथैव मुक्तात्मनां क्रियमाणाः संस्काराः कियतां क्षणानां कृते स्मृतिमुत्पादयितुमर्हन्ति। परन्तु चरमतो वासनाविरहितानां जीवन्मुक्तानां मनसि क्लीवत्वं जुषमाणे सति नैव क्रियमाणकर्माणि सृष्टिमुत्पादयितुमलम्भवितुमर्हन्ति, नात्राणुरपि सन्देहः। उक्तञ्च श्रीमद्भगवता श्रीगीतोपनिषदि—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन"।

अन्यत्राप्युपनिषदि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

छान्दोग्येऽपि—

नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य-
आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्त इति ॥१३६॥

प्रसङ्गतः शङ्कासमाधाने ब्रवीति—

**अनुष्ठानादेः कर्मनिरासः ॥१३७॥**

ननु मुक्तात्मन्येवान्यैरुपायैः संस्कारहानं सम्पद्यत इतिनियमे बद्धजीवानां कृते प्रायश्चित्तानुष्ठानादीनां कथं सार्थक्यम्? इति प्रश्ने समुत्तरयति—यद् अनुष्ठानादिना संस्कारक्षयो न भवति केवलं तदाघात एव व्याहन्यते। यदि प्रायश्चित्तानुष्ठानादिना संस्कारकर्मणो हानिसंभावना स्यात्तदेयमाशङ्का समुचिता स्याद्। अत्र त्वीदृश्याः शङ्काया अवसर एव नास्ति। यथा हि युध्यतो र्गजयोर्मध्ये प्रबलस्यापि गजस्योन्मत्तगजेन पलायनं कारयन्ति यतः स न कामपि हानिं विदध्यादिति। तथैवानुष्ठानादिकर्म्मणाऽन्यानि कर्माणि अपसार्य्यन्ते। तान्यशुभकर्म्माणि वस्तुतस्तु न नश्यन्ति किन्तु दूरीभूय तिष्ठन्ति। ते च संस्काराः फलोन्मुखशक्ति-विरहिता भवन्ति ॥ १३७ ॥

अन्यच्चाह—

**असाधारणधर्म्मतोऽपि ॥ १३८ ॥**

असाधारणधर्मस्यासाधारणशक्त्याऽपि एवंविधो निरासः सम्भाव्यते। असाधारणधर्म्मस्य लक्षणं तस्य विस्तृतं विवेचनं च प्रथमे पादे स्फुटं प्रतिपादितम्। पूर्वजन्मार्जितशुभकर्मवेगेन मनुष्ये यदाऽसाधारण-योगशक्तिः स्वत एवोदेति। तदा तेनासाधारणलौकिकशक्तिबलेनापि प्रायश्चित्तादिकर्मशक्तिसमुदाहरणानुसारम् असाधारणधर्म्माधिकारिणी स्त्री वा पुरुषो वा स्वकर्मनिरासं कर्तुं शक्नुतः।

राजर्षिर्विश्वामित्रोऽसाधारणयोगशक्त्याः तपःशक्त्याश्च प्रभावेण एकस्मिन्नेव जन्मनि क्षत्रियत्वाद् ब्राह्मणतामधिगन्तुं समर्थो बभूव। अन्ये च क्रमद्रष्टारो महर्षयस्तं तथैवाङ्गीचक्रुः। तथैवाऽसाधारणधर्म्माधिकारी पुमान् कर्मनिरासं कर्तुं शक्नोति। असाधारणशक्ति संस्कारं परिवर्तयन् महर्षिर्विश्वामित्रो यदेकपदे एव क्षत्रियसंस्कारं व्यावर्तयन् क्षत्रियशरीरञ्च ब्राह्मणपरमाणुभिः सम्भृतं चकार, तदसाधारणधर्मतः संस्कारपरिवर्तनस्य प्रबलमु-

दाहरणम् । तथैव नारीवर्गेऽपि द्रौपद्या उदाहरणमूहनीयम् । साधारणस्त्रीवर्गे तु कदाप्येवं न सम्भवति, यदेकस्मिन्नेव जन्मनि पञ्चानां पुरुषाणां पतित्वेन स्वीकृतावपि सतीत्वधर्मस्यादर्शस्तत्र तिष्ठेदाहो बहुभिः पुरुषैः सह सम्बन्धकरणेन सतीत्वपोषकः संस्कारश्च स्थातुमर्हेत् । परन्तु सर्वमप्येतद् द्रौपद्यां साधु निःसन्दिग्धमासीत् । यतो हि आदर्शपतिव्रता द्रौपदी स्वपूर्वार्जिततपोमहिम्ना स्वालौकिकेन योगशक्तिप्रभावेण च द्वाभ्यामेव मासाभ्यां स्वान्तःकरणसंस्कारराशीन् परिवर्तयितुं समर्था भवति स्म । स्वालौकिक्यानया शक्त्या चैकस्य पत्युः सेवाकरणावसरेऽपरस्य पत्युः संस्कारमेकपद एव सर्वथा विलोपयति स्म । येनासाधारणधर्मप्रभावतः प्रायेण चैवंविधेन स्वचित्ताधिपत्यबलेन एकस्मिन्नपि काले बहुभिः पतिभिः सम्बन्धं भजमानापि सा द्रौपदी स्वपातिव्रत्यमक्षुण्णमुवाह तपोमूलकः स सतीधर्मश्च तस्यां सततं जागरूक एवासीदिति ।

अहल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा ।
पञ्चकन्या स्मरेन्नित्यं महापातकनाशनम् ॥ इति—

महापुरुषैः प्रातःस्मरणीय-भारतीयार्यललनास्वादर्शसती रमणी चिरपूज्या गण्यते । अनेनोदाहरणेन स्त्रीजातावसाधारणधर्मप्रभावतः कर्मनिरासः प्रमाणितो भवति । एवञ्च यदा पुमान् पूर्वार्जिततपःप्रभावतोऽसाधारणधर्माधिकारी स्यात्तदा प्रायश्चित्तशक्त्यनुरूपतः कर्मनिरासं कर्तुं प्रभवतीति सुनिर्णीतः पन्थाः ॥ १३८ ॥

सम्प्रति संस्कारतोऽङ्कुरोत्पत्तेः प्रथमं प्रकारमाह—

## त्रैविध्यमङ्कुरोद्गमस्य भावभेदात् ॥१३९॥

प्रथमतः संस्कारहानस्य ततश्च संस्कारनिरासस्य प्रकारमभिधाय सम्प्रति संस्कारबीजतोऽङ्कुरोत्पत्तेः प्रथमं प्रकारं प्रख्यापयति । संसारेऽस्मिन् सर्वेऽपि पदार्थाः भावत्रयात्मका इतितदनुरूपमेव सांसारिकं सुखं दुःखञ्च त्रिविधमेव गीयते आध्यात्मिकाधिदैविकाधिभौतिकभेदात् । इत्थञ्च त्रिविधस्य सुखस्य त्रिविधस्य च दुःखस्य समुदितस्य षड्विधस्यापि भोगसम्पत्तये पृथग्विधा एवाङ्कुरोत्पत्तयः प्ररोहन्तीति न विस्मरणीयम् ।

अङ्कुरोत्पत्तिविज्ञान-ज्ञानाय कर्मबीजात्मकस्य संस्कारस्य वैज्ञानिकं रहस्यं परिशीलनीयम् । प्रति-पिण्डमन्तःकरणचित्तांश एकमीदृग् यन्त्रं विद्यते यत्राध्यात्मिकस्याहो आधिदैविकस्य उताधिभौतिकस्य वा पदार्थस्य, तथा मानसिक-

स्याथवा शारीरकस्य भावस्य, स्थूलस्य सूक्ष्मस्य वा द्रव्यजातस्य प्रतिकृतिः तत्पिण्डान्तःकरणचिन्तासमकालमेव तस्मिन् बीजरूपेण प्रतिविम्बिता भवति स च तत्राङ्कितः संस्कारश्चित्ताकाशे चिदाकाशे महाकाशे च सर्वत्रैव व्याप्नोति ।

एवमेवास्य संसारस्य कोऽपि भावः, काऽपि वृत्तिः कोऽपि पदार्थः कस्यापि पिण्डस्यान्तःकरणे कथमपि समुपस्थितश्चेत् स न कदापि विनष्टुमर्हति तेनैव बीजेन च सुखदायिनी दुःखदायिनी वा त्रिभावात्मिकाऽङ्कुरोत्पत्तिरवश्यं भवति । इत्थञ्च कारणरूपतो भावमयस्य जगतोऽङ्कुरोत्पत्तिरपि षड्धा गणयितुं शक्यत इति ॥ १३६ ॥

अधुना द्वितीयं प्रकारमाख्याति—

**चातुर्विध्यमपि वर्गभेदात् ॥ १४० ॥**

अस्मिञ्जगति वासनाया लक्ष्यभूतः कामार्थधर्ममोक्षभेदनाश्चतुर्विधश्चतुर्वर्गः प्रसिद्धः । एतेषां चतुर्णामानुकूल्येन प्रातिकूल्येन च सुखदुःखयोरपि पृथक् श्रेण्यो विभिद्यन्ते । यथा कामस्य प्राप्त्यप्राप्ती अर्थस्याधिगमानधिगमौ धर्मस्यानुष्ठाने सौकर्य्यासौकर्य्ये मोक्षाधिगतौ सौविध्यासौविध्ये इत्येवं द्वितीयस्या अङ्कुरोत्पत्तेः प्रकाराः द्विगुणिताश्चत्वारोऽष्टौ भवन्ति ॥ १४० ॥

प्रसङ्गतोऽभिदधाति—

**तस्माद्वस्मृतौ वैचित्र्यं कर्मविपाकस्य ॥ १४१ ॥**

तस्माद् अङ्कुरोत्पत्ते भेदात् स्मृतौ धर्म्मशास्त्रे कर्मविपाकस्य कर्मपरिणामस्य वैचित्र्यं वैलक्षण्यं समुपलभ्यत इति सूत्रार्थः ।

वेदे तत्सम्मतधर्म्मशास्त्रादिषु च पूर्वसंस्कारादङ्कुरोत्पत्तिरूपाणां कर्मविपाकानां विचित्राणि स्वरूपाण्युपलभ्यन्ते । उपर्युक्त-त्रिभावात्मके चतुर्भावात्मके वाङ्कुरोत्पत्तिवर्गे तस्य शास्त्रादिषु बहुविधं वैलक्षण्यपलभ्यते । त्रिभावानुसारेण त्रिविधं दुःखं वर्गविचारेण चतुर्विधं दुःखमिति मिलित्वा सप्तविधं दुःखं भवति । एवञ्च भावानुसारेणापि त्रिविधं सुखं वर्गानुक्रमेण चतुर्विधं सुखमिति सुखस्यापि सप्तश्रेण्यो भवन्ति । अतश्च भोगतोऽङ्कुरोत्पत्तेश्चतुर्दशभेदा भवन्ति । ते च पुनरनेकधा भिद्यन्ते । प्रथमतः त्रिगुणभेदेनैषामनेके भेदास्ततश्च कर्म्मबलतारतम्यतोऽप्यनेके विचित्रा भेदा उद्भवन्ति । इत्थञ्च संस्काराणां बहुधा विचित्रता स्वत एवोद्भवन्ति । सर्गे चेदृशं वैचित्र्यं सर्वत्रैव दृश्यते । यथा भुवनानां चतुर्दशत्वेऽपि तत्र भोगायतनपिण्डानामगणितत्वं वैलक्षण्यञ्च सर्वलोकप्रसिद्धम् । तथैवाङ्कुरोत्पत्तिश्रेणिसंख्यायाः चतुर्दशत्वेऽपि तद्वैचित्र्यं बहुधा शास्त्रेषूपलभ्यते । तत्र दिङ्मात्रमत्राधो निर्दिश्यते—

यथोग्रकर्मणां विपाकाः ।

अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः ।
दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च ॥
हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः ।
परस्परादिनः स्तेनाः प्रेतान्त्यस्त्रीनिषेविणः ॥
विपाकः कर्मणां प्रेत्य केषाञ्चिदिह जायते ।
इह वाऽमुत्र वै केषां भावास्तत्र प्रयोजनम् ॥

अपरञ्च—

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् ।
ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥
संयोगं पतितै र्गत्वा परस्यैव च योषितम् ।
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
मणिमुक्ताप्रबालानि हृत्वा लोभेन मानवः ॥
विविधानि च रत्नानि जायते हेमकर्तृषु ।
यः स्वभार्य्यां परित्यज्य निर्दोषां कुलसम्भवाम् ॥
परदाररतो वा स्यादन्यां वा कुरुते स्त्रियम् ।
सोऽन्यजन्मनि देवेशि ! स्त्री भूत्वा विधवा भवेत् ॥
या नारी तु पतिं त्यक्त्वा मनोवाक्कायकर्मभिः ।
रहः करोति वै जारं गत्वा वा पुरुषान्तरम् ॥
तेन कर्मविपाकेन सा नारी विधवा भवेत् ।
व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ॥
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ।
कूटसाक्षी भवेन्मूकः काणः स्यात्पंक्तिभेदकः ॥
अनोष्ठः स्याद्विवाहघ्नो जन्मान्धः पुस्तकं हरन् ।
गोब्राह्मणपदाघातात्खञ्जः पङ्गुश्च जायते ॥
गद्गदोऽनृतवादी स्यात्तच्छ्रोता बधिरो भवेत् ।
विहितस्याऽननुष्ठानान् निन्दितस्य च सेवनात् ॥
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ।
आत्मज्ञः शौचवान्दाता तपस्वी विजितेन्द्रियः ॥
धर्मविद्वेदविद्यावित् सात्त्विको देवयोनिताम् ।

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥
हित्वा सुखं मनसश्चाप्रियाणि देवः शक्रः कर्मणा श्रैष्ठ्यमाप।
बृहस्पतिर्ब्रह्मचर्य्यं चचार समाहितः संशितात्मा यथावत्॥
हित्वा सुखं प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः।
"अस्तेय-प्रतिष्ठायां सर्वरत्नोपस्थानम्"।
"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः"॥
अहिंसया च भूतानां परमायुः प्रवर्द्धते।
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्॥
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै।
वेदाभ्यास-तपोज्ञानमिन्द्रियाणाञ्च संयमः।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम्।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
अथवा योगिनामेव कुले भवति धीमताम्।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते॥

अनेनोपर्य्युक्तोदाहरणेन संस्कारवैचित्र्यस्य किञ्चिदवगमनं भवति। ये केचनान्तर्दृष्टिसम्पन्ना महान्तो मानवा यदि कर्मणा संस्कारस्य संस्कारेण च कर्मणोऽवगतिं कर्तुमिच्छन्ति चेत्पूर्वोक्त-विज्ञानानुसारतः संयमसाहाय्येनानुसन्धातुमर्हन्ति॥ १४१॥

संस्कारोत्पत्तेर्मूलनिदानमनुसन्दधाति—

**दृश्यजाड्यद्रष्टृचितौ संस्कारनिदानम्॥ १४२॥**

क्रियोत्पत्तिर्यथा स्वाभाविकी तथैव क्रियाबीजात्मकसंस्कारोत्पत्तिरपि स्वाभाविकी। कारणमेतस्येदमेव यद् दृश्यात्मिका प्रकृतिर्जडरूपा द्रष्टृरूपः पुरुषस्तु चिन्मयरूपः। प्रकृतेश्च त्रिगुणात्मिकाया परिणामः स्वाभाविकः।

प्रकृतिर्यदा परिणमते तत्परिणामेन च या क्रिया समुत्पद्यते सैव कर्मशब्दभाक् प्रकृतिपरिणामजन्यं कर्म यदा तद्द्रष्टा पुरुषः समीक्षते, तेनेक्षणेन तस्मिन् यत् प्रतिबिम्बं प्रकाशते तेनैव सह संस्कारस्य सम्बन्ध इति श्रुतावप्युदीरितम्।

'स ऐक्षत एकोऽहं बहु स्याम्'। पुरुषस्य चैतन्यात् प्रकृतेश्च जडत्वाद् इदं स्वभावसिद्धम्।

ननु पुरुषस्य निःसङ्गतया प्रकृतिस्पन्दजन्यक्रियायाः कथं तस्मिन् सम्बन्ध इति प्रश्ने समाहितिं ब्रूते। परब्रह्मशब्दवाच्ये उताहो परमात्माह्वे आहोस्वित् परमपुरुषनामके वा निर्गुणे तस्मिन्नेव संस्कारसम्पर्कः। यतो हि तस्यामवस्थायां नहि ब्रह्मणः प्रकृतेश्च पृथक्समुदयो भवति। तदानीं तुरीयावस्थायां प्रकृति र्हि ब्रह्मण्येव विलीना तिष्ठति। सगुणावस्थायामेव तत्र प्रकृतिसमन्विते तस्मिन् संस्कारसिद्धि र्भवितु मर्हति। तत्रैतावानेव भेदो यदस्याः संस्कारोत्पादिकायाः प्रकृते विद्याऽविद्येति पृथग्भेदद्वयं विद्यते। तत्राऽविद्यया जीवे संस्कारसम्भवो विद्यया चेश्वरे मुक्तात्मनि च तत्समुदयः। जीवस्याऽज्ञानित्वात्तदन्तःकरणे संस्कारात्मकं कर्मबीजं सुगुप्तं तिष्ठति। मुक्तात्मसु तु ज्ञानस्थितया तेषामन्तःकरणे समुदितोऽपि संस्कारो न स्थैर्य्यमासादयति। यतो हि बद्धो जीवात्मको द्रष्टा स्वात्मानं प्रकृतिवत् दृश्यं सम्मनुते। मुक्तात्मस्वरूपो ज्ञानी द्रष्टा तु स्वात्मानं प्रकृतेः पृथग् ज्ञात्वा प्रकृतिलीलया मोहित एव न भवतीति न तस्मिन् प्रकृतितरङ्गसञ्जातसंस्कारसम्पर्कः ॥ १४२ ॥

अधुना क्रमोन्नत्या तत्सम्बन्धमाह—

**तच्छुद्ध्या क्रमोन्नतिः ॥ १४३ ॥**

संस्कारस्य द्विविधा गतिः शुद्धाऽशुद्धेति भेदतः। यो हि संस्कार आत्मभावभावितः स शुद्धः। यश्चेन्द्रियासक्त्या निगडितः सोऽशुद्धः।

विज्ञानमिदमन्यथाऽपि प्रकाशीक्रियते। तथा हि—येन संस्कारेणात्मौजःसम्पर्कोऽस्ति स संस्कारो जीवमूर्ध्वमेवात्माभिमुखं नयति। यथा सूर्य्यरश्मिना संपृक्तो वाष्पराशिः स्वत एवोर्ध्वं नीयते। केवलमिन्द्रियासक्तिमान् संस्कारो जीवान् जड़त्वाज्ञानाभिमुखं नयन्नूर्ध्वं नयति। स्वाभाविकस्तु संस्कारः सदैव शुद्धो विद्यते। यतो हि—स समुत्पत्तिवेलायां प्रकृतेः स्वाभाविक-तरङ्गसाहाय्येनैव समुत्पद्यते, तथा जीववासनासम्पर्कराहित्यात्सदैव शुद्धस्तिष्ठति। अस्वाभाविकस्य संस्कारस्य भेदद्वयं पूर्वमेवोक्तम्। तत्र शुद्धसंस्कारतो जीवः सदा क्रमोन्नतिमेव विन्दति। स एव च जीवे कामार्थवासनां ह्रासयन् धर्ममोक्षप्रवृत्तिं प्रवर्द्धयति। अपरतश्च प्रवृत्तिं निरोधयन्निवृत्तिञ्च प्रवर्द्धयन् स्वाभाविकसंस्कारसाहाय्यमाचरति ॥ १४३ ॥

जीवोत्पत्त्या तत्सम्बन्धं दर्शयति—

**आद्यात् कारणाविर्भावः ॥ १४४ ॥**

आद्यात् प्रथमात् संस्कारात् कारणस्य कारणशरीरस्य आविर्भाव उत्पत्ति र्भवतीति सूत्रार्थः।

रूपं रूप-विवर्जितस्य भवतो ध्यानेन यत्कल्पितम् ।
स्तुत्या निर्वचनीयताऽखिलगुरोर्दूरीकृता यन्मया ॥
व्यापित्वञ्च निराकृतं भगवतो यत्तीर्थ-यात्रादिना ।
क्षन्तव्यं जगदीश ! तद्विकलता-दोषत्रयं मत्कृतम् ॥

अतो हि पुराणानां वेदार्थ-वेदरहस्यप्रतिपादक-वेदभाष्यस्वरूपत्वमेवेति निर्विवादः पन्थाः । यथा सूत्रभाष्ययोः—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥
सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

इति परस्परलक्षणभेदस्तथैव वेदपुराणयोरपि परस्परं भेदः । बहुशः सुहृत्सम्मितोपदेशयुञ्जि पुराणानि जनमनोरञ्जनकर्तॄणि गाथाजातानि बिभ्रतीति सुतरां सारल्यं दधति ॥ ४-१० ॥

**षड्विंशतितमात् पद्यादूनत्रिंशत्तमपद्यं यावत् जैमिनिमहर्षि-कृतं पक्षिणां मानवसदृशव्यवहारज्ञानोपदर्शनैश्वर्य्यप्रकाशनम् , तत्समर्थनाय कर्मगति-रहस्यम्—**

मनुष्या देवा वा स्वासत्कर्म्मपरिणामप्रभावतस्तरुगुल्माद्युद्भिज्जयोनिं सरीसृपखगाद्यण्डजयोनिं पश्वादिजरायुजयोनिञ्चासादयितुमर्हन्तीति पुराणादिषु बहुधा संकीर्त्यते ।

अन्येऽवैदिकमार्गाश्रिता दार्शनिकाश्च कचन स्वतर्कसरणिमीदृशीं प्रतिपादयन्ति यदुन्नतकक्षागतां देवयोनिं मनुष्ययोनिं वा समुपेता जीवाः कथं पुनरधोगामुद्भिज्जादिकां योनिमाश्रयितुमर्हन्ति ? यतो हि पञ्चानां कोशानां पूर्णतामाश्रित्य पूर्णावयवत्वमुपेता जीवा हि मनुष्ययोनिं देवयोनिं वा आसादयन्ति । ततश्च पुनरधो गत्वा पशुखगादितिर्य्यग्योनिपातोऽसम्भव इव भातीति तेषामाशयः ।

अत्रोत्तरयति-कर्मगतिरहस्यमजानतामियमाशङ्का निर्मूलैवेति । यतो हि अत्युत्कटानां पापकर्मणामयं परिणामो यज्जीवोऽधिरूढोऽपि मनुष्यदेवादि-विशिष्टयोनिं पुनरधःश्रेणिस्थां खगदंशमत्स्यादितिर्य्यग्योनिमधिगच्छतीति । केवलं दण्डार्हः स स्वपापपरिणामं भोक्तुमेव तत्र गच्छतीति सर्वैरकामैरपि स्वीकरणीयमेव ।

यथा पूर्णकोशबलेन पूर्णावयवतामुपेतो जीवो ब्रह्मधारणयाऽलौकिकी-मद्भुतां मुक्तिमासादयितुमर्हति तथैव पापनिरतस्वान्तःकरणस्य कुत्सितधारणाबलेन—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः"

इतिगीतोक्तचरमस्मृत्या पापात्मकान्तःकरणवर्ती मृगादियोनिमाहोस्वित् पश्वादिकामेव योनिमवश्यमाश्रयतीति नाणीयानपि सन्देहः ।

परन्तु एतादृशा आरूढपतिता जीवाः कियतः कालस्यैव कृतेऽधःपतन्ति, केवलं दण्डभोगेन पापविमुक्त्यै । नहि पुनस्तेषां चतुरशीतिलक्षयोनिचक्र-क्रमेण भ्रमणमपेक्ष्यते । यस्यामधस्तन्यां योनौ स पतति तत्र कर्मफलोपभोगे सति तत एव पुनः स्वपूर्वावस्थामासादयति । उदाहरणतो यथा यमलार्जुनौ स्ववृक्षयोनित्यागवेलायामेव देवत्वं पुनः समाश्रितावभूताम् ।

अन्यतश्च कर्मणः सृष्टिहेतुत्वात् तद्बलं सर्वोपरि सर्वाभ्यर्हितमिति कस्याविदितम् । उक्तञ्च भर्तृहरिणा—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे ।
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिरनिशं भिक्षाटनं कारितः ।
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ।

इत्येवमुत्कटवेगवतोऽचिन्त्यप्रभावाद्भुतमहिमशालिनः कर्मणो महतीं घोरां प्रवाहगतिं निरोद्धुं कः समर्थः । यथोग्रमुग्रं सत्कर्म जीवान् मनुष्य-योनितो देवयोनिं नयति तथैवोग्रं घोरमसत्कर्म तानधस्तिर्य्यगादियोनिषु पातयिष्यत्येवेति किमाश्चर्य्यम् ।

एवम्भूता आरूढपतिता जीवाः कियतोऽल्पस्यैव कालस्य कृतेऽधः पात्यन्ते इत्यतस्तदीयव्यष्टिपिण्डानामसम्पूर्णतैव तत्र विद्यते । अपरञ्च तदीयान्तःकरण-योग्यतानुरूपं क्वचन तेषु पूर्वयोनिस्मृत्युदयोऽपि सम्भाव्यत एव । जडभरतस्य मृगयोनावुपेतस्य शुष्कतृणभक्षणादिव्यापारोऽप्यत्रोदाहरणमूहनीयम् ॥२६-२९॥

## त्रिंशत्तमे पद्ये समागतेन्द्रनारदाप्सरःप्रभृतिशब्दार्थरहस्यम्—

इन्द्रपदं हि देवानामेकं स्थिरं प्रतिष्ठितं पदम् । देवलोकस्याधिराजा हि इन्द्र-देवो निगद्यते । यथा कालप्रमापकदेवो मनुरुच्यते, धर्म्माधर्म्मनिर्णेता देवो भगवान् यमो यथा धर्मराज इत्यादिशब्दैरभिधीयते, इत्येतेषां पदं स्थिरं

शाश्वतम् निश्चितमस्ति तथैवेन्द्रपदमप्येकं शाश्वतिकं स्थानं निगद्यते। सर्वेषामायुर्विभागोऽपि पृथगेवास्ति, आयुःसमाप्तावधिकारिणां परिवर्तनं भवति।

इन्द्रस्य राजधानी तृतीयोर्ध्वलोकात्मके स्वर्गलोके विद्यते तत ऊर्ध्वलोकेषु तु राजानुशासनस्यापेक्षैव न विद्यते। यथेह लोकेऽपि पुण्यात्मनां महात्मनां शिष्टानां राजानुशासनावश्यकता नैवोदेति।

देवर्षेर्नारदस्य गतिः सर्वत्रैव लोकेषु अव्याहतैव विद्यते। स हि पुराणेषु प्रसिद्धो नारदो देवशरीरविशिष्टो महर्षेर्नारदस्याधिदैवं स्वरूपम्। अन्यतश्च पुण्यात्मनां पुंसामन्तःकरणस्येश्वराभिमुखो वृत्तिविशेषः तदधिष्ठातृदेवसम्बन्धेन नारदस्याध्यात्मस्वरूपं भवितुमर्हति। भक्तानां सम्मुखे स्थूलस्वरूपेणापस्थितो हि नारदोऽधिभूतस्वरूपवान् ज्ञेयः। इत्येवं नारदस्य महर्षेः स्वरूपत्रयं ज्ञेयम्। इत्यत एव पुराणादिषु प्रायः सर्वत्रैव नारदप्रसङ्गः समापतति।

इत्थमप्सरसां विषयेऽपि बहूनां जिज्ञासूनां बहुविधाः शङ्काः समुत्पद्यन्ते, तासां समाहितिरपि सुतरामावश्यकीति निगद्यते—

यथाऽस्मिंल्लोके वेश्यानां स्थितिः स्वाभाविकी, यथा स्त्रीषु वेश्यात्वाधिकारोऽधिगम्यते न पुंसु, तथैवेद्वशस्वाभाविकनियमानुसारेण इन्द्रियसुखमूलकेषु भूर्भुवःस्वरिति त्रिष्वपि लोकेषु स्ववेश्यारूपाणामप्सरसां स्थितिरपि स्वाभाविकी। यतो हि स्त्रीसम्बन्धिनो विषयाः सर्वेभ्योऽपि विषयेभ्यः प्रबला अत्यधिकशक्तिशालिनो विज्ञेयाः।

अन्यतश्च पुमांसो विकर्षणशक्तिशालिनः स्त्रियश्चाकर्षणशक्तिविशिष्टाः। इत्यत एव पुरुषशक्तिः पराजीयते परन्तु नारीशक्तिर्न कदापि पराजीयते। अस्मादेव हेतोः स्त्रीष्वेकतस्त्रिलोकपावनी लोकातीता सतीत्वप्रकाशिका तपस्या विद्यतेऽपरतश्च नारकीयजघन्यवृत्तिरूपेयं वेश्यावृत्तिरपि तास्वेव दृश्यते। तृतीयतश्च स्वर्गादिषु इन्द्रियसुखप्रधानेषु लोकेषु इन्द्रियसुखवासनावतां तदिच्छयैव तत्रोपतिष्ठतां स्त्रीपुंसानां मध्ये स्त्रीणां कृते देवानां तथा देवलोकवासिनामन्येषां समागमसत्वेऽपि निरतिशयेन्द्रियसुखेप्सूनां पुंसां कृते स्ववेश्या विहाय काऽन्या गतिरित्यपि विभावनीयम्। इत्यतोऽवश्यमिदं सिध्यति यथेह मानवे लोके वेश्यानां स्थितिरावश्यकी तथैवामुत्र स्ववेश्यानां स्थितिर्निश्चिता ध्रुवमपेक्षितैवेतिदिक्॥ ३०॥

**त्रिचत्वारिंशत्तमपद्यत ऊनपञ्चाशत्तमं यावदुपवर्णिताप्सरःकृत-महर्षि-दुर्वासस्तपोभङ्ग—प्रस्तावे इन्द्रियप्राबल्यरहस्यम्।**

अयञ्च मनोरूप-प्रग्रहस्य इन्द्रियाश्वानाञ्च रूपकालङ्कारेण सुमनोहर उपन्यासः कठोपनिषच्छायामाश्रित्य प्रसज्जितः प्रतिभाति । अयञ्च प्रस्तावस्तत्र विस्तरेण निरूपितः ।

पुराणेषु प्रायोऽप्सरसां मुनितपस्वितपोभङ्गोद्यमो दृश्यते । तत्र शङ्कासमाहित्यर्थमिदमुच्यते—प्रथमतः स्त्रीणामाकर्षणशीलत्वं सर्वप्रसिद्धम् । द्वितीयतश्च स्त्रीरूपविषयस्य दुर्दमनीय-प्रभावत एव सृष्टिप्रवाहः प्रवाहितो भवति । अतश्च इह सृष्टौ सर्वेष्वपि विषयेषु स्त्रीरूपविषयस्य सर्वतोऽप्यभ्यर्हितत्वम् । ज्ञानेन्द्रियेष्वपि रसनेन्द्रियजननेन्द्रिययोः सर्वतोऽप्यधिकं प्राबल्यम् । यतो हि ते उभे अपि एकादशानामेवेन्द्रियाणां बलं बिभृतः । रसनायां हि रसग्रहणात्मकज्ञानेन्द्रियत्वं वाग्निःसारकत्वविशिष्टकर्मेन्द्रियत्वञ्चोभयमेवास्ति । एवञ्च जननेन्द्रियेऽपि स्पर्शेन्द्रियस्य मध्याकर्षणरूपम् ज्ञानेन्द्रियत्वं मूत्रोत्सर्जनात्मकं कर्मेन्द्रियत्वमपि तथा । इत्यत एवानयोरिन्द्रिययोरादृशी प्रबला स्थितिरुपलभ्यते, तत्रापि जननेन्द्रियन्तु ततोऽपि प्रबलतरम् । यतो हीदमिन्द्रियं प्रकृतिदेव्याः सृष्टि-कारिण्या महाशक्त्या विशिष्टत्वात् पूर्वत एव महाप्रबलं सृष्टम् । इत्यत एवोग्रकर्माणः तपस्विनो धैर्यात्मज्ञानन्यूनतायां—इदमेवेन्द्रियं द्वारीकृत्याप्सरोभिर्निपात्यन्ते ॥ ४३–४६ ॥

**पञ्चाशत्तमात्पद्यादारभ्य पञ्चपञ्चाशत्तमं यावत् क्रुद्धस्य मुनेर्दुर्वाससोऽप्सरोभ्यः शापप्रदानानन्तरम् आकाशगङ्गागमनम्, तत्रर्षीणामविहतगतिरहस्यम् ।**

देवता अपि विविधा भवन्ति । ऋषयोऽपि बहुविधाः सन्ति । असुराणामपि अनेकश्रेण्यो भवन्ति । सर्वेऽप्यसुरा असुरलोक एव नैव समुपतिष्ठन्ते तेषां शक्तिः केवलमुपरितनलोकत्रयं यावद्देवापसर्पति । ते हि तस्मिल्लोकत्रय एव गतागतङ्कुर्वन्ति । तथैव चारणगन्धर्वादयोऽपि सामान्यदेवा नैवोपरिस्थेषु सर्वेष्वपि लोकेषु गन्तुमर्हन्ति । ऋषयस्तु सर्वत्रैव चतुर्दशस्वपि भुवनेषु तिष्ठन्ति गतागतञ्चापि कुर्वन्ति । तत्रापि सर्वेष्वेवर्षिषु नैव सर्वत्र गतागतयोः समाना शक्तिर्विद्यते । केवलं देवर्षयो महर्षयश्च सर्वत्र गतागतं कुर्वन्ति । यथा—सिद्धा महात्मानः, श्रीमान् हनूमान्, अन्ये चाऽप्येवमेव प्रभावशालिनः पुण्यात्मानो देवपदमासाद्य सूक्ष्मलोकोपयोगीनि नानाविग्रहाणि गृहीत्वा यत्र तत्र विचरन्ति । तथैवास्मिन् मृत्युलोके समुत्पन्नः कोऽपि योगशक्तिशाली महात्मा स्वयोगशक्त्या स्वशरीरस्थपरमाणून् अन्यसूक्ष्मलोकोपयोगिनो विधाय तत्रोपगच्छति ।

पुनश्च पार्थिवशरीरान्तरं निर्मायास्मिन् मृत्युलोकेऽपि प्रादुर्भयति । योगशास्त्रे बहुविधा ईदृशाः सिद्धयः समुपवर्णिताः सन्ति ॥ ५०-५५ ॥

## द्वितीयाऽध्याये पद्यत्रयावधि गरुड़पक्षिवंशवर्णनरहस्यम्—

पुराणप्रवक्तॄणां पुराणाध्यायिनाञ्च सदा स्मरणीयमिदं यदस्य संसारस्यैव नामरूपात्मकत्वाद् वेदभाष्यरूपेषु पुराणादिषु यत्र कुत्रापि नाम्नो रूपस्य वा वर्णनमुपलभ्यते तत्र सर्वत्रापि भावत्रयस्य सम्बन्धो दृश्यते । तथा हि पक्षिणो नामरूपे स्यातां पशोर्वा भवेतां मनुष्यस्य, देवस्य, स्त्रियाः, पुंसोऽथवा स्थानविशेषस्य, तीर्थस्य यस्य कस्यापि नामरूपे भवेताम्, तत्र सर्वत्रैव आध्यात्माधिदैवाधिभौतरूपस्य भावत्रयस्य सम्बन्धः स्यादेव । तेनैव सहेदमवश्यमूहनीयं यदेतेषु त्रिषु भावेषु कोऽप्येकोऽवश्यं स्यादेव ॥ १-३ ॥

## कैलासपर्वते राक्षसोपलब्धिरहस्यम्—

मनुष्याणां देवानाञ्च पिण्डं पूर्णावयवसम्पन्नमिति द्वे अपि पिण्डे पञ्चकोशपरिपूर्णे स्तः । इत्यस्माद्धेतोः मनुष्यो वा स्याद् देवो वा स्याद्द्वावपि प्रकृत्यनुसारतस्त्रिधा विभक्तौ स्तः । तत्र प्रथमो देवाधिकारो द्वितीयोऽसुराधिकारस्तृतीयश्च राक्षसाधिकार इति यत् किमपि देवपिण्डं मनुष्यपिण्डं वा समाश्रितो जीवो यदि परार्थपरायण आत्मनिरतः सात्त्विको भवेत्स हि देवाधिकारवान् विज्ञेयः । यः कोऽपि स्वार्थी कामेन्द्रियपरो रजोगुणपरिपूर्णश्च स्यात्सोऽसुराधिकारीति । एवमेव यश्च तमोगुणव्याप्तः केवलं परपीड़नासक्तः प्रमादी च स्यात् स राक्षसाधिकारमध्यगो ज्ञेयः ।

मृत्युलोकात्मको मनुष्यलोकः स्यादाहोस्वित् सूक्ष्मो देवलोकः स्यात्सर्वेष्वपि लोकेषु त्रयाणामेषामधिकारिणां पिण्डानि भविष्यन्त्येव । तत्रैतावानेव विभेदो ज्ञेयो यन्मनुष्यलोके त्रयाणामप्यधिकाराणामाधिक्यमुपलभ्यते। देवलोके च देवाधिकारवतामेव प्राबल्यम् असुरलोके चासुराधिकारिणामेव बाहुल्यतया सम्भव इति। अतश्च कुबेरस्य देवपुर्यां राक्षसाधिकारिणामपि स्थितिः सम्भाविन्येव ॥ ४—७ ॥

## विंशतितमाच्छ्लोकात् षड्विंशमितं यावदतिबलशालिनो विशालकायस्य पक्षिणो राक्षसेन सह युद्धे पक्षिणोऽद्भुतबलशक्तिरहस्यम्—

पदार्थविद्याविज्ञानेनापि सिध्यति यत् पक्षिजातिषु बहवोऽतिबलशालिनोऽसाधारणप्रभाववन्तो भवन्ति । अधुना पदार्थविद्ययेदं निर्णीतमस्ति यत् पूर्वं हस्तिषु शुण्डत्रयशालिनो हस्तिनो भवन्तिस्म, ये च वर्तमान-हस्तिभ्य

आकारे महान्त आसन्। एवमेव पक्षिष्वपि पूर्वं महान्तो बलशालिन आकारे बले प्रभावे ज्ञानेऽपि च वर्तमानपक्षिभ्योऽनेकगुणा अधिका अभवन्निति प्रमाणितं पदार्थविज्ञानविद्भिः। इदानीं न तादृशाः पक्षिणो हस्तिनो वोपलभ्यन्ते सर्वेऽपि कालमहिम्ना विलीना धरातले। अपरञ्चारूढपतिता जीवा अपि एषु वर्गेषु जन्म गृह्णन्तीत्यपि कर्मरहस्यविज्ञानतः प्रमाणितमेव प्राक् ॥२०—२६ ॥

**सप्तविंशत एकत्रिंशत्तमं पद्यं यावत् राक्षसवधानन्तरम् तदीयपत्न्याः स्वात्मनः पक्षिस्त्रीभवनं तद्रूपेण च सन्तानजननं इत्याद्यसम्भवेतिवृत्त-रहस्यम्—**

दैवजगतः स्थितिर्निश्चितैव। तत्र दैवपिण्डस्यापि स्वतन्त्रतया स्थितिः सुनिश्चिता। इत्येवं सति दैवपिण्डाधिकारिणोऽप्सरःप्रभृतयो जीवा विविध-रूपवेशशरीरधारिणो भवितुमर्हन्तीत्यत्र कः सन्देहः। कर्मगतेरदमनीयत्वात्त-त्फलभोगार्थं देवयोनिगोऽन्ययोनिगो वा जीवो निजकर्मगतिप्रभावतो लोका-न्तरे गमिष्यति, पिण्डान्तरमेष्यति, आरूढपतितो भूत्वा च स्वपूर्वशक्तिप्राप्तिं करिष्यति। इत्येवं पौनः पुन्येन गतागतचक्रपतिता बहवो जीवाः स्वजन्म-परिवर्तनमाचरन्त्येवेति पुराणादिष्वेवंविधं वर्णनं इदानीन्तनान् मानवान-सम्भवत्प्रतिभाति, परन्तु वस्तुतस्तु न तत्रासम्भूतिलेशः ॥ २७-३१ ॥

**द्वात्रिंशत्तमाच्चत्वारिंशत्तमपद्यावधि गर्भिण्याः पक्षिण्याः कुरुक्षेत्रगमनम् तत्र च तदीयाण्डानां युद्धक्षेत्रे पातेऽपि घण्टापतनेन सुरक्षेत्यादिवर्णित-भवितव्यताप्राबल्यरहस्यम्—**

भवितव्यताऽतिप्रबलाऽवश्यं भाविनी। वैदिकविज्ञानस्य कर्मरहस्य-मतिप्रबलमपरिवर्तनीयं चास्ति। न हि तस्य कर्मरहस्यस्य खण्डनं धरायां केनापीतरेण धर्मसिद्धान्तेन दार्शनिकप्रवरेणापि कर्तुं पार्य्यते। वैदिककर्म-मीमांसादर्शनसिद्धान्ततः सर्वापि ब्रह्माण्डसृष्टिः पिण्डसृष्टिश्च कर्माधी-नैव सम्मता। एकस्य ब्रह्माण्डस्योत्पत्तिस्थितिप्रलयास्तथैकस्य पिण्डस्याप्यु-त्पत्तिस्थितिप्रलयाः सकला अपि क्रियाः तदीयपूर्वकर्मफलानुसारेणैव प्रचलन्ति। तत्र कर्माणि सहजैशजैवभेदतस्त्रिधा सम्मतानि तान्येव ब्रह्माण्डस्योत्पत्ति-स्थितिप्रलयान् साधयन्ति। जीवपिण्डमपि त्रिविधमेव निगद्यते। सहजपिण्ड-मुद्भिज्जपशुप्रभृतीनां, दैवपिण्डं देवतासुरादीनां, मानवपिण्डञ्च मनुष्यस्यैव।

सर्वमपि पिण्डं कर्माधीनमेव भवति। जीवपिण्डस्य जात्यायुर्भोगाः सर्वेऽपि तदीयपूर्वप्रारब्धपरिणामत एव सम्पद्यन्ते। आरूढ़पतिता जीवा ये हि स्वाति-दुष्कृतकर्मपरिपाकभुक्तये देवमानवयोनितो दण्डस्वरूपेणाधः पशुप्रभृतिसहज-पिण्डे पात्यन्ते, तेषामपि जात्यायुर्भोगाः पूर्वकृतकर्मानुसारेण निश्चितप्रारब्धानु-कूला एव भवन्ति।

साधारणत उद्भिज्जस्वेदजाण्डजजरायुजात्मकचतुर्विधा अपि भूतसङ्घाः सहजकर्मणैव सञ्चाल्यन्त इति नास्ति तेषां कृते नवीनप्रारब्धनिर्माणस्यावश्य-कत्वम्, परन्तु तास्वेव योनिषु ये जीवा दण्डिता आरूढपतिता भवन्त आयान्ति, ते सर्वेऽपि पूर्वप्रारब्धानुरूपमेव सञ्चाल्यन्ते।

पूर्णावयवानां मानवपिण्डधारिणामथवा देवपिण्डधारिणां जीवानां पूर्व-जन्मार्जितकर्मणां सञ्चित-संस्काररूपात्मककर्मबीजमध्यतो यानि स्वल्पानि कर्मबीजान्यङ्कुरितानि भवन्ति भोगपिण्डं कल्पयन्ति, तान्येव प्रारब्धशब्दतोऽभि-धीयन्ते। कर्मबीजं हि संस्कार इति उच्यते। यथा हि बीजाद् वृक्षोत्पत्तिर्भवति, तथैव संस्कारतो जात्यायुर्भोगप्राप्तिकराणि पिण्डानि समुत्पद्यन्ते। संस्का-रात्मकानि कर्मबीजानि च श्रेणित्रये विभक्तानि। बीजानां महान् कोशो हि सञ्चितः संस्कारः कथ्यते। नवीनश्च संस्कारराशिः क्रियमाणशब्दभाग् भवति। यतश्च शरीरपिण्डमुद्भवति तदेव प्रारब्धमित्युच्यते। तान्येव प्रारब्ध-कर्माणि भवितव्यतेति गीयन्ते, यानि चावश्यभोग्यानि, पुंभिरनिवार्य्याणि भोगत एव क्षपणीयानीति यावत्। यत्कृते शास्त्रेषूपलभ्यते—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। इति।

एतदेव कारणात्मनः संस्कारात् कर्मरूपस्य कार्य्यस्योत्पत्तिः निगद्यते॥ ३२–४०॥

## तृतीयाध्याये चक्राकारपृथिवीवर्णनप्रस्तावरहस्यम्—

धराया वर्त्तुलाकारत्वात् ऊर्ध्वमुड्डीयमानाः पक्षिप्रभृतयो जीवा आकाश-यानेनोड्डीय गच्छन्तः पथिकाश्च तां रथचक्राकारामेव पश्यन्ति। उपरितो दृश्यमानः पृथिवीभागो वर्त्तुल एवावलोक्यते। अनेन पौराणिकोपाख्यानेन तदानीन्तनानां विदुषां भूविद्यावेत्तृत्वं सिध्यति। अन्यच्च वायुयानप्रभृतीनि गगनस्थलप्रापकाणि यानान्यप्यासन्नेवेति सिध्यति॥ १–५॥

ऊनविंशतितमपद्यतः पञ्चविंशमध्ये समागतेन्द्रशब्दार्थरहस्यम्—

दैवस्य जगतो महत्सु सर्वेष्वपि पदेषु इन्द्रपदं हि सर्वेभ्योऽपि महद्राजसिकं पदं निगद्यते। तत्पदाधिष्ठाता इन्द्रः खलु देवलोकस्य राजा गीयते। मृत्युलोकादितः सम्बन्धभाजि भूलोके यावन्तो देवांशा यावन्ति च देवकार्य्याणि भवन्ति तावतां सर्वेषामेव इन्द्रोऽधिष्ठाता, स एव शासकः। भूलोके तदन्तर्गतमृत्युलोकादिषु च यावन्तो देवाः स्वपदेषु विनियुक्ताः सन्ति, तेषां कार्य्यपर्य्यवेक्षणमपीन्द्रकर्म। तस्याधिकारश्च भूर्भुवःस्वर्लोकेषु त्रिष्वत्तुएणो नियमितोऽस्ति। असुरगणाश्चैतेषु लोकेषु आधिपत्यं विस्ताय्यासुरीं शक्तिं न विस्तारयेयुरिति पर्यवेक्षणमपीन्द्रकर्तव्यमेव। स हि राजसिको देव इति पदच्युतिभयं तस्य सर्वदा तिष्ठति। उग्रतपश्चर्य्यां विदधाना महात्मानस्तपस्विनो लोकान्तरे गत्वा देवाधिष्ठातुरिन्द्रस्य स्थानमपि ग्रहीतुमर्हन्तीति तेषां पुण्यात्मनां तपस्विनां कार्य्यस्य स्वयं परीक्षणं, चारैर्वा परीक्षणं करणीयमिति तदीयं स्वाभाविकं कर्म। एवं परीक्षया याथार्थ्यज्ञानेन यदा तस्य मनः सन्तुष्यति—यदयं महात्मा नेन्द्रलोककामुक इति ततो निश्चिन्तो भवति ॥ १९ २५ ॥

त्रिचत्वारिंशतः सप्तचत्वारिंशत्तमेषु पद्येषु वर्णितोर्ध्वदैहिकान्त्येष्टिक्रियारहस्यम्—

यस्योर्ध्वदैहिकेन श्राद्धादिकर्मणा साहाय्यकर्तारः पुत्रादयो न स्युः, स स्वयं स्वीयोर्ध्वदैहिकं श्राद्धादिकृत्यं जीवन्नेव विदध्यादिति शास्त्रादेशः। द्रव्यक्रियामन्त्रशक्तिभिः प्राणमयमनोमयकोशयोः साहाय्येन श्राद्धफलं लोकान्तरे सम्पद्यते। यथा च विना तन्त्रीसाहाय्येन पदार्थविज्ञानक्रियया गगनस्थविद्युत्तरङ्गसहायतया सहस्रक्रोशान्तरस्थितान्यमानवैः सह वार्त्तां कर्तुं शक्यते, तदीयगानश्रवणमपि कर्तुं पार्य्यते। तथैव श्राद्धकर्ता पुमान् श्राद्धक्रियया प्राणमयतरङ्गबलेन इहस्थमनोमयकोशसम्बन्धमपरलोकस्थितमनोमयकोशेन सह विधाय तत्र तृप्तिकराणि द्रव्याणि सुखशान्तिविधायकम्पदार्थजातमाधिदैवं साहाय्यञ्च प्रेषयितुमर्हति। प्रेतलोके नरकलोके च समुपस्थितस्य जीवस्य तल्लोकजदुःखानां दूरीकरणम्। एतदेव श्राद्धतत्त्वीयं विज्ञानम् यन्मृतस्य सर्वथा साहाय्यकरणम्, दुःखदलोकगमनमार्गादिषु साहाय्यदानम्। इत्थमेव दुःखबहुलेषु लोकेषु परिभ्रममाणस्य स्वजनस्य अस्मादेव लोकात् समुचितं साहाय्यकरणमेव श्राद्धतत्त्वरहस्यम्। सुखबहुलेषु लोकेषु समुपस्थितस्य तु जीवस्य श्राद्धक्रियया शान्तिः सुखसमृद्धिश्च भवति।

स० नं० ५६०     श्रीविश्वनाथो जयति ।

श्रीभारतधर्ममहामण्डल,

प्रधान कार्यालय, जगत्गञ्ज।

बनारस, ता० २० जुलाई, सन् १६३१ ई०

विषय—शब्द-ज्ञानार्णव अर्थात् राष्ट्रभाषा हिन्दीमें-
इन्साइक्लोपीडियाकी आवश्यकता।

## (१) शब्द-ज्ञानार्णवकी आवश्यकता।

जातीय जीवनकी दृढ़ता करनेकी भित्ति भाषा है, जिस मनुष्य जातिकी भाषा पूर्ण नहीं है, वह मनुष्य जाति न प्राचीन इतिहासके अनुसार मनुष्य जाति कहा सकती है और न नवीन इतिहासके अनुसार पूर्णावयव मनुष्यजाति कहा सकती है। वर्तमान समयमें भी देखा जाता है कि सब शक्तिशाली, शिक्षित और स्वाधीन मनुष्य जातियाँ (नेशन्स) जो पृथ्वीको (इस मृत्युलोक-को) सुशोभित कर रही हैं, उन सबोंने इस सर्वतन्त्र सिद्धान्तको सामने रखकर अपनी अपनी स्वजातीय राष्ट्रभाषाकी पूर्णता सम्पादन करनेमें सबसे पहिले कटिबद्धता दिखायी है। भाषाकी पूर्णताके लिये उस भाषामें शब्द-ज्ञानार्णव अर्थात् पूर्णावयव शब्दकोष, जिसको अंग्रेज़ी भाषामें इन्साइक्लोपीडिया कहते हैं, प्रकाशित होनेकी आवश्यकता होती है। इसी कारण पृथ्वीकी सभी सभ्य जातियोंने, जैसे कि, फ्रांस, अमेरिका और बृटेनके विद्वानोंने बहुत ही परिश्रम और व्ययके साथ अपनी अपनी स्वजातीय इन्साइक्लोपीडियाओंको प्रकाशित किया है। भारतीय इण्डियन नेशन अर्थात् हिन्दुस्थानकी राष्ट्रीय जातिका यथार्थमें पूर्णावयव संघटन तभी हो सकता है जब उसकी राष्ट्रभाषा पूर्णावयव हो जाय। हिन्दुस्थानकी राष्ट्रभाषा रूपसे हिन्दीको ही सर्ववादि-सम्मत सिद्धान्तसे मान सकते हैं। हिन्दी भाषाके राष्ट्रभाषा होनेके विषयमें गवर्नमेण्टसे लेकर सब प्रान्तोंकी बुद्धिमान प्रजा तक और राजनीतिक नेताओंसे लेकर सब देशके सामाजिक नेतृवृन्द तक एकवाक्यतासे सहमत हैं। अतः जब शब्द-ज्ञानार्णव अर्थात् इन्साइक्लोपीडियाके बनजानेसे राष्ट्रभाषाकी पूर्णता हो सकती है और हिन्दी भाषा ही भारतवर्षकी राष्ट्रभाषा है, तो भारतवर्षकी इस उन्नतिशील कान्ति और क्रमाभिव्यक्तिके समयमें हिन्दीभाषामें शब्द-ज्ञानार्णव अर्थात् स्वजातीय इन्साइक्लोपीडियाका प्रकाशित होना परम आवश्यक है, इस सिद्धान्तको सभी इस समय स्वीकार करेंगे।

## (२) भाषाकी पूर्णता।

शब्द-विज्ञानके ज्ञाता सर्व-देशीय विद्वानोंने एकवाक्य होकर स्वीकार किया है कि, पृथ्वी भरमें जितने प्रकारकी भाषाएँ हैं, उन सबमें संस्कृत भाषा

सबसे प्राचीन है और पृथ्वीभरमें जितनी भाषाएँ हैं, उन सबमें संस्कृत भाषा पूर्णावयव है। भाषा-तत्त्ववेत्ताओंका यह मत है, कि पूर्ण भाषा वह कहाती है, कि जिसके द्वारा कठिनसे कठिन विषय सुगमताके साथ समझा दिये जा सकें। संस्कृत भाषामें यह गुण पूर्णतया पाया जाता है। पूर्णभाषामें दूसरा भी एक अनोखापन होता है। वह ऐसी लचीली होती है कि, व्यवहारमें उसका मनमाना उपयोग किया जा सकता है। यह गुण संस्कृतमें पूर्णरूपसे विद्यमान है। संस्कृत भाषाकी पूर्णताके विषयमें अनेक प्रमाण हैं, और उसकी पूर्णताके उपयोगी असाधारण गुणावलियाँ हैं, जिनको सब देशके लोग स्वीकार करते हैं। यह तो पश्चिमी भाषातत्त्वज्ञोंने भी स्वीकार कर लिया है और इस विषयमें पृथ्वीके सब विद्वान् एकमत हैं कि, मानव जाति जब सुसंघटित हुई, तब प्रथम उसकी व्यवहारकी भाषा संस्कृत थी। उसकी तीन शाखाएँ हुईं। एक शाखासे भारतवर्षकी, दूसरी शाखासे मध्य एशिया और उसके आसपासकी, तीसरी शाखासे युरोपकी भाषाएं निकलीं। अतः एकमात्र संस्कृत भाषाकी सन्ततिरूपसे ही क्रमशः पृथ्वीकी सब भाषाएं साक्षात् अथवा परोक्ष रूपसे विस्तारको प्राप्त हुई हैं। इस ऐतिहासिक सिद्धान्तको सामने रखकर सब भावुक और अन्तर्दृष्टिसम्पन्न विद्वान् यह भी एकवाक्य होकर स्वीकार करते हैं कि, परलोकवाद, अध्यात्मवाद, ईश्वरवाद और अन्तर्जगत् सम्बन्धी यावत् दार्शनिक रहस्योंका खजाना जितना संस्कृत द्वारा प्रकाशित हुआ है उतना आज तक पृथ्वीमें किसी भाषा द्वारा प्रकाशित नहीं हुआ है। अतः भारतवर्षकी इस स्वजातीय इन्साइक्लोपीडियाके प्रकाशित करनेमें संस्कृतको ही भित्ति बनाकर शब्द-ज्ञानार्णवकी अट्टालिका निर्माण की जाय। और साथ ही साथ मसाला उर्दू, हिन्दी, तथा भारतवर्षकी सब प्रान्तोंकी भाषाओंसे संग्रह करना युक्तियुक्त होगा।

## ( ३ ) प्रस्तावित निर्माण प्रणाली।

विशेष विज्ञ और विद्वन्मण्डली, जिनका सम्बन्ध इस महासभासे है, वे इस अर्णवमें शब्द और ज्ञानका ऐसा एक संग्रह करना चाहते हैं कि; भारतीय प्रधान ( मूल ) भाषाओं और उनसे सम्बन्ध रखनेवाली संसारकी अन्य भाषाओं के उपयोगी शब्द आजाएँ और अब तक पदार्थवादियोंने अत्यन्त परिश्रम कर जो ज्ञान प्राप्त किया है, वे और जगत्के लोग जिस आध्यात्मिक ज्ञानसे अपरिचित हैं, वह सब ज्ञान सन्निविष्ट हो जायँ। राष्ट्रीयभाषाकी पूर्णताके लिये शब्दसंग्रहका ज़रिया यह होगा— (क) वर्त्तमान समयमें जितना वेद उपलब्ध है, उसके शब्द, ( ख ) पुराण, स्मृति, तन्त्रादिके शास्त्रीय शब्द ( ग ) पाली, मागधी आदि भाषायें जो हिन्दुस्तानके बौद्ध और जैन धर्मावलम्बी काममें लाते हैं, और अर्बी, फारसी और अंगरेज़ी शब्द जो साधारण तौरपर इस देशमें व्यवहृत होते हैं। ( घ ) हिन्दी शब्द सागर, मराठी ज्ञानकोष, बंगला विश्वकोष, धर्मकल्पद्रुम हिन्दी, संस्कृत शब्दकोष समूह और इसी प्रकारके अन्यान्य ग्रन्थ आदिके शब्द, ( ङ ) कहावत रत्नाकरकी हिन्दी और संस्कृत कहावतें ( च ) बृटिश इन्साइक्लोपीडियासे साइंटिफ़िक और नानाविद्याओंके शब्द ( छ ) इसी प्रकार अन्यान्य शब्द जो प्राप्त हों, जिनका समावेश हिन्दी

भाषामें नहीं है, इत्यादिका संग्रह करके राष्ट्रभाषाको पूर्ण करना होगा। इस महासभामें सम्मिलित विद्वानोंकी मण्डलीकी संमति यह है कि अब तक जो शब्दकोष भारतवर्षमें प्रकाशित हुये हैं, उनसे शब्दज्ञान सुगम हो गया है, परन्तु शब्दाश्रित व्यापक ज्ञानका उन कोषोंमें ऊहापोह नहीं किया गया है जैसा कि, भारतीय शब्द-ज्ञानार्णवके लिये होना चाहिये और न उन शब्दकोषोंमें नवीन और प्राचीन मतोंका तुलनात्मक विचार करके सत्य अनुसन्धानमें सहायता ही की गयी है और न बाहरके शब्द और ज्ञानका यथेष्ट संग्रह करनेकी ओर ध्यान रक्खा गया है और भारतकी प्राचीनता, मौलिकता और संस्कृत भाषाकी आध्यात्मिक-शक्तिके प्रकाशित करनेमें और भारतकी अनुपम प्राचीनता और सभ्यता और अपनी मातृभूमिका गौरव जो कि प्राचीन इतिहास और नवीन इतिहास दोनोंकी कठिनसे कठिन परीक्षासे उत्तीर्ण हुआ है उस ओर तो किसीने ध्यान ही नहीं दिया है। इन सब अभावोंको दूर करके शब्दराशि और भावराशिका यथेष्ट संग्रह करना शब्द-ज्ञानार्णवका प्रधान उद्देश्य होगा। शब्दके संग्रह और भावोंके प्रकाशित करनेमें हम अपने परिश्रमशील पूर्व विद्वानोंके शब्दकोषों और ग्रन्थोंसे कृतज्ञतापूर्वक सहायता लेंगे और अपनी उद्देश्यपूर्त्तिके लिये बाहरकी इन्साइक्लोपीडियाओंकी सहायतासे पदार्थविद्याके शब्द और उनका रहस्य, यथेष्ट रूपसे संग्रह करके अपनी राष्ट्रभाषाको पूर्ण करेंगे। दूसरी ओर सब आवश्यकीय विषयों पर तुलनात्मक विचार करके भारतवर्षकी जातीयता, मौलिकता और महत्त्वके विषयमें यथेष्ट प्रकाश डालनेका यह शब्द-ज्ञानार्णव प्रयत्न करेगा। और संक्षेपमें अथवा एकही वाक्यमें ज्ञानार्णवका यह उद्देश्य कहा जा सकता है कि, भारतवासियोंके साथ ही साथ जगत्की सभ्य जातियोंको यह शब्द-ज्ञानार्णव यथार्थ ज्ञानकी ओर अग्रसर करेगा इसी कारण विदेशीय अनुसन्धानशील विद्वानोंकी सहायताके लिये शब्द-ज्ञानार्णवमें अंग्रेज़ी भाषामें प्रत्येक शब्दका शब्दार्थ देदेनेका भी विचार किया गया है।

## ( ४ ) व्यय-भार और आर्थिक लाभ।

इस राष्ट्रीय-विद्या सम्बन्धी महत्कार्यके सुसम्पन्न करनेके लिये धनबल-जनबल और ज्ञानबलकी यथेष्ट आवश्यकता है। ज्ञानबल सम्बन्धसे हमें आशा हुई है कि हम बिना व्ययके सर्वशक्तिमान् भगवान्की अपार कृपासे कृतकार्य होंगे। जनबल अर्थात् विद्वानोंका संग्रह हम धनबलके द्वारा कर सकेंगे और इस विषयमें अनेक स्वदेशहितैषी सज्जनोंने सहायता करनेका अभिवचन भी दिया है। अब रहा धनबल। उसके लिये हमारा यह विचार है कि, हम किसीसे दान रूपसे धनकी याचना नहीं करेंगे, जैसा कि, ऐसे बहुव्ययसाध्य कार्योंमें होता आया है। भारतधर्मसिण्डिकेट-लिमिटेड नामक संस्था, जो स्वजातीय संस्था है और जो इस अखिल भारतवर्षीय महासभाके साक्षात् संरक्षकत्व में स्थापित हुई है वह अपने शेअर बेंचकर उसके द्वारा इस महत्कार्यका सम्पादन करेगी और शब्दज्ञानार्णव तैयार होकर बिकनेपर यथेष्ट लाभ पहुंचा कर अपने हिस्सेदारोंको यथोचित सन्तुष्ट करेगी। उक्त लिमिटेड कम्पनीमें १०)

के प्रेफरेन्स शेअर और २५) के आर्डिनरी शेअर मिलते हैं। इन शेअरोंको बेचकर हिस्सेदारोंकी सहायतासे ५ या ६ लाख रुपया संग्रह करके शब्द-ज्ञानार्णव प्रकाशित किया जायगा। ऐसा अनुमान किया गया है कि, कमसे कम ३० बृहत् खण्डोंमें शब्दज्ञानार्णव पूर्ण होगा। यदि पहिले संस्करणकी ५००० प्रतियाँ भी छपें और रु० ३००) मूल्य रक्खा जाय, तो इस ५ या ६ लाखके मूलधनसे १५ लाख रुपयेकी पुस्तकें तैयार होंगी। इस योजनासे सब प्रकारका खर्चा करके भी सिण्डिकेटके हिस्सेदारोंको यथेष्ट नफा डिविडेण्ड और बोनस रूपसे मिल सकेगा। कम खर्चा होनेका कारण यह है कि हमको धर्म-बुद्धिसे सहायता देनेवाले योग्य विद्वान् अधिक मिलेंगे इसलिये सम्पादनका व्यय कम होगा।

सिण्डिकेटके पदधारियोंने विशेष यह सोचा है कि, सिण्डिकेटके हिस्से-दारोंको नियमित डिविडेण्ड और बोनसके अतिरिक्त उनके उत्साहके लिये तथा शब्दज्ञानार्णवके सम्पादन, मुद्रण और प्रकाशनकी सुविधाके लिये जो नरपति वृन्द तथा महत् व्यक्ति कमसे कम ५ हज़ारके हिस्से खरीदेंगे, वे पेट्रन कहावेंगे और जो कमसे कम २ हजारके खरीदेंगे, वे वाइस पेट्रन कहावेंगे, इसी प्रकार जो सज्जन कमसे कम ५ सौ रुपयेके सिण्डिकेटके हिस्से खरीदेंगे, उनके पास एक संख्या शब्द-ज्ञानार्णव (सम्पूर्ण) यथाक्रम खण्डाकारसे पहुँचती रहेगी और उनको बोनस भी मिलेगा। विद्वान् सज्जन और देशके पुस्तकालयोंके लिये यह सुगमताकी गयी है कि जो २००) दो सौ रुपयेके हिस्से खरीदेंगे, और उस रुपयेको उनको हिस्सेदारी मंजूर होतेही एक साथ ही देदेंगे—यद्यपि ऐसे हिस्सेदारोंकी संख्या नियमित ही होगी—उनको शब्द-ज्ञानार्णव बिना मूल्य दिया जायगा परन्तु कुछ समय तक उनको बोनस और डिविडेण्ड नहीं मिलेगा।

## ( ५ ) अपील।

सिण्डिकेटके साथ हिस्सेदार रूपसे योग देनेसे उनका दिया हुआ धन स्वजातीय सिण्डिकेटके शेअरोंमें सुरक्षित रहेगा। सिण्डिकेटके हिस्सेदारोंको इस स्वजातीय महत्कार्यमें सहायक बननेका पुण्य और यश तो मिलेगा ही, साथ ही साथ एक चिरस्थायी स्वजातीय शास्त्र प्रकाशक मुद्रणालयके द्वारा वे अपने हिस्सोंसे नियमित रूपसे लाभ उठाते रहेंगे। चाहे भविष्यत्में शब्द-ज्ञानार्णवके अन्य संस्करणोंसे हो अथवा नाना शास्त्रीय ग्रन्थोंके प्रकाशनसे हो, यह संस्था बराबर चलती रहेगी और उनका शेअरका धन सुरक्षित रहेगा। आशा है, नर-पति वृन्द और विद्वान् तथा स्वदेशहितैषी राष्ट्रभाषा प्रेमी सज्जनगण सिण्डि-केटमें योग देकर स्वजाति, स्वदेश और स्वभाषाकी उन्नतिमें सहायक बनेंगे।

विशेष जाननेके लिये सेक्रेटरी, श्रीमहामण्डल प्रधान कार्यालय जगत्गञ्ज बनारस इस पतेसे पत्र व्यवहार करें।

दिलीप सिंह
( हिज़हाईनेस महाराजा सैलाना )
सभापति मंत्रीसभा।

( English Translation of the Circular )

**Subject :—*National Encyclopaedia of India.***

( SHABDA-JNANARNAVA )

### I. Necessity of Encyclopaedia.

The main spring of strength of National life is its language. The nation which has not got a perfect language cannot, according to ancient History, be called as such, nor in the modern history strictly can be styled as a perfect nation In the present days it is observed hat all powerfull, civilised and independent nations, which have flourished in the world, have, in accordance with this principle, tried their best at the outset to make their respective national language perfect. So there is the absolute necessity for a nation to prepare an Encyclopaedia ( Shabda Jnanarnava) to enrich and make perfect its language. It is for this resson that all civilised nations, e.g. France, America, Britain have published Encyclopaedia in their respective languages with great labour and at heavy cost. The Indian nation will in fact be called perfect, when its national language is made so. Hindi can unanimously be accepted as the national language of India. On the question of making Hindi the national language, everyone—the Government as well as the people of all the provinces of India—the political leaders as well as the social leaders of every part of the Indian continent are of one voice without dissension. So, by the publication of Hindi Encyclopaedia the great national work of enrichment and perfection of Hindi, the present national language of India can be accomplished. At this present day of evolution and revolution, it is absolutely necessary to prepare and publish national Encyclopaedia in Hindi ( the Lingua Franca of India ) and every one at this moment, will agree with this principle.

### II. Perfection ot the Language.

The learned Philologists of every country admit without exception that Sanskrit is the most ancient among all the languages prevalent in any part of the world and it is the only perfect language. The learned linguists are of definite opinion that the language in which the difficult matters can be explained easily is the perfect language and this requirement is fully answered by the Sanskrit language. There is another peculiarity of a perfect language that it has such elasticity that by its use it can be moulded according to one's desire and Sanskrit has, within it, this peculiarity fully, There are various proofs in support of Sanskrit being a pefect language and it possesses special parts fit for being perfect which is admitted by learned personages of all the countries. The Western Linguists have also accepted the fact and the scholars all over the world agree that at the early period of civilisation when men organised themselves, the language which was used by them at first was Sanskrit. There sprang from it three branches, from first of these branches Indian

languages came out; from the second, the languages of Central Asia and its neighbourhood and from the third, the languages of Europe came into being. So as the progeny of the Sanskrit languages either directly or indirectly, the other languages of the world came into existence, In keeping this view in the angle of vision regarding this historical fact all thoughtful and learned men with far-sight also unanimously admit that the works in Sanskrit possess subjects on Occultism, Spiriiuality, Theology, and philosophical truths of inner world which surpass, by far, those in other languages of the world. So in the preparation of this national Encyclopaedia for India it is absolutely necessary that the structure should be based on Sanskrit. And it is advisible that the materials should be gathered from Urdu, Hindi and all provincial languages of the Indian continent.

### 111. The proposed method of editing.

The learned servants and scholars connected with this association intend to produce this Encyclopaedia with an elaborate collection of the words and knowledge derived from all important languages of India as well as those of other foreign languges of different places connected with India, of the material knowledge acquired with hard labour by the world Scientists and also of the spiritual knowledge with which the people of the present age is still unacquainted.

In order to enrich the national language of India the sources of collection of vocabulary are :—

( a ) The words from the portion of the Vedas which have been searched out hitherto ;

( b ) The words from Puran, Smriti and Tantra and other scriptures of the Hindus ;

( c ) The words of Pali, Magodhi etc. used by the Budhists and Jains in India and Arabic, Persian and English words generally used in this country ;

( d ) The words collected by Shabda Sagar (Hindi), Jnanakosh ( Marathi ), Vishwakosh ( Bengali ), Dharma Kalpadruma ( Hindi ), Sanskrit Dictionaries and other publications of the kind ;

( e ) The Hindi and Sanskrit proverbs from "Kahawat Ratnakar" and other such works ;

( f ) Scientific words and words of different departments of knowledge from English Encyclopaedia which are not in use in Hindi and

( g ) Words from such other available works and publications.

The committee of learned men of the society is of opinion that the Dictionaries and books of reference hitherto published in different provinces of India have done much towards literary explanation and collection of words but full connotation of words being not given in them as required for a national Encyclopaedia of

India. Specially they do not help in the research works and in the knowledge of comparative review of the ancient and modern exposition of thought regarding important words on the standpoint of our nationality and civilization and also attention was not given for accommodating words from foreign sources in order to fully enrich our language.

None of them have the slightest attention bestowed upon giving vent to the originality, spiritual strength of the Sanskrit language and the unchallanged antiquity and civilzation of our mother-land, which has so successfully passed the hardest test of both ancient and modern History. The object of our Encyclopaedia (the Shabda Jnanarnava) is to remove these deficiencies and to replete it with required words and thoughts. In making the collection and publication of words, expressions and thoughts the Editors shall with their best gratitude take the help of above mentioned dictionaries, books of reference and other publications of the learned persons of our country published with great labour and also of Encyclopaedias of foreign countries for the scientific and other such words with their elaborate expositions in order to enrich our national language. This national Encyclopaedia of India will devote itself also for publishing all other important matters with scholarly research in comparative review relating to nationality, spirituality, originality and greatness of India. In short or in a word it can be said that the object of this National Publication is the advancement of knowledge of every civilised country along with India and for this reason it has also been kept in view to give as well synonyms in English of every word so that it may help the scholars of foreign countries in their research work.

## IV. Cost and Profit.

To accomplish this National Educational work there is a pressing need for sufficient financial help, co-operation of our countrymen and help of intellectual persons as well. We entertain this hope that with the grace of Almighty Father of all the intellectual help will be sufficiently forthcoming without any expense, as work of love, The co-operation of able workers can be fully secured with pecuniary help and in this respect we have got sound promises of help from many patriotic personages. About the Finance, we do not intend to approach any one for donations or gratuitious help as is usually done in cases of such costly national undertakings. The Bharat Dharma Syndicate Ltd., National Publishing House, which is a corporate body, and which has been established under the direct Patronge of this All-India association, will finance the cost of the publication of this Encyclopaedia by disposing of its shares and will fully satisfy its shareholders with the profit out of sale of the publication. The Syndicate has at its disposal Preference shares of the value of Rs 10/- each and ordinary shares of the value of Rs 25/- each for sale and it is hoped that by collecting 5

• or 6 lacs of rupees from the sale of these shares the Encyclopaedia will be easily published. It is estimated that the Encyclopaedia will be complete in at least 30 big volumes. If the publishers undertake to print at least 5000 copies in its first edition and price per copy of 30 volumes be set at Rs 300/- then with a capital of 5 or 6 lacs a literary work valuing 15 lakhs will be turned out. Under this calculation of the promoters, after meeting all the expenses of the publication, and management etc. shareholders of the Syndicate are expected a handsome profit in form of divident and bonus The chief reason for such an advantage of cheap publications is that we are in a position to get help, by way of love, from several learned scholars and this will minimise to a great extent the cost of important work of editing.

As a special feature, it is so arranged by the authorities of the Syndicate that by way of encouragement to the shareholders in addition to the regular dividend and bonus as well as for the smooth work of editing, printing and publishing the Encyclopaedia the Princes and Nobility who will purchase shares of the value of at least Rs. 5000/- will be styled as patrons and those who will purchase shares of the value of at least Rs. 2000/- as Vice-Patrons In this way if any gentleman purchase shares of the value of Rs. 500/- he will receive one copy of the Encyclopaedia free of cost and Bonus too and to afford special facility to the learned people and libraries of the country it is intended that one who subscribes shares of the value of Rs 200/- and pays the whole amount on allotment will be allowed to receive this big work free of cost but such shareholders whose number will be limited, shall not participate in dividend and bonus of the Syndicate for a certain period.

## V. Appeal

In joining the Syndicate the shareholders not only earn virtue and fame by their support to this great national work but will derive regular benefit from their respective shares through a well-established national Publishing House. This concern will ever remain as a going-on concern publishing the next editions of "Shabda-jnanarnava" or other works of social, religious and national importance etc and the shareholders will have their shares perfectly secured. It is expected that patriotic Princes and educated gentlemen and all lovers of the national language will be pleased to lend their best support to the sacred cause of nation, country and national language by joining this educational enterprise.

For particulars —please apply to the Secretary of Sri Mahamandal, Head Office, Benares.

DELEEP SINGH
( His Highness Maharaja of Sailana )
*President of the Council.*

प्रयाणं कृत्वा वैलायतिकेषु पूर्वस्मिन्नेव काले स्वकीयं वैलक्षण्यं विस्तारयाम्बभूव । ईसामसीहस्य सप्तमशताब्द्याः समनन्तरं भारतीयायुर्वेदप्रभाव आरबीयेष्वेवं समधिकरूपेण वितस्तार यद् बगदादस्य खलीफा-पदवाच्या बहूनामायुर्वेद-ग्रन्थानामनुवादो निजभाषायामकारयन् इति मुग्धानलो मन्यते । अष्टम शताब्द्या अन्तकाले सुश्रुत-चरकयोरनुवाद आरबभाषायामभूत्, अरबदेशस्य प्रसिद्धो वैद्यो—येन ६३२ ईसवीयवर्षे स्वीदशरीरं परित्यक्तम्—चरकसुश्रुत-ग्रन्थौ प्रमाणरूपेण स्वीये प्रबन्धे समुपन्यस्यति । अन्याश्च वैदेशिक्यो जातयो नूनमरबदेशतो हि वैद्यकविद्याविज्ञानमशिक्षन्त । आरबीयलेखानां लैटिनभाषानुवादे चरकस्य चर्चा दृश्यते । गोथे ( Goethe ) महोदयः स्वीये 'फास्ट'–( Faust ) नामकनाटके कविकुलतिलक–कालिदास विरचिताभिज्ञानशाकुन्तलनाटकस्य प्रस्तावनामनुचकार । एडविन–हीयस प्रभृतिपाश्चात्यविपश्चितां प्रबन्धेषु संस्कृत-काव्यानां कीदृशः प्रभाव इति संस्कृताङ्गल–साहित्य-परिशीलनपराः सुधियः स्वयमेव समनुभवन्ति । संस्कृत–काव्य-प्रदर्शिता चतुरङ्गक्रीड़ा ( शतरंज Chess) चापीत एव पयोधिपारं प्रस्थानं कृतवतीति निश्चीयते । सेनायाश्चत्वारि अङ्गानि हयदल गजदल रथदल पददलानि उभयतस्तिष्ठन्तीति क्रीड़ा सा चतुरङ्गनामधेया । सर्वप्रथमं बाणस्य काव्ये, ततोनु रुद्रटस्य काव्यालङ्कारे चतुरङ्गक्रीड़ायाः समुल्लेखो निभाल्यते । ईसामसीहस्यानन्तरं नवमी शताब्दी काव्यालङ्कारकर्त्तुः समय इति इतिहासविदो विदन्ति । क्रीडेयं षष्ठ्यां शताब्द्यां भारतवर्षात् पारसप्रदेशं, ततश्च अरबप्रान्तं, ततोनु यूरोपीयानि विविधानि स्थानानि बम्भ्रम्यमाणा संसारं समश्नुवानेति पुरातत्त्वविदां मतम् ।

वैदेशिकविद्यासु सर्वतोऽधिकः प्रभावो भारतीयदर्शनशास्त्रस्य विद्यते। परमात्मा जगच्च वस्तुत एकमेव वस्तु, विचारेष्वेव विविधानां वस्तूनां सत्ता, एतेषामनेकता विभिन्नता वा भ्रममूलिका—ईलियेटिक्स ( Eleatics) तार्किकानामेष सिद्धान्तो भारतीयासूपनिषत्सु संख्यातीतवर्षेभ्यः पूर्वमेव प्रदर्शितः । इम्पिडाक्लीजस्य ( Empedacles ) सिद्धान्तो यत्—अभावात् न कदापि भावस्य समुत्पत्तिः, भावस्य न कथमपि नाशो भवितुं शक्नोति—इत्यादिकः भारतीयसांख्यशास्त्रेण पूर्वमेव प्रकटितः । थेलस–( Thales ) इम्पिडाक्लीज—( Emphdocles ) अनेक्जेगोरस—( Anaiagorus ) डिमोक्रिट्स—( Democritis ) प्रभृतयो बहवो विद्वांसो दर्शनशास्त्रमध्येतुं भारतमाजग्मुरिति गिरीशदेशवासिनामुक्तिं मुग्धानलः स्वीये लेखे समर्थयति । इतिहासोऽपि उपर्युक्तं वचनं प्रमाणयति । पिथागोरस ( Pythagoras ) महोदयेन भारत-

देशाद् बहुविधा शिक्षा समधिगतेति यूरोपीया बहवो विद्वांसः स्वीकुर्वन्ति। वैलायतिकानामनेकेषां दार्शनिकानां सिद्धान्तेषु भारतीयसांख्यसिद्धान्तः सुस्पष्टं परिलक्ष्यते। शोपेनहर-( Schopenhauer ) वानहार्टमैन-(Von Hartmoann) पुस्तकेष्वपि भारतीयो विचारः सुतरां समवाप्यते।

---

## सर्वैः प्रयतेलिमम्।

——:o:——

समयोऽयं सनातनधर्मावलम्बिनां कृते नितरां भयावहो वर्त्तते। संसारे सर्वत्रैव धर्मस्य सम्प्रदायस्य च विरुद्धं महदान्दोलनं प्रचरति। धर्मसत्तां समुन्मूलयितुं सर्वतः सुसंघटितरूपेण सुमहान् प्रयत्नः समनुष्ठीयते। रूसदेशस्य सन्देशः सर्वैरवगम्यत एव। अफगानिस्तान-तुर्क-फारस-प्रभृतीनां स्थानानां समाचारोऽपि नाप्रत्यक्षः प्रेक्षावताम्। वर्त्तमान-सभ्यतायाः पूर्णरूपेण भौतिक-प्रभावप्रधानत्वात् धर्मप्राणस्य भारतवर्षस्यापि संख्यातीताः सज्जनाः पाश्चात्य-शिक्षासम्पन्नाः सन्तो भारतीयं धार्मिकबन्धनं देशोन्नतिकण्टकमाकलयन्ति। नेतृवृन्देष्वनेके महापुरुषाः सनातनं धर्मं समूलमुन्मूलयितुमेव दिवानिशं प्रयतन्ते। शारदा-विधानस्य भयावहा परिणतिः कैः धर्म-प्राणैः विस्मर्त्तुं शक्यते? धार्मिकाणां मठमन्दिराणां स्वतन्त्रतापहृतेरान्दोलनं के न जानन्ति? अतः समयोऽयं सनातनधर्मस्य कृते भयजनक इति नूनं सत्यम्। अस्मिन् घोरे कलिकाले संघटितरूपेण सनातनधर्म-बीजरक्षां विधातुमवश्यमेव सर्वैः प्रयतेलिमम्।

---

## अस्माभिरवधेयम्।

——:o*o:——

अतीवानन्दास्पदमिदं यत् पाश्चात्यदेशीयानां साम्प्रतिकदार्शनिकानां विचारशालिनां सन्तोषप्रदसंख्या आर्यसभ्यतायाः उपादेयत्वं, पाश्चात्यसभ्यताया भयावहत्वं च सुतरामनुभवति। मानवसमाजेषु जीवमात्रेषु च सुख-शान्ति-सञ्चार एव सभ्यताया धर्मस्य वा प्रधानमुद्देश्यम्। तदिदं जीवमात्र-सुखैषित्वं यथा आर्यसभ्यतायां सनातने वा धर्मे सुरक्षितं न तथाऽन्यत्रेति निष्पक्षपातं सत्यम्। योरपीया आमेरिकाश्च स्वीयभौतिक-सभ्यताप्रधानत्वात् नामतः "साम्यवाद"परं 'परिणामे विषोपमं' "बौलसेविजम-" नामधेयमङ्गीकृत्य

प्रतिक्षणं पराभवन्त इव दृश्यन्ते। यूरोपे अमेरिकायां च सामाजिकाशान्तिहेतुना कीदृशो भयंकरो जीवन-संग्रामः प्रचरति, कथमिव वा सामूहिकसुखाभावः, कीदृशी वा पारस्परिककलहकामना परकीयरक्तपिपासा वा समुज्जृम्भते—इत्यादीनां प्रबलं प्रमाणं तत्रत्यं समाचारपत्रमेवास्ति। अतो हि पाश्चात्यसभ्यतायाः प्रबलेन झञ्झावातेन पौरस्त्या सभ्यता न म्लानिमासादयेदिति नूनमस्माभिरवधेयम्।

---

## आहार-सम्पर्क-शुद्धिः।

—:o*o:—

सम्प्रति भारतीया आहारशुद्धिं सम्पर्कशुद्धिं च सर्वथा समुपेक्षमाणा इव दृश्यन्ते। प्रत्येकसम्प्रदाये आहार-सम्पर्कयोः कश्चन परिणामोऽङ्गीकृत एव पाश्चात्यशिक्षासम्पन्ना भिषग्वरा अपि आहारेण सम्पर्केण च रोगाणामुत्पत्तिं संक्रान्तिं च मन्यन्त एव। "यादृशमन्नं तादृशं मनः" इति जनश्रुति र्भारते बहुकालात् प्रचरति। आहारमनुसरति विचार इति सर्वे जानन्ति। आहारेणैव भीष्मपितामहसदृशानां महापुरुषाणामपि बुद्धिमान्द्यं महाभारते पठ्यते। मादक-कामोत्पादक—पदार्थानां सेवनेन काम-मोहयोराविर्भाव-स्तद्विरुद्धान च सेवनतस्तन्नाश इति लोकेष्वपि दिवानिशं निभाल्यते। सम्प्रति यूरोपीया विचारशालिनो विद्वांसोऽपि बुद्धेरुपरि आहारस्य बोभूयमान प्रभावमङ्गीकुर्वन्ति। अस्मिन्नेव वर्षे जनवरीमासस्यान्तिमसप्ताहे लन्दननगरे व्याख्यानं ददत् प्रसिद्धः पाश्चात्यो विद्वान् "मिस्टर जोसिया ओल्डफिल्ड" नामधेयः सुस्पष्टमुद्घोषितवान् यत्—* क्रूरस्वभावाः स्त्रियः पुरुषाश्च तत्तदुपयुक्ताहारतः सुशीला भवितुमर्हन्ति। उपवासद्वाराऽपि मानवस्वभावे परिवर्त्तनं सम्भवति।

---

* "He argues that everything wasaquestion of diet and hence the worlds future lay in the hands of the much maligned-cook, who should be trained to produce the melalian and specially atlught not to use an excess of salt which cedst premature old age"

*Reuter January 25th 1931*

# विहारस्य जागरणम्* ।

—*०*—

विहारो नाम प्रदेशो विश्वविश्रुतः। वैदिककालादारभ्य साम्प्रतं यावद् यावन्तो महापुरुषा विहारप्रान्ते प्रादुरभवन्, न तावन्त एकस्मिन् कस्मिन्नपि प्रदेश इति निर्विवादम्। अत्रैव प्रान्ते जनक-याज्ञवल्क्यादयो ज्ञानिनः, कपिल-गौतमादयो महर्षयः, गार्गी-मैत्रेयी-प्रभृतयो ब्रह्मवादिन्यः, सीतादयः सत्यः, बुद्धादयस्त्यागिनः, चाणक्यादयो राजनीतिज्ञाः, अशोकचन्द्रगुप्तादयः सम्राजः, मण्डन-वाचस्पति-उदयन-प्रभृतयो महाविद्वांसश्च प्रादुरभूवन्। मण्डनमिश्र-विषयकः "जगद्ध्रुवं वा जगदध्रुवं वा कीराङ्गना यत्र गिरो गिरन्ति। द्वारस्थ-नीडान्तरसंनिरुद्धा अवेहि तन्मण्डनमिश्रधाम" इतिश्लोकः कस्य सहृदयस्य चित्तं न चमत्करोति ? उदयनाचार्यस्य च "वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा यदि पथि विपथे वा वर्त्तयामः स पन्थाः। उदयति दिशि यस्यां भानुमान् सैव पूर्वा नहि तरणिरुदीते दिक्पराधीनवृत्तिः" इत्युक्तिः कं न विस्मापयति ? तस्यैव ईश्वरसम्बन्धे "ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्तसे, उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः" इत्यपि सुधियां विस्मयावहमेव।

साम्प्रतमपि सोऽयं विहारप्रान्तो रामावतार-बच्चा-शशिनाथ-गङ्गानाथ-बालकृष्ण-प्रमृतीनां जन्मदोऽपि सन् पत्र-पत्रिका-ग्रन्थरत्नादि-प्रकाशन-कर्मणि शयान आसीदिति बहवो मन्यन्तेस्म। किन्तु नितरां प्रसीदति चेतो यत् बनैली-राज्याधिपतिः श्रीमान् कुमारकृष्णानन्दसिंहशर्मा महोदयः सर्वोपरांरञ्जकत्वे सुप्रसिद्धां सचित्रामपि विचित्रां हिन्दी-मासिक-पत्रिकां गङ्गाम् सञ्चाल्य हिन्दी-भाषानुवादसहितानां चतुर्णामपि ऋग्यजुःसामाथर्ववेदानां प्रकाशनायोजनं च विधाय तमपि कलङ्कपङ्कं प्रक्षालितवान्। सनातनस्वरूपोऽपि ज्ञान-"गङ्गा"-प्रवाहः कृष्णानन्दकृपया कृष्णगढ़े प्रादुर्भूय न केवलं विहारं, भारतवर्षमेव वा, किन्तु सकलमपि संसारं पुनाति।

परमपूज्य-"गौरीनाथ"-कृपा हि 'गङ्गा'ऽवतारे प्रधानं निदानमिति न विस्मर्त्तव्यम्। श्रीमतः कुमारकृष्णानन्दसिंहबहादुरमहोदयस्य प्रधानामात्यः श्रद्धेयः श्रीमान् पण्डितप्रवर-गौरीनाथझा-महोदयो बहुविधराज्यकार्यसञ्चालन-भारं वहन् अपि साधीयस्या योग्यतया 'गङ्गा'-सम्पादनं करोति। महापुरुषोऽयं धर्मस्य प्रधानमवलम्बनं, सदाचारस्याद्वितीयमाश्रयस्थानं, त्यागस्य शरीर-धारिणी मूर्त्तिः, विद्याया जङ्गम आलयः, राजनीतेश्च प्रत्यक्षं रूपमिति बहूनां विश्वासः।

* सूर्योदयस्य सुप्रभातस्य च भूतपूर्वसम्पादकाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः संस्कृतज्ञानां सुपरिचिता एव सन्ति। बहुभिर्विद्वद्भिर्बोधिता एते महोदया अन्ये च विद्वांसो वैदिककालादारभ्य साम्प्रतं यावत् विहारप्रान्ते प्रादुर्भूतानां महापुरुषाणां गद्यपद्यात्मकं सचित्रं जीवनचरित्रं संस्कृतभाषया लिखितुं समीहन्ते। विहारस्थैः विद्वद्भिः, 'गङ्गा'-सञ्चालकैश्च कार्येऽत्र साहाय्यं प्रदेयम्। विषयेऽस्मिन् 'सूर्योदय'—संकेतेन पत्रव्यवहारो विधेयः।

—सम्पादकः।

'गङ्गा'-प्रधानसम्पादकानां पण्डितरामगोविन्दत्रिवेदिवेदान्तशास्त्रि-महानुभावानां सम्बन्धे नास्ति किमपि वक्तव्यम् । एते महोदया गङ्गायाः प्राणाः सन्ति । गङ्गायाः सर्वविधाऽपि समुन्नतिः श्रीमत एतानेव निर्विभर्त्ति । एतैर्विरचिता 'दर्शनपरिचय'-प्रभृतयः अनेके मौलिकग्रंथाः सन्ति हिन्दीसाहित्ये रत्नभूताः। एतेषां प्रधानसम्पादकत्वे गङ्गाया यावन्तः प्रवाहाः उद्गताः, ते सर्वेऽपि दर्शनीयाः सन्ति । गङ्गाया गङ्गाङ्कः अस्मत्प्रसंशनमतिशेते । स च सर्वैरेव स्वपार्श्वे स्थापनीयः । वेदाङ्कोऽपि गङ्गाया बहुविध-वैदिक-विज्ञान-विभूषितो भविष्यतीति बलवान् मे विश्वासः । वेदान्तशास्त्रिमहोदयैः हिन्दीभाषानुवादसम्वलितानां चतुर्णामपि वेदानां प्रकाशने सफलप्रयत्नैर्भूयतामिति परमात्मचरणसरसीरुहेषु सादरमभ्यर्थनम् ।

कृष्णानन्द-पदोद्भूता गौरीनाथ-दयाश्रिता ।
'गङ्गा' पुनातु भुवनं रामगोविन्द-सेविता ॥

श्रीविन्ध्येश्वरीप्रसादशास्त्री ।

---

## समालोचनम् ।

—:०:—

दशकुमार-चरितम्, साग्निक-श्रीजीवनरामशर्मलिखितया अन्वय कौमुदीव्याख्यया समुद्भासितम् । तस्यायं सविश्रुतचरितपूर्वोत्तरपीठिकात्मक प्रथमो भागः । मूल्यमाणकाष्टकम् । प्राप्तिस्थानम्—

श्रीजीवनरामशास्त्री साग्निकः, फतेहपुरम्, ( जयपुरम् ) ।

नाविदितमिदं केषाञ्चनापि साहित्य-विदां सहृदय-शिरोमणीनां यन्महाकविश्रीदण्डिप्रणीतस्य दशकुमारचरितस्य गद्यकाव्येषु कीदृशं स्थानं विलसतीति । "दण्डिनः पदलालित्य" मिति पद्यांशः सुस्पष्टं प्रमाणयति दशकुमारचरितनिर्मातु-र्मधुरकोमलकान्तपदावलीनां विरचने चातुर्य्यम् ।

ईदृग्विधं हृद्यतरगद्यविभूषितं काव्यं समीचीनायाः-कस्याश्चन टीकाया अभावेन भूषणविरहिता कामिनीव नाधिकं शोभतेस्म । यद्यपि प्राचीनास्टीकाः सन्ति बह्वस्तथापि तासां पदानां समीचीनतयान्वययोजने शैथिल्यमेव समवलोक्यते । इममेवाभावं मनसि कृत्य फतेहपुरस्थशेखावाटीसंस्कृतकालेजाध्यापकेन साग्निकेन श्रीजीवनराम-शास्त्रिणान्वय-कौमुदी नाम्नी महनीया व्याख्या व्यरच्यत । टीकेयं नितान्तं मनोहरा सरला पदानामन्वयसंयोजने स्वीयमभिधानं साधुतया चरितार्थयति । काव्येऽत्र यानि कानिचन सन्देहास्पदानि पदानि विद्यन्ते, तेषां व्याकरणोक्तरीत्या साधुं समाधिं प्रदर्श्य टीकाकारेण परीक्षार्थिनां विद्यार्थिनां नितरामुपकारविधात्री टीकेयमक्रियत । सम्प्रति मृतप्रायां सुरभारतीमुपजीवयन्तीयमन्वयकौमुदी कौमुदीव रसिकचकोराननुरञ्जयिष्यतीति नास्त्यत्र संशयितिलेशः । साहित्यप्रणयिनो विद्वांसः परीक्षार्थिनश्छात्राश्च सम्प्रार्थ्यन्ते-यत्ते टीकामिमां संगृह्य शास्त्रिमहोदयानां परिश्रमं सफलयन्त्विति—

श्रीसीताराम शास्त्री, मिश्रः, कलकत्ता ।

# कालिदासविषयको विमर्शः ।

## लेखक :—श्रीकृष्णदत्तशर्म्मा "ओझा" शौजावादः ।

अयि परामर्श-पारावार-पारदृश्वानः! सदासद्भावपूतात्मानः!! पाठक-वर्य्याः!!! भारतीभाषाऽऽन्दोलन-नितान्त-स्वान्तस्य समीक्षितसर्वप्रान्तस्य श्रीसूर्य्योदयस्य नवम-दशम-संख्यायामप्रकाशमितः श्रीकालिदासव्युत्पत्ति-प्राप्ति-प्रतिपादकः "कालिदास" इति शीर्षकात्मकः श्रीपण्डितहजारीलाल-शर्म्म-शास्त्रिणां लेखः साद्यन्तमध्यायि मया; परन्तत्र लेखे तैः शास्त्रिमहोदयैः केवलं लोकोक्तिरेव दर्शिता न च तत्र परामर्श-पूर्विका प्रसङ्गसङ्गतिः शास्त्रार्थविजय-प्रसङ्गोदन्तश्च ।

कालिदासप्रवृत्तिम्प्रदर्शयद्भिस्तैरित्यङ्कितम्—"एकदा कस्याश्चित्कन्यकाया अपराधहेतुना क्रुद्धेन महाराजभोजेन "एतदर्थं कश्चित् कुरूपोऽतिनिर्धनो मूर्खश्च वरोऽन्वेषणीयः" इति वाक्ये तु ओमिति, भविष्यत्येव खल्वियमपि जनश्रुतिः, परमत्रेति विवेच्यम्, प्रथमन्त्वसौ भोजराजकालीनोऽपि नाऽऽसीत् य इत्थं भोजसम्बन्धेन विवर्ण्येत । स तु अब्दसञ्चालकस्य विक्रमाऽऽदित्यस्य विद्वत्समिति-नवरत्नशिरोमणिः समभूत् । यथाऽत्र प्रमाणम्—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायाम्
रत्नानि वै वररुचिर्नव विक्रमस्य ॥

अपरञ्च—उक्तवाक्ये कन्यकायां भोजराजस्य मन्योर्निदानमेव नो दर्शितम्, येन श्रीमतो भोजस्यैतादृशी विदुषी सुता मनोऽमोदयित्री स्वस्य च महाराजस्योदारविचारलवित्री कन्याऽपराधज-प्रकोप-व्यवहृति-परिणतिः सम्भाव्येत । यतोऽयं प्रचुरौजाः भोजः बाल्याच्छान्तः सात्त्विकः कोविदाऽऽतिथ्य-कारकः विद्वत्समितिस्थः सदा गाम्भीर्य्यनिषेवकश्चासीत् । विषयेऽत्र विवेचयता मयाऽस्य स एव छात्रवृत्तिकोऽनेहाः स्मर्यते । यतो मानुषीयो निसर्गः कौमार्यादेवावगम्यते । मृते भोजपितरि तृष्णया भ्रातृराज्यमधिकर्तुमस्य पितृव्येन मुञ्जेनादिष्टा दूता यावदेनं व्यापादनाय महारण्यं नीत्वाऽस्मै मुञ्ज-व्याहृतमसुहारकमाकूतं व्याजह्रुः, तावदनयजनितमाकस्मिकं स्वीयं मरणं निशम्यापि सर्वथा मृति-भीत्यभीतः सन्न जहौ नैजं प्राकृतिकं मौदार्य्यं

गाम्भीर्य्यञ्च, प्रत्युत अम्लानवदनः स्वावयवच्छेदननिसृतासृङ्मस्यङ्किते पत्रे इत्यौदार्य्यपूर्णामनुत्तमां योग्यतां प्रचकटे स्वीयं पितृव्यं प्रति यत् मान्धातादिना सहेयमवनिर्नाव्रजत् नूनम्मन्येऽत्र त्वया साद्धर्मवश्यमेष्यतीति।

पाठक महाभागाः! अवधारयन्तु भवन्तोऽत्र बालस्यापि भोजस्य कीदृशः प्राणप्रणयशून्यः औदार्य्य गाम्भीर्य्य-रसमृदुलः शान्तिनिषेवितो नैपुण्यनिस्यूतः परमोच्चकोटिगतो भावः। सद्गुणात्मके विद्वद्धितकरे धीरे तत्र भोजे विदुष्यै कन्यकायै मूर्खकुरूपनिर्धनवरप्रदानानिष्टोक्तिसम्भावना क्रियते किम्? अत्र नहि नहि नहीति विना नान्यदुत्तरं सम्भाव्यते किञ्चित्। यतो विद्वद्भिर्विद्वांसो मूर्खैश्च मूर्खाः सदाऽऽद्रियन्त इति लोकव्यवहारप्रथा वरीवर्ति, किमतिपल्लवितेन। उक्तवाक्योक्तस्तु लेखकस्याजागलस्तनस्येवेति।

तथाच—कियदहनि व्यतीते सति विद्यावत्या अतिपण्डितया राजपुत्र्या सह कालिदासस्य पाणिपीडनमभूत्। अत्र च लेखप्रवरैस्तैः शास्त्रार्थविजयप्रसङ्गप्रदर्शनमन्तरा राजपुत्र्या सह कालिदासस्योद्वाहो निरूपितः। यतो राजपुत्री सेति प्रतिज्ञां प्रचक्रे—"यो मां जेष्यति शास्त्रार्थे स मे भर्ता भविष्यतीति"।

अपिच—विद्यावती च यदयं पण्डितो मूर्खो वेति ज्ञातुमेकान्तसम्भाषणे "अस्ति कश्चिद्वाग् विशेषः" इत्यवदत्। पाठकाः! अत्र वाक्ये मूर्खोऽयं पण्डितो वेति कालिदास इति राज्ञान्तिं राजपुत्र्या विद्वत्तमाया मुखाद्योऽनुयोगो विहितः पण्डितमहोदयैः सोऽप्रासङ्गिक एव शास्त्रार्थस्य साङ्केतिकत्वात्। पण्डितपुङ्गवी राजपुत्री कालिदासस्य भाषणेन योग्यतया च सर्वथाऽपरिचिताऽऽसीत्। अपरिचितया तद्वाण्या योग्यतया च कथं सा कलिदासे प्रश्नोऽयमकार्षीत्। यदस्ति कश्चिद्वाग्विशेषः" (वाचि वाण्यां विशेषोऽन्तरं कश्चिदस्तीति प्रश्ननिर्गलितम्) यदा काशीतः परावृत्य राजपुत्र्या आवृतकपाटमुपेत्य "अनावृतं कपाटं देहीति जगाद तावत्सा तस्मिन् "यदस्ति कश्चिद्वाग् विशेषः" प्रश्नमिमं प्रचक्रे यस्मिन् स प्रश्नस्य प्रतिपदादिमाक्षरं गृहीत्वा त्रीणि काव्यान्यरीरचत् अतोऽत्रेति प्रश्नोऽनवसर एव।

अन्यच्च—कालिदासस्तां प्रति न किमपि जगाद। तदा विद्यावती स्थूलबुद्धिरयमिति ज्ञात्वा पादप्रहारेण तमताडयत्। स च पादप्रहाराभिहतो देवीमन्दिरस्याधः पपात। यद्यपीयमस्ति जन श्रुति, स्तथापि लेखकवर्य्यैरिति लोकोक्तिं सन्दर्श्य पण्डितपुङ्गव्या विद्वत्तमाया विद्यावैदग्ध्यं पातिव्रत्यधर्म्मश्च सर्वथाऽभिभ्रंशितः कलङ्कितश्च। अग्रे मेधाविनः प्रमाणम्। त एव समीक्ष्यात्र समाद्धतु। अलमत्रेति।

---

# साहजहाँ-नृपते राजनीतिः।

ले०—पं० हजारीलालशर्मा शास्त्री विद्यालङ्कारः ( सुरस्थलम् )

———:o:———

## हकीकतरायस्य प्राणाऽऽहुतिः

परिवर्त्तनशीलोऽयं संसारः। न जाने कियन्तोऽद्यावधि क्षितीशाः विविधान् भोगान् भुक्त्वा भारते देशे क्षणभङ्गुरान् प्राणानत्याक्षुः। प्राचीनकाले भारतम् नाम देशो हिन्दुनरेशैरधिकृतः। परं कालचक्रवशात् यवनसाम्राज्यं बभूव। यवनानां लोदिशैयदखिलजीमुगलप्रभृतयो बहवः ( कतिपये ) वंश्या भारतवर्षे शासकत्वमधिगताः। अस्तु। मुगलवंशे बाबरनृपस्य प्रपौत्रः अकबरनृपतेः पुत्रः साहजहाँमहोदयः स्वशासकत्वे यादृशीं राजनीतिं चकार तस्याः ( एकाम् अद्भुतां घटनां लिखित्वा ) कथारूपेण किंचिद्दिग्दर्शनं कारयामि।

साहजहाँराज्ये श्यालकोटवास्तव्यो वैश्यवंशावतंसो रायपदविभूषितः भागमलनामधेय एक वैश्यः प्रतिवसतिस्म। तस्य "कोरा" नाम्नी भर्या आसीत्। हकीकतरायनामा पुत्रो बभूव। स ( हकीकतरायः ) एकस्मिन् राजकीयविद्यालयेऽध्ययनार्थं गच्छतिस्म। तत्र काजीपदसमलङ्कृत एको यवनोऽध्यापयामास।

एकदा काजीमहाशयस्यानुपस्थितौ सर्वे यवनबालकाः परस्परमूचुः। भोः क्रीडनार्थं बहिर्गन्तव्यम्। यतो हि काजीमहाशयस्तु अवकाशं ( छुट्टी ) गृहीत्वा कुत्रचित्-गतो लक्ष्यते। अतः समग्रदिनं बाढं क्रीडयिष्यामः।

अपरः प्रोवाच। अवश्यं गमिष्यामः। परमयं हिन्दुबालको हकीकतरायो न चलिष्यति। अतोऽयम् आगताय काजीमहाशयायाऽऽस्माकीनामुद्धतां ( शरारत ) निवेदयिष्यति।

तृतीयोऽवदत्। रे गच्छन्तु! अयमपि चलिष्यति। रे हकीकतराय! गच्छत्वमपि।

हकीकतराय आह नाऽहं गमिष्यामि। अहं त्वत्रैव स्वपाठं स्मरिष्यामि। सत्यं दुर्गाभवान्याः सपथं करोमि, सत्यं यूयं विश्वसिथ।

यवनबालकाः—धिक् तव दुर्गा देवीम्। चल त्वम्।

हकीकतरायः—धिक् युष्माकं रसूलजादिदेवीम्। नाऽहं कदाऽपि गमिष्यामि।

यवनाः—अहो नष्टः खलु इसलामधर्मः ! हा किं कुर्मः !!

सर्वे—( आगामिदिने काजीमहाशयमागतं विलोक्य )

अहा । अनेन हिन्दुबालकेन रसूलजादिदेव्या निन्दा कृता । इसलामधर्मो नाशितः ।

काजीमहोदयः—(हकीकतरायं दृष्ट्वा ) सत्यं रे हिन्दुबालक ! त्वया रसूलजादिदेवी निन्दिता ?

हकी०—एभिः प्रथमं दुर्गाभवान्या अस्माकं देवताया निन्दा कृता ।

का०—(सक्रोधम्) रे दुष्ट ! (काफर) दुर्गा तु पाषाणस्य भवति । रसूलजादिदेवी तु साक्षात् ईश्वरमयी ( खुदा ) भवति । ( विचार्य ) गच्छ न्यायालये प्राणैर्विना त्वां कारयिष्यामि ।

का०—भो न्यायालयाऽध्यक्ष ! "अनेन हिन्दुबालकेन०" इत्यादिसमाचारं तस्मै निवेदयति ।

न्या०—( हकीकतरायं दृष्ट्वा स्वगतम् ) अहो कष्टं निरपराधिने द्वादशवर्षीयेऽस्मिन् बालके कथमन्यायमाचरामि । यदि एनं न दण्डयिष्यामि तर्हि सर्वे यवना मामाक्रोत्स्यन्ति । ( विचार्य प्रकाशम् ) अस्तु एवं कथयामि । भो भो यवना लवपुरीयन्यायालये गन्तव्यम्, तत्र प्रान्तीयन्यायाधिपतिर्यथा तथा निर्णेष्यति । अहं भवतां वृत्तपत्रिकां ( मिसल ) लिखित्वा तत्र प्रेषयामि ।

का०—अस्तु, त्वं विभेषि । तत्राऽयं प्राणदण्डं लप्स्यते । गच्छामः ।

कर्मचारी—भो आगच्छन्तु येऽत्र न्यायमाकारयितुमागताः ।

का०—( शीघ्रं गत्वा ) भो "अनेनहिन्दु०" इत्यादि कर्णे कथयति ।

न्या०—भोः सर्वं प्रकटय । यतो हि समाचारोऽतिभयावहः वर्त्तते ।

का०—[ प्रकटम् ] भो "अनेन०" इत्यादि पठित्वा कथयति—अतोऽस्मै प्राणदण्डो दातव्यः । यदि अयं यवनो भवितुं स्वीकुर्यात्तदापि इसलामधर्मः सुरक्षितो भवेत् । प्राणैश्च मुच्येत । अत्र भवन्तो विचारयन्तु—इति कथयित्वा वहिर्गच्छति ।

न्यायाधिपतिः—( स्वगतम् ) अति सुन्दरोऽयं बालकोऽस्यैवेतौ वृद्धौ दीनावस्थौ मातापितरौ भवतः । अस्तु किं प्रयोजनम् अस्माकम् । निर्णयकर्त्तारो वयम् । पुस्तकं ( ताजीरातहिन्द ) पठित्वा-( प्रकटम् ) सत्यं रे हिन्दुबालक ! त्वं प्राणदण्डं लप्स्यसे ! ( मानसे विचार्य ) रे त्वं यवनो भव, प्राणास्ते रक्षिताः स्युः ।

हकी०—नाऽहं प्राणदण्डात् विभेमि । यदि सत्यं ममापराधस्तर्हि अवश्यं प्राणैर्विना क्रियताम् । न स्वधर्मं त्यक्ष्यामि । यतः "धर्मो रक्षति रक्षितः" ।

न्या०—अहो बालकस्य धृष्टता । रे मूर्ख ! कथं न मन्यसे यत् तव वियोगेन ते मातापितरौ प्राणान् हास्यन्ति ।

ह०—श्रीमन् ! सत्या भवदुक्तिः । परं किं करवाणि । मृत्युः खलु सर्वान् जिघांसति । यदि मयि यवने मृत्युर्न भवेत् तर्हि यवनजातिरेव श्रेयसी । भविष्यामि च यवनः, परमेवं न भवति । अनित्योऽयं देहः । धर्मो० इत्यादि पुनः पठति ।

भागमलरायः—पुत्र ! हठं मुच । मातापित्रोः वचनं मन्यस्व, त्वं यवनो भव । त्वयि यवने सति त्वम् अस्माकं अक्षिभ्यामन्तालक्ष्यं न गमिष्यसि ।

ह०—( पादयोः पतित्वा ) पितः ! एकवारं द्विवारं वा कथयन्तु, अहन्तु स्वसत्यसंकल्पात् न प्रपतिष्यामि ।

पितरौ—हा विधेः कर्कशत्वम् ! मन्दभागिनो वयम् । सत्यं, दैवो दुर्बलघातकः । इति उच्चैरुदन्ति ।

( २ )

## काजी महोदयस्यागमनम्

काजी०—( आगत्य ) भो भो अन्यायम् अन्यायम् ! यवनसाम्राज्ये सति इसलामः--धर्म-नाशकः हिन्दुः अद्यावधि न हतः । ( अग्रेगत्वा ) भो विलम्बः किं क्रियते ( विचार्य ) यद्येनं न्यायपतिर्मोचयति तर्हि अहं साहजहाँ-नृपतेः पार्श्वे गत्वा एनं दण्ड्यं विधास्यामि ।

न्या०-(आकर्ण्य) अहो सत्यम् । अयं संशये पातयिष्यति । परं विनैवापराधं हन्यतेऽयम् । ( शोचयित्वा ) भोः ! चाण्डाला आगच्छन्तु । अस्य मातापितरौ बहिः निस्सारयन्तु ।

पितरौ—हा पुत्र ! हा कुलदीपक ! इतिरुदन्तौ वहिर्गच्छतः ।

( चण्डाला न्यायाधिपतिनिर्देशेन हकीकतरायं श्मशाने नयन्ति )

( ३ )

## स्थानं श्मशानम्

चण्डालाः—भो भो अनेनहिन्दुबालकेन रसूलजादिदेव्या निन्दा ( गाली ) कृता । तदपराधहेतुना न्यायाध्यक्षाज्ञयाऽयं हिन्दुर्हन्यते । ( खड्गं गृहीत्वा ) भो हकीकतराय ! सन्नद्धो भव । साम्प्रतं हि त्वां यमपुरीं प्रहिण्मः, स्मरस्वेष्टदेवम् ।

हकी० "धर्मो रक्षति रक्षितः" इतिपठित्वा "नाऽहं बिभेमि" इत्युच्चैर्भाषते ।

( चाण्डाला खड्गेन हकीकतरायस्य शिरः पृथक् कुर्वन्ति )

× × × ×

काजी०—इसलामधर्मनाशकं दुष्टं मारयित्वा अधुना ममात्मा सुखी संवृत्तः, साम्प्रतं श्यालकोटनगरं गच्छामि । इत्युक्त्वा गच्छति ।

भागमलराय इन्द्रप्रस्थं गत्वा स्वपुत्रहत्याकाण्डं साहजहाँ—नृपाय निवेदयति, भूपो विलपति ।

राजा०—अहो ममराज्येऽन्यायम् ! द्वादशवर्षवयस्कः-एको बालकः साधारणापराधद्वारा हतः । भो भागमल ! शान्ति लभस्व । किं करवाणि, ये मृतास्ते पुनर्नायान्ति । त्वं मां पुत्रत्वेन मन्यस्व । पुत्र इव त्वां सेवयिष्यामि । ईषदपि कष्टं मा अनुभव । भगवत् कृपया तव अपरोऽपि पुत्रो भविष्यति । अस्तु अहं लवपुरं गच्छामि तत्र न्यायाधिपतिं सान्वयं काजीमहाशयं चोन्मूलयिष्यामि । भागमल ! तव पुत्रशोकेन दंदह्यते मम हृदयम् । यावत् काजीं न्यायाधिपतिं च हत्वा न निवर्तयिष्ये तावत् न जलपानं करिष्यामि । त्वं सुखेनात्र निवस । ( इत्युक्त्वा लवपुरं गच्छति )

( ४ )

## स्थानं लवपुरम्

न्यायाधिपतिः—महाराज ! कथमागमनं जातं श्रीमताम् ?

राजा—कुशलं भवताम् । वयं लवपुरवायुसेवनार्थमागताः ।

न्या०—महाराज ! सर्वं कुशलं श्रीमतां कृपया ।

रा०—भो अस्मिन् वर्षे कोऽपि नूतनः समाचारोऽपि जातः ?

न्या०—महाराज ! जातः ।

राजा—किम् कार्यम् अद्भुतं जातं श्रावय ।

न्या०—( हकीकतरायस्य सर्वं हत्याकाण्डं कथयति )

राजा०—भोऽतिश्रेष्ठं कर्माऽकारि भवद्भिः । परं मे एका इच्छा यत् भवद्भिरिसलामधर्मोरक्षितः । अतो भवन्तं काजीमहाशयं च पुरस्कारेणानुग्रहीतुमिच्छामि ।

न्या०—महती कृपा श्रीमताम् ।

राजा—अतः सकुटुम्बं काजीमहाशयम् आह्वयन्तु भवन्तोऽपि गच्छन्तु रावीनदीतीरे । तत्रैकां नावम् आरुह्य नदीमध्ये भ्रमणं कुर्वन्तु यावदहं पुरस्कारं गृहीत्वाऽऽगच्छामि ।

न्या०—यदाज्ञापयति महाराजः!

(५)

स्थानं रावीनदीतीरम्

काजी—( नावम् आरोहति ) अहो ईश्वरस्य कृपा।

न जाने महाराजः कियता पुरस्कारेण मामनुग्रहिष्यति! मयाऽतिसुचारु कर्मानुष्ठितम्।

न्या०—भोः कर्णधार! काजीमहाशयोऽपि सकुटुम्बः तरिकायामारूढः। अहमपि आरूढोऽस्मि। त्वं जलमध्ये नावं नय।

कर्णधारः—यदाज्ञापयति-( नावं दूरे नयति )

राजा—भोः कर्णधार! सर्वे आरूढास्तरिकायाम्?

कर्ण०—महाराज! सर्वे सानन्दं नदीभ्रमणं कुर्वन्ति।

राजा ( संकेतं कृत्वा ) भो कर्णधार! नावं दूरदेशं नीत्वा पुनरागच्छ· ममपार्श्वे।

का०—( सहसैव तरिकामज्जनं ज्ञात्वा ) भो मृता मृता ईश्वर! [ अल्लाखुदा ] पाहि पाहि ( इति कथयति )

राजा ( तरिकाया निमज्जनं दृष्ट्वा ) भोः किं जातम्! हन्त न्यायकारी भगवानीश्वरः। अघटनघटनापटीयसी माया (तत्रत्यान् दर्शकान् दृष्ट्वा)

भोः सत्यमुक्तम्—"नहिचलति नराणां भाविनी कर्मरेखा" स्व पापप्रभा· वात् हि न्यायपतिः सकुटुम्बः काजीमहाशयश्च नष्टः। नाऽत्रकस्यापि दोषः स्वस्वगृहे गच्छन्तु। वयमपि इन्द्रप्रस्थं गच्छामः। ( सर्वेगच्छन्ति )

---

# शोकप्रकाशः।

---

( १ )

सहसाऽशनिपातदारुणं किमिदं हा विदुषामुपस्थितम्।
विधिनानिखिलेप्सितप्रदो यदयं कल्पतरुर्निपातितः॥

( २ )

अधुना दयितेन वञ्चिता प्रभुनारायणसिंहशर्मणा।
बहुराजवृषा विराजते न वनी केसरिणेव मेदिनी॥

( ३ )

वसुधे परुषं नु जीवनं विधिना किं विहृता प्रसन्नता ।
ज्वलति स्मरणेन्धनोथवा पृथिवीपालवियोगपावकः ॥

( ४ )

विरहेऽस्य गुणानुरागिणो मुदिरस्येव मयूरमालिका ।
अतिमात्रनिवृत्तनर्त्तना हृदयाली गुणिनां विमुह्यति ॥

( ५ )

करुणे पसराशु शोक हे व्रज मा मोह तनुष्व पौरुषम् ।
हृदयं धिषणाऽथ चेतना दलति भ्राम्यति हन्त मीलति ॥

( ६ )

हृदयेऽत्र चिरं विलोचने तनुतं सन्ततवारिवर्षणम् ।
इयता खलुखिन्नताऽस्यनो वड़वावह्निशिखेव शाम्यति ॥

( ७ )

दिवसेषु दिवाकरः पुनः कलनीयो रजनीषु चन्द्रमाः ।
नयनैरधुना तमोमयैः क नु काशीपतिरेष लभ्यते ॥

( ८ )

सममेव गुणानुरागिता भवता किञ्च वदान्यता गता ।
नृप केवलमत्र शाश्वती विरहाद्राविशतीव वेदना ॥

( ९ )

विरहेण तवोत्तरोत्तरं मलिना मुञ्चति हा न चेतना ।
हृदये भृशवेदनाकुले स्पृहणीयं ननु मोहभेषजम् ॥

( १० )

पृथिवीपुरुहूत शोच्यते शिवकैवल्यमुपेयुषो न ते ।
वयमद्यकमाश्रयामहे गुणिचिन्तामणिहानिविह्वलाः ॥

( ११ )

शोकानां नृपवर पौरुषे विलीने पुण्येषु प्रतिविधयस्तदुद्भवेषु ।
अस्माकं किल परितोषकारणं यत्प्रत्यक्षस्तवतनुजस्तनुर्द्वितीया ॥

श्रीकाशीनाथशर्माद्विवेदः ( सुधीसुधानिधिः )

# संस्कृतभाषाया अधोगतिः ।

ले०—श्रीनोखेलालशर्म्मा, ठक्कुरः काव्यतीर्थः ।

विदितचरमेवैतद्गीर्वाणवाणी-विलसितहृदयानां प्रेक्षावतां यदियम् सकल-भाषाशिरोरत्नभूता संस्कृतभाषा आदिकालादद्यावधि माननीय-ज्ञान-विज्ञानयोः समस्तधारां साकल्येन स्वकलेवरे वहन्ती सर्वानहरहश्चमत्कुर्वाणातिष्ठतीति ।

यैषा देववाणी पूर्वस्मिन् काले भारतीयानां मातृभाषा प्रचलितासीत् सा अद्यत्वेऽत्यन्तसंकुचितक्षेत्रा मृतभाषेति व्यपदिश्यमाना कथं नास्माकम् लज्जां जनयति । को वा भारतीयोऽस्या ईदृशीं मुमूर्षवस्थां दर्शंदर्शं नितरां न जिह्रेति । पश्यन्तु भवन्तः, अद्यापि बालीद्वीपे संस्कृतभाषैव बाहुल्येन प्रचरति । ये चास्याः क्लिष्टत्वमुपन्यस्यन्ति, अस्याः प्रचारभाषायोग्यताविरहत्वमुपपादयन्ति, एनां वा अमृतफलदात्रीं मृतभाषेत्याचक्षते ते तत्र गत्वा निर्भ्रान्ता भवन्तु । किंकर्त्तव्यविमूढैरस्माभिः परित्यक्ता देववाणी बालीद्वीपे निर्वासितेव निवसति ।

अहो, धिगस्मान् ! यैः राशीकृतान्यपि पुस्तकरत्नानि विनाशितानि । पूर्वं तु नरपिशाचैः यवनैः शतसहस्रलक्षसंख्यकानि भस्मसात्कृतानि पश्चात् यान्यवशिष्यन्ति तानि पाश्चात्यलोकैः स्वगृहं प्रापितानि । वर्लिन-नाम्नि नगरे संगृहीतानां संस्कृतपुस्तकानां सूचीपत्रस्य मूल्यम् सार्द्धैकशतमुद्रेति ।

धर्मप्राणा आर्यजातिरित्यस्माकम् गर्वोक्तिः । पृच्छामस्तावद्भोः कुत्र ते धर्मः, यस्य मूलम् श्रुतिरेव श्रुतिमात्रस्य गोचरा न नयनयोः, यस्य स्तम्भः स्मृतिरेव केवलं स्मर्यते न कात्स्र्येन द्रष्टुं पठितुं वा शक्यते । हन्त भोः, ईदृग्दैन्यमापन्नाः स्मः ।

संस्कृतभाषायाः पठनपाठनशैली चापि नितरां दूषितेति । व्याकरणशास्त्रेऽनुचितं महत्त्वम् दत्तमस्ति । भाषाज्ञाने व्याकरणस्यापेक्षा नूनमस्ति, किन्तु तस्मिन्नेव समग्रशक्तिव्ययो नितान्तमनुचितः । संस्कृताध्येतॄणां पठनपाठनक्रमोऽपि संशोधनमपेक्षते । अयं कार्यभारो महान्, केवलं विद्वद्भिरेव चिरप्रयत्नेन सम्पादयितुं शक्यः । इति तेऽत्र दत्तावधानाः भवन्तु इति ।

# काम-निवेदनम्।

—ॐ:०:ॐ—

( १ )

ऋतेन वर्त्तनं श्रेयो जगदीश्वर ! मन्महे।
परं कालवशादद्य जानीमस्तदसंभवम् ॥

( २ )

न कामयामहे नाथ ! मृतेन किल जीवनम्।
जीवनार्थं हि तद्याच्यं याचनावसरे मृतिः ॥

( ३ )

ईहामहे न वा नाथ ! प्रमृतेनाऽपि जीवनम्।
द्विजाणां प्राणरक्षायै गणानां यत्र मारणम् ॥

( ४ )

न च सत्यानृतेनाऽपि वाञ्छामो नाथ ! जीवनम्।
अनृतेन कियल्लब्ध्यै कार्यः सत्यस्य सङ्करः ? ॥

( ५ )

न कुसीदेन वाञ्छामो वर्त्तनं, तत्र संभवि।
कियद्धना वयं ? येषां कुसीदेनैव वर्त्तनम् ॥

( ६ )

कुतः पुनः श्ववृत्त्या तु जीवनं कामयामहे ?।
त्वत्तो लब्धद्विजात्वा यामः कुक्कुरतां कथम् ? ॥

( ७ )

न कुशूले न च कुम्भ्यां न च त्र्यहार्थे न वा श्वोर्थे।
संचिन्वीमहि धान्यं यद्यन्वहममृतमेव लभ्येत ॥

( ८ )

मुग्धा वयं विदग्धा वा दीनबन्धो जगत्पते !।
भूतलेऽप्यमृतेनैव जीवनं कामयामहे ॥

श्रीमाधवप्रसादशर्मा, ( देवकूटोपाधिकः )।

( नेपालप्रान्त–पालपा। )

प्रकृतिर्यदा स्वभावतः परिणममाना स्वपरिणामप्रभावं चिन्मये पुरुषे आसञ्जयति, तदैव चिज्जडग्रन्थिरूपस्य जीवस्योत्पत्तिर्जायते, कारणशरीरस्य च तदैवाविर्भावः । इत्यत आदिसंस्कार एव जीवस्य कारणशरीरात्मक-जीवत्व-सृष्टे र्निदानं निगद्यते । मध्यमीमांसादर्शने विज्ञानमिदं स्पष्टतः प्रतिपादितम्—

"चिज्जडग्रन्थिर्जीवः" इति ।

प्रकृतिर्हि स्वभावादेव नित्यपरिणामिनी । तस्याः परिणामस्य सीमस्थले-द्वे स्तः । एकश्च पूर्णसत्त्वमयः सीमा द्वितीयश्च पूर्णतमोमयः सीमेति । जगज्ज-नयित्री प्रकृतिर्यदा पूर्णसत्त्वावस्थातः परिणममाना तमोऽभिमुखी भवति न तदा जीवोत्पत्तिर्जायते । यतो हि तदानीं तत्र चिन्मयभावस्य प्राधान्यं विराजते । यदा तु प्रकृतिः पूर्णान्धकारमये जडभावापन्ने परां काष्ठामधिरूढे तमोगुण-परिणामे प्रथम-परिणाममासादयति । फलतस्तमोगुणस्य चरमं—सीमानमध्य-स्ता प्रकृतिर्यदा पुनश्चिन्मयभावाभिमुखी भवितुं प्रथमं परिणाममासादयति, तदैवान्तराले कियन्तं क्षणलवलेशमासाद्य यत् चेतन प्रतिबिम्बं जडे आसज्जते, तन्निमित्तमाश्रित्य महोर्मिव्यग्रे महार्णवेऽनन्तचन्द्रबिम्बवत् असंख्याता जीवाः स्वभावत एवाविर्भवन्ति । सैव चिज्जडसंयोगतः समुत्पद्यमाना ग्रन्थिरेव जीव-शब्दवाच्येति विभावनीयम् ।

तमसः सकाशात् प्रथमपरिणामेन सह प्रथमोद्भिज्जजीवपिण्डः कथमुत्प-द्यत इति दैवीमीमांसाऽपराख्यस्य मध्यमीमांसादर्शनस्यानेन विज्ञानेन मनागा-भासीभवति । अस्मिंश्च प्रथमपरिणामे यो हि चिदाभासाविर्भावः स एव जीवान्तः-करणस्य प्राथमिकी सृष्टिः । अस्यां दशायां या चिज्जडग्रन्थिरुदेति सैव जीवस्य जीवत्वम् । तत्र च यो हि प्रथमः संस्कारः स्वतः समुदेति स एव स्वाभाविको जीवस्य कारणशरीरोत्पादक आदिसंस्कारो निगद्यते । तस्य च स्वाभाविकस्य संस्कारस्य सम्बन्धोऽविद्याविद्याभ्यामुभाभ्यामपि प्रकृतेः स्वभावाभ्यां सह विद्यते । तत्राऽविद्यात्मको हि प्रकृतिस्वभाव एकतो जीवसृष्टिं करोति, तरङ्गस्य द्वितीय-सीम्नि च जायमानो विद्या भूत्वा जीवान् विमोचयति । यतो हि स्वाभाविकः संस्कार आत्मन ऊर्ध्वगामिनीं क्रियां कुर्वन् जीवान् विमोच्यैव विलयं गच्छति ॥ १४४ ॥

लिङ्गशरीरेण सह तत्सम्बन्धं ब्रूते—

**तन्नैसर्गिकगतिः सूक्ष्महेतुः ॥ १४५ ॥**

स्वभावतः परिणममानायां प्रकृतौ चिज्जडग्रन्थेः प्राथमिक्यां क्रियायां

जायमानायां यत् किञ्चिद्भवति तस्य वर्णनमितः पूर्वस्मिन् सूत्रे विहितमेव । तेनैव स्वाभाविकेन परिणामेन सञ्जाततरङ्गा प्रकृतिः स्वतोऽग्रे संवर्द्धमाना लिङ्गशरीरं समुत्पादयति । प्रथमतो महत्तत्त्वं चित्कलासम्बन्धत आविर्भवति यच्च प्रधान-तत्त्वमप्युच्यते । द्वितीयस्मिंश्च स्वाभाविके परिणामेऽहंतत्त्वमाविर्भवति । यतो हि तदानीमेव कारणशरीरी जीव आत्मानमद्वैतब्रह्मसत्तातः पृथक्त्वेनानुभवितुं समर्थो भवति । अहंतत्त्वमेव जीवस्य जीवत्वं निर्धारयति । ततश्च पञ्चानां सूक्ष्मभूतानां सृष्टेः पार्थक्येन सह मनसः पञ्चानां ज्ञानेन्द्रियाणाञ्चोत्पत्तिर्जायते । तदैव प्राणाः कर्मेन्द्रियाणि च सम्भूय जीवं कर्मशालिनं विदधति । इत्थञ्च प्रकृतेः स्वाभाविकक्रियया प्राकृतिकस्तरङ्गः पुरतः संवर्द्धमान ऊनविंशतितत्त्वात्मकं लिङ्गशरीरं निर्माति । यथा च केचिदाहुः—"ऊनविंशतिमुखः पुरुषः" इति ।

विज्ञानमिदमन्यथापि ज्ञातुं शक्यते । तथा हि—प्रकृतेः प्रथमे परिणामे स्वत एवानन्दमयकोशवत् कारणशरीरमुत्पद्यते । ततश्च स्वभावतः परिणामिनी प्रकृतिस्तस्यैव केन्द्रस्याश्रयेण विज्ञानमय-मनोमयप्राणमयकोशात्मकं लिङ्गशरीर-मुत्पादयतीति ॥ १४५ ॥

प्रसङ्गतो भोगेन सह सूक्ष्मशरीरसम्बन्धं निदर्शयति—

तत्र भोगः ॥ १४६ ॥

सूक्ष्मापरपर्य्यायं लिङ्गं शरीरं जीवेभ्यो भोगसौविध्यं सम्पादयति । पञ्च-तन्मात्राशब्दवाच्याः शब्दस्पर्शरूपरसगन्धाः पञ्चसूक्ष्मभूतापरपर्य्यायाः पञ्च ज्ञानेन्द्रियाणि मनश्चेत्येतैर्युक्तो जीवो वस्तुतो भोक्ता सम्पद्यते । यतो हि विनाऽन्तःकरणं न कस्यापि वस्तुनोऽनुभवो भवितुं सम्भाव्यते । उक्तञ्च "आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः" इति ॥ १४६ ॥

इदानीं विशेष-परिणामफलं ब्रूते—

तत्तीव्रवेगात्स्थूलम् ॥ १४७ ॥

कारणशरीरत आरभ्य सूक्ष्मशरीरावधिर्यः प्रकृतेः परिणामः स च स्वतः साधारणरूपतयैव भवति ॥ परन्तु स्थूलशरीरस्य कृते जायमानः प्रकृतेः परिणामो विशेषेणैव सम्पद्यते । श्रुतिस्मृतिषु चास्य बहुशः प्रमाणान्युपलभ्यन्ते ।

"वदन् वाक्" "शृण्वन् श्रोत्रम्" इत्यादि श्रुतिः ।

श्रीमद्भागवते विराट्पुरुषस्याभिमानतो जगदुत्पत्तिप्रसङ्गतोऽस्य सिद्धा-न्तस्य स्फुटं विवेचनमुपलभ्यते । यथा—

अन्तः शरीरमाकाशात् पुरुषस्य विचेष्टतः ।
ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥
प्राणेनाक्षिपता क्षुत्तृडन्तरा जायते विभोः ।
पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥
मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ।
ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥
विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ।
जले चैतस्य रुचिरं निबोधः समजायत ॥
नासिके निरभिद्येतां दाधूयति नभस्वति ।
तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥
यदात्मनि निरालोकमात्मानञ्च दिदृक्षतः ।
निर्भिन्ने अक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥
बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ।
कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥
वस्तुनो मृदुकाठिन्यलघुगुर्वोष्णशीतताम् ।
जिघृक्षतस्त्वग् निर्भिन्ना तस्यां रोममहीरुहाः ॥
हस्तौ रुरुहतुस्तस्य नानाकर्म-चिकीर्षया ।
तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम् ॥
गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् ।
पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः ॥
निरभिद्यत शिश्नो वै प्रजानन्दाऽमृतार्थिनः ।
उपस्थ आसीत् कामानां प्रियं तदुभयाश्रयम् ॥
उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ।
ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ इति ॥

स्वाभाविकसंस्कारवशगो जीव उद्भिज्जयोनितः स्वेदजादियोनावुपसर्पेद् आहोस्विद् अस्वाभाविकसंस्काराधीनः सन् मनुष्यः स्यात्, तत्रापि क्षत्रियब्राह्मणादिः स्यात् देवोऽपि स्यात्, परन्तु तदीयस्थूलशरीरस्य तत्तद्योनिगतभोगोपयोगिता सम्पत्तये प्रकृतिर्विशेषेणैव परिणामिनी भवति। यतो हि उक्तयोनिषु अथवा सहजमानवादिपिण्डेषु पार्थक्येन भोगोपलब्धिसिद्धये पार्थक्येनैव स्थूलशरीरोपलब्धिप्रयोजनमपेक्ष्यते । स्थूलैः पञ्चभिर्महाभूतैर्जायमानोऽन्नमयकोश एव स्थूलशरीरमित्युपदिश्यते । तच्च संस्कारजन्यतीव्रवेगतो जीवस्य भोगसम्पादन-सौविध्यार्थं प्रजायते ॥ १४७ ॥

भावत्रयेण सार्धमेषां सम्बन्धमाह—

**अध्यात्ममधिदैवमधिभूतमेतत् त्रयं क्रमात् १४८ ॥**

संसारेऽस्मिन् सर्वेऽपि पदार्था भावत्रयोपेताः । दृश्येऽस्मिन् प्रपञ्चे न कोऽपि पदार्थोऽस्ति, य एतस्माद्भावत्रयात्पृथक् स्याद् । इति नियमादेव कारणशरीरमध्यात्मं,लिङ्गशरीराऽपरपर्य्यायं सूक्ष्मशरीरञ्चाधिदैवं,स्थूलशरीरञ्चाधिभूतम् । जीवभावस्य मूलकारणं कारणशरीरमिति तस्याध्यात्मत्वं स्वतः सिद्धम् । सर्वास्वप्यवस्थासु परमोपयोगित्वात् भोगे मोक्षेऽथवा गतागतचक्रे एव परमापेक्षणीयत्वात् लिङ्गशरीरस्याधिदैवत्वं सिध्यति । सर्वभोगाधारत्वात् स्थूलभूतैश्च सम्बन्धभागित्वात् स्थूलशरीरमधिभूतमित्यङ्गीकरणीयमेव ॥ १४८ ॥

तत्र प्रसङ्गतः स्थूलशरीरवैशिष्ट्यं लक्षयति —

**भोगार्थं स्थूलमपेक्ष्यम् ॥ १४९ ॥**

भोगाय इदमिति भोगार्थं भोगनिमित्तं स्थूलं स्थूलशरीरम् अपेक्ष्यम् अपेक्ष्यते इत्यर्थः ।

स्थूलशरीरस्येदं वैशिष्ट्यं विद्यते यत् तेन विना भोगसिद्धिर्नैव कदापि सम्भवति । यद्यपि लिङ्गशरीरमन्तराऽऽत्मनो भोग-संग्रहोऽसम्भव एव । यतो हि सूक्ष्मशरीर एव सर्वेन्द्रियैः सह मनसः स्थितिः सम्पद्यते । सूक्ष्मशरीरमन्तरा द्रष्टृदृश्ययोर्भोक्तृभोग्ययोः सम्बन्धस्थितिश्च दुर्लभैव, तथापि—भोगपूर्णसिद्धिः स्थूलशरीरेण विना नैव सम्भवति । यतो हि स्थूलभोगस्य साक्षात्सम्बन्धो यावत् स्थूलशरीरेण न भवति न तावद्भोगपूर्णता सम्पद्यते ।

उदाहरणतो यथा—गन्धशालिनः कस्यचन पुष्पस्य भोगो मनसापि चिन्तया संस्मृत्या वा आंशिकतया सम्पादयितुं शक्यते । परन्तु तस्य रूपस्पर्शगन्धादीनां सर्वात्मना भोगस्तु तावन्न सम्पद्यते यावत् स्थूलस्य तस्य स्थूलेनेन्द्रियेण शरीरेण च सम्बन्धो न स्यात् । अतश्च स्थूलशरीरेणैव स्थूलभोगस्य सर्वात्मना सिद्धिरित्यङ्गीकरणीयमेव ॥ १४९ ॥

एतस्यावसाननिदानं ब्रूते—

**तस्मात्त्याज्यं जीर्णवस्त्रवत् ॥ १५० ॥**

भोगे स्थूलस्य शरीरस्यापेक्षिकत्वात् जीवो यस्मिंल्लोके स्वकर्मप्रेरितो गच्छति तत्रैव तल्लोकीयभोगनिष्पत्तये तत्स्थस्थूलशरीरं गृह्णाति । अत एव च तत्स्थभोगपरिसमाप्तौ तत्रत्यस्थूलशरीरं जीर्णवस्त्रवद्विमुञ्चति । उक्तञ्च श्रुतिस्मृतिषु—

"जीवापेतं किलेदं म्रियते न जीवो म्रियते" ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥

उदाहरणतो यथाऽस्मिन्मृत्युलोके पञ्चीकृतमहाभूतनिर्मितं पार्थिवतत्त्वप्रधानं स्थूलशरीरं प्राप्नोति प्रारब्धकर्मानुसारेण च जात्यायुर्भोगादीन् स्वभोगाय समुपस्थितान् भुक्त्वाऽन्ते तत्कलेवरमवश्यमेव स जीवो विजहाति ।

प्रारब्धवेगजन्यायुषः परिसमाप्तौ सत्यामेव तज्जन्मजन्याः सर्वेऽपि प्रारब्धभोगाः परिसमाप्तिमृच्छन्ति । ततश्च सुतरां स जीवो जीर्णवस्त्रवत् तत्कलेवरं विहाय स्वकर्मानुकूलमस्मिन्परस्मिन्वा भोगलोके गत्वा तल्लोकीयभोगपरिपूर्णतायै नवीनवस्त्रपरिधानवत् स्थूलं नवीनं शरीरं गृह्णाति । विना स्थूलशरीरं भोगस्य सर्वाङ्गीणसिद्धिर्नैव सम्भवतीति सूक्ष्मशरीरधारिणो जीवस्य पौनःपुन्येन स्थूलशरीरग्रहणं तत्त्यागश्चावश्यकम् । तत्र तत्त्यागग्रहणयोः प्रारब्धं कर्मैव निदानम् ॥ १५० ॥

मनुष्येतरयोनौ तद्गतिं बोधयति—

## एतन्नैसर्गिकं चतुर्विधभूतसङ्घेषु ॥ १५१ ॥

मानवयोनितोऽधस्तनेषूद्भिज्जस्वेदजाण्डजजरायुजेषु चतुर्विधेष्वपि योनिवर्गेषु भोगार्थं स्थूलशरीरस्य ग्रहणं तत्त्यागश्च स्वाभाविकमेव । तत्र हि स्थूलशरीरस्य ग्रहणत्यागयोर्न व्यक्तिगतप्रारब्धस्यापेक्षणमिति फलितार्थः । तात्पर्यंत उद्भिज्जयोनिमतः पिप्पलस्याण्डजयोनिशालिनश्च मयूरपक्षिणः स्वस्थूलशरीरधारणत्यागयोर्न व्यष्टिप्रकृत्यपेक्षा अपि तु समष्टिप्रकृतेः समष्टिनियमादेव तयोः स्थूलशरीरग्रहणत्यागौ सम्पद्येते । यथा यथा जीवः स्वाभाविकसंस्काराश्रयेण प्राकृतिकक्रमाभिव्यक्तिनियमानुरूपमेकस्या योनेरन्यस्यां योनावग्रे संसरति तथा तथोक्तयोनिगतभोगक्रमानुसारेण स्थूलशरीरोपलब्धिस्तस्य स्वत एव जायते। स्वत एव च तत्त्यागोऽपि संसिध्यति । न तत्र व्यष्टिसम्बन्धिप्रारब्धापेक्षा । वृहद्विष्णुपुराणेऽप्युक्तम्—

स्थावरे लक्षविंशत्यो जलजं नवलक्षकम् ।
कृमिजं रुद्रलक्षञ्च पक्षिजं दशलक्षजम् ॥
पश्वादीनां लक्षत्रिंशत् चतुर्लक्षञ्च वानरे ।
ततो हि मानुषा जाताः कुत्सितादेर्द्विलक्षकम् ॥ १५१ ॥

इदानीं मानवयोनिविषयमाह—

**अनैसर्गिकं मनुष्येषु ॥ १५२ ॥**

मानवयोनेः पूर्णावयवत्वात् तत्र जात्यायुर्भोगादयः प्रारब्धकर्मानुकूलतयैव परिणमन्ति । यतो हि मनुष्यतामधिगतो जीवः स्वीयकर्मप्रभावतोऽस्मिन्संसारावर्तचक्रे कथं बाभ्रम्यते इति स्फुटं विस्तरशो विवेचितम्पूर्वम् । अतो हि मानवानां स्थूलशरीरोपलब्धिस्तज्ज्ञानं च अस्वाभाविक-संस्कारप्रभावतस्तदीय-प्रारब्धकर्मवेगत एव भवति । प्रतिमनुष्यञ्च तत्तत्प्रारब्धकर्मानुरूपं जात्यायु-र्भोगादयः पार्थक्येनैव स्वतन्त्रतयैवोपतिष्ठन्ते । अतश्च मानवेषु तेषामस्वाभाविकत्वं स्फुटं सिध्यति ॥ १५२ ॥

प्रसङ्गादन्यदप्याह—

**तथेतरेषु पिण्डसम्बन्धात् ॥ १५३ ॥**

चतुर्विधेभ्यो भूतसङ्घेभ्यो मानवयोनितश्च भिन्ना बहवो जीवा अन्येषु लोकेषु तिष्ठन्ति । यथा—स्वर्गे किन्नर-गन्धर्व-देवतादयः । असुरलोकेऽसुरादयः पितृलोकेऽर्य्यमप्रभृतयो नित्या नैमित्तिकाश्च पितृगणाः । इमे सर्वेऽपि सुखभोगिनो जीवा अन्येऽपि प्रेतनरकादि-लोकनिवासिनो दुःखभागिनो जीवाः सर्वेऽपि स्थूल-शरीरमपेक्षन्ते ।

यतो हि विना पिण्डं भोगोपलब्धिरसम्भाविन्येव । तेषां स्थूलशरीरेषु परस्परमुपादान-वैलक्षण्यमावश्यकम्, परन्तु तत्र सर्वत्रैव लोकेषु स्थूलशरीरा-पेक्षा तु समानैव ॥ १५३ ॥

प्रसङ्गत आतिवाहिकं देहं वर्णयति—

**सूक्ष्मानुरूपमातिवाहिकम् ॥ १५४ ॥**

ननु सर्वत्रैव स्थूलशरीरापेक्षायामिह लोके स्थूलशरीरं हित्वाऽपरलोक-प्रस्थानकाले जीवः किं शरीरं गृह्णाति ? कथं एकस्माल्लोकादपरलोकं जिगमिषुः केन साधनेन स्वयात्रां साधयतीत्यादिशङ्कायाः समाधानेन विज्ञानं परिपुष्णाति ।

जीवो यदा एकस्माल्लोकादपरलोकमुपसर्पति तदा तत्र साहाय्यरूपेणैक-विधं स्थूलं शरीरं गृह्णाति तदेवातिवाहिकं शरीरं निगद्यते । तच्च सूक्ष्मशरीर-प्रतिरूपमपि स्थूलशरीरकार्य्यं संसाधयति । तदेव एकस्मादपरं स्थानं जीवा-न्नयतीति आतिवाहिकमुच्यते । उक्तञ्च श्रीमद्भागवते—

यातनादेहमावृत्य पाशैर्बध्वा गले बलात् ।
नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥

श्रुतावप्युदीरितम्—

"प्राणस्तेजसा युक्तः सहात्मना
यथा संकल्पितं लोकं नयति ।"

तत्रैव मुण्डकोपनिषदि–उच्चलोकं जिगमिषूणां जीवानां कृतेऽभिहितम् ।

एह्येहीति तमाहुतयः सुवर्चसः
सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥

पुण्यलोके वा पापलोके वा जिगमिषतां सर्वेषामेव आतिवाहिकं शरीरमपेक्ष्यते । परन्तु तदातिवाहिकं शरीरं स्वयं न कार्य्यकारि यथा शैशवावस्थायामतिसुकुमारं शरीरं न स्वयं कार्य्यं सम्पादयितुं इति ।

नरकादिपापलोकगमनयोग्यमातिवाहिकं देहं बिभ्रतज्जीवं यमदूता नरकाद्यधमलोकं प्रापयन्ति । स्वर्गादिपुण्यलोकगमनक्षमञ्च तद्देहधारिणं देवदूताः स्वर्गाद्युच्चलोकं नयन्ति । ते च जीवाः तत्र तत्र लोकेषु गत्वा पश्चात्तल्लोकार्हव्यवहारोपयोगिनं देहं समाप्नुवन्ति । मनोमय-विज्ञानमयानन्दमयकोशसम्वलितो हि प्राणमयः कोशो यदाऽन्नमयकोशात्मकस्थूलशरीरान्निर्गच्छति तदा तस्मिन्सूक्ष्मशरीरे एकस्यैवम्भूतस्यावरणस्याऽवश्यकं प्रयोजनमपेक्ष्यते येन तस्य सूक्ष्मशरीरस्य रक्षणमपि स्यात्तस्य जीवस्य लोकान्तरगमने सर्वथा सौविध्यं च सम्पादितं स्यादिति ।

क्रियाशक्ति-प्रधानस्य प्राणमयकोशस्यैव साहाय्येन इदं कार्य्यं सम्पादयितुं शक्यत इति प्राणमयकोशोपादानेनैवाऽयमातिवाहिको देहो निर्मीयते । अत एवायमातिवाहिको देहः सूक्ष्मशरीरस्यैव रूपान्तरमभिधातुं शक्यते,अपरतश्च सूक्ष्मशरीरावरकत्वेन हेतुना स्थूलशरीरतयाऽप्यभिधातुम्पार्य्यते ॥ १५४ ॥

अन्यविधामपि शङ्कां समाधत्ते—

**संसृतेः सूक्ष्मस्य ॥ १५५ ॥**

सूक्ष्मस्य सूक्ष्मशरीरस्यैव संसृतिः संसरणं सम्भवति, ततोऽपि सूक्ष्मशरीरधारिण एव जीवस्य लोकान्तरगतिर्भवतीति सूत्रार्थः । ननु किं विधं शरीरं दधज्जीवो जन्मान्तरमृच्छति इति शङ्कायाः समाहितिं ब्रूते । वस्तुतः स्थूलशरीरस्य प्रयोजनं तत्तद्भोगलोकेषु भोगसिद्ध्यै त्ववश्यमपेक्ष्यते । परन्तु तत्तल्लोकीयभोगानुसारतो भिन्नान्येव तानि भवन्ति । लोकान्तरगत्यर्थन्तु सूक्ष्मशरीरमेवापेक्ष्यत इति सूक्ष्मशरीरधारिण एव लोकान्तरगतिरभ्युपेयते ।

मृत्युलोके हि पृथिवीतत्त्वप्रधानं स्थूलशरीरं भवति । प्रेत-लोके च वायु-

तत्त्वप्रधानं, नरकलोके तु वृद्धं स्थूलशरीरमुपलभ्यते । स्वर्गलोके च तैजसं तरुणं च तदासाद्यते । इत्येवं तत्तल्लोकेषु तत्तल्लोकानुसारतो विभिन्नान्येव स्थूलशरीराणि भवन्ति । स्मृतावप्युदीरितम्--

पिशाचप्रेतभूतानां विहाराजिरमुत्तमम् ।

अन्तरिक्षं च तत्प्रोक्तं यावद्वायुः प्रवाति हि ॥ ( देवीभागवते )

मनुसंहितायाः तृतीयाध्यायेऽपि—

"निमन्त्रितान् तु पितर उपतिष्ठन्ति तान् द्विजान् ।

वायुवच्चानुगच्छन्ति तथाऽऽसीनानुपासते" इति ॥

इत्याद्युक्त-प्रमाणैः प्रेतयोनिजजीवानां वायुतत्त्व-प्रधानमेव स्थूलशरीरं भवतीति साधु समर्थ्यते ।

सम्प्रति देवयोनिजा जीवाः तैजसं तरुणञ्च शरीरमासादयन्तीति प्रमाणयति । श्रीन्महाभारतीयवनपर्वणि समुपात्तम्—

"न शोको न जरा तत्र नायासपरिदेवने ।

ईदृशः स मुने ! लोकः स्वकर्मफलहेतुकः ॥

सुकृतैस्तत्र पुरुषाः सम्भवन्त्यात्म कर्मभिः ।

तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम् ॥"

इत्थञ्च आतिवाहिकशरीरमासाद्य तत्र लोकेषु गत्वा तल्लोकानुगुणं शरीरं लभमाना जीवाः सूक्ष्मशरीरधारिण एव भवन्तीति न विस्मरणीयम् ॥ १५५ ॥

तत्कारणमाह—

## अस्वाभाविकादावागमनचक्रम् ॥ १५६ ॥

अस्वाभाविकात् संस्कारात् आवागमनचक्रं प्रचलतीति सूत्रार्थः ।

जीवो हि स्वकर्मबलेनैव विविधान् वैचित्र्यपूर्णान् अस्वाभाविकान् संस्कारान् संगृह्य आवागमनचक्रसृष्टिं सम्पादयति । मानवयोनितोऽधस्तनासु योनिषु तु विकासासम्पूर्णतया जगज्जननी प्रकृतिदेवी मातृस्थानीया साहाय्यमाचरति । येन तासु योनिषु जीवो न चक्रप्रवाहे पतति, किन्तु क्रमशः स्वोन्नतिं विदधानो व्रजति । इह मानवयोनावुपेत्य पूर्णतां समधिगतो जीवः स्वाधीनो भवति । स्वातन्त्र्यं समुपेत्य निरङ्कुशो भवन् नानाविधान् वैचित्र्यपरिपूर्णान् अस्वाभाविकान् संस्कारान् संगृह्य नानावैचित्र्यपूर्णान् विविधान् भोगलोकान् सम्पादयितुं स्वावागमनचक्रं सृजन् तत्र बाभ्रम्यमाणस्तिष्ठति एतदेव जीवानां बन्धनदशा-रहस्यम् ॥ १५६ ॥

परलोकगामिन आत्मनो ये केऽप्यन्तरायाः परलोकगमनवेलायां मध्ये मार्गमापतन्ति तत्र सर्वत्रैव श्राद्धक्रिया साहाय्यमाचरति । इत्यत एव भविष्यत्काले स्वीयश्राद्धकर्तारं कञ्चनाधिकारिणमदृष्ट्वा विवेकिनः पुरुषाः स्वयमेव स्वजीवितावस्थायामेव स्वश्राद्धं कुर्वन्ति ।

अपरञ्च श्राद्धक्रियया केवलं परलोकगामिन आत्मनस्तथा नैमित्तिकपितॄणामेव तृप्तिर्न भवति, किन्तु नित्यपितरोऽर्य्यमाग्निष्वात्तादयोऽपि प्रसन्नाः सम्बर्द्धिताश्च भवन्ति । इन्द्रवरुणमन्वादि-देवपदवत् नित्यपितॄणामपि पदं नित्यमूहनीयम् । ते च नित्यपितरो धर्माधर्मफलभोगे साहाय्यमाचरन्ति । मानवैः तेषां प्रसादनमावश्यकं कर्तव्यम् ।

अस्मादेव हेतोः संन्यासाश्रमप्रवेशसमये महात्मानः स्वीयं श्राद्धं स्वयमेवानुष्ठाय पितृऋणतः स्वात्मानं मोचयन्ति । अतः श्राद्धकरणं सर्वेषामेव प्रधानं कर्तव्यम् ॥ ४३-४७ ॥

## चतुः पञ्चाशत्तमे पद्ये समागतैन्द्रज्ञानपदार्थरहस्यम्—

श्रीमतो भगवतो गणपतिदेवस्य शक्तेः सिद्धिरिति नाम । यतश्च स देवः सिद्धिदाता निगद्यते । दैव्याः सिद्धेस्त्रयो भेदा ज्ञेयाः । प्रथमाधिभौतिकी सिद्धिःलौकिकमैश्वर्य्यं लौकिक्यश्च सिद्धयः । द्वितीयाश्चाधिदैविकी सिद्धिरणिमा लघिमा महिमा इत्येतादृश्यः सिद्धयो यासां लक्षणं योगदर्शने समुपलभ्यते । तृतीया त्वाध्यात्मिकी सिद्धिः । वेदश्रवणमध्यात्मशास्त्रप्रकाशनम् ज्ञानसम्बन्धिन्यः सर्वा एव सिद्धयस्तत्र ज्ञातव्याः, ऐन्द्रज्ञानमपि एतस्या अध्यात्मसिद्धेरेवान्तर्गतम् । यच्च दैवकृपयैवोपलभ्यते ॥ ५१-५४ ॥

## अद्यत्वे तिर्य्यग्योनिषु विशिष्टजीवप्रादुर्भावाभावरहस्यम् ।

ननु आरूढपतिता जीवाः पक्षिप्रभृतितिर्य्यग्योनिष्वपि समुपेत्य ईदृशीं पूर्वस्मृतिं पूर्वशक्तिञ्चापि लब्धुमर्हन्तीति निश्चये साम्प्रतमपि कथन्न तादृशा जीवा समुपलभ्यन्ते ? इतिशङ्कायाः समाधानमाह—

जीवानामुद्भवो हि कालनियमानुकूल एव भवति जीवसमुत्पत्त्या सह देशकालयोरुभयोरेव समानः सम्बन्धः ।

ग्रीष्मदेशोद्भवा उद्भिज्जादयो जीवाः शीतदेशे नैव रोहन्ति नापि प्राणितुमर्हन्ति, तथैव प्रेतलोकनिवासिनो जीवाः स्वर्गलोके नोपस्थातुं शक्नुवन्ति । इत्याद्युदाहरणैर्जीवसृष्ट्या दैशिकः सम्बन्धोऽतिघनिष्ठः प्रतिभाति । परन्तु सम्बन्धोऽयमाधिभौतिक एव ज्ञेयः । शीतोष्णयोस्तत्तत्प्राधान्यमधिगतै देशैः सह घनिष्ठ-

सम्बन्धभागित्वात् ताभ्याञ्च सह जीवानां स्थूल-शरीरसम्बन्धसत्त्वात् शीत-देशोद्भव उद्भिज्जजीवो ग्रीष्मप्रधानदेशे न समुत्पत्तुं शक्नोति नापि ग्रीष्मप्रधान देशोद्भवो जीवः शीतप्रधानदेशे जीवितुमर्हतीति ।

एवं वायुतत्त्वप्रधानं प्रेतशरीरं वह्नितत्त्वप्रधाने स्वर्गलोके नोपस्थातुमर्हति । इत्यत इदमवश्यमङ्गीकरणीयं यद् आधिभौतिकसम्बन्धयुजा देशेन सहाधिभौतिकस्यैव सम्बन्धस्य प्राधान्यम् । परन्तु कालेन सहाध्यात्मिकस्य सम्बन्धस्य प्राधान्यं, कालश्चानाद्यनन्तः । केवलं कालविशेषे जन्मभृतां जीवानां समष्टिप्रारब्धतो कालविशेषस्य स्वरूपनिर्देशः क्रियते । नो चेत् कालस्य निर्लेपत्वात् नैतत् किमपि सम्भवति । संस्काराणां समष्टिपुञ्जेन सह सर्व एव कालः सम्बध्नाति इत्यतः कालेन सहाध्यात्मिकस्यैव सम्बन्धस्य प्राधान्यम् ।

अन्ततो गत्वा अद्यत्वे जीवजगतो दृष्टिर्यदाधिभौतिकप्रधाना तथोन्नतानां सर्वाभ्यर्हितानामपि विदुषां दार्शनिकी दृष्टिस्तिमिराच्छन्ना विनष्टेव प्रतिभाति । अतिविमर्शशीला अपि मानवा दैवस्य जगतोऽस्तित्वे सन्दिहानाः सन्ति । किम्बहुना परलोकचिन्तामपि कर्तुमाधुनिकाः शिक्षिता न क्षमन्ते, प्रत्युत तच्चिन्तयोद्विजन्त एव, साधारणाश्च जनाः शिश्नोदरपरायणा अल्पायुषोऽनियमिताहाराः संदृश्यन्ते । तदेत्येवम्भूते विकराले काले येऽपि जीवा जनुर्भृतो भवन्ति तेषु विरला एव केचनाध्यात्मशक्तिसम्पन्ना भवितुमर्हन्ति । इत्यस्मादेव हेतोः देवानामपीदानीं साक्षाद्दर्शनं विरलतामासादितवद् विद्यते ।

यद्यपि क्वचन केचन योगिनो दैवेन जगता स्वसम्बन्धं प्रतिष्ठापयितुं प्रभवन्ति । परन्तु तत्-क्रिया प्रायो विलुप्तप्रायैवाधुना दरीदृश्यते । मणिमन्त्रौषधप्रभावोऽप्यधुना हीनबल एवावलोक्यते । इत्यत एव साम्प्रतम् उन्नतश्रेणिगा आरूढपतिता जीवा अपि न प्रादुर्भवन्ति ॥ १–६ ॥

## प्रारब्ध-प्राबल्यरहस्यम् भावाभावशब्दार्थरहस्यं च ।

पूर्वसञ्चित-तपः प्रभावेणैव मानवाः पुण्यफलं समश्नुवते। भोगेन कुकर्मतो वा तपःक्षये सति मनुष्याः पतन्तीत्येषा क्रियापि प्रारब्धत एव सम्बध्नाति ।

यद्यपि भावाभावयोर्दार्शनिकं रहस्यमत्युन्नतविचारपरिपूर्णम्, तथापि साधारणतया सुखानन्द-प्राप्त्यप्राप्तिभ्यामेवेह सम्बन्धो विज्ञेयः । जीवो यस्य पदार्थस्य सुखहेतुत्वं विज्ञायाकांक्षामातनोति स एव भावशब्दवाच्यः । यदा च सत्यामप्युत्कटेच्छायां सत्यपि च प्रबले प्रयत्ने जीवः स्वेच्छां पूरयितुं न शक्नोतीति तत्राभावो निदानमुच्यते ।

साधारणत इष्टप्राप्तिर्जीविनां हर्षनिदानम्, अनिष्टाधिगमश्च शोकहेतुरित्येतदेव जीवानां सुखदुःखनिदानमूहनीयम्। परन्तु आत्मज्ञानिनश्चैतादृशभावाभावौ तज्जन्यसुखदुःखे च तत्त्वज्ञानसाधनेन केवलं प्राकृतिकं पदार्थजातमवगच्छन्ति । आत्मज्ञानेन च स्वस्वरूपोपलब्धिमासादयन्ति । ततश्च ते महात्मानो हर्षशोकातिगा भूत्वा नन्दन्ते । फलतश्च हर्षशोकौ तान् महापुरुषान् न विचालयितुमर्हत इतिभावः।

अनन्तकोटिषु ब्रह्माण्डेषु प्रतिब्रह्माण्डं सृष्टिस्थितिलयात्मककार्य्य-सम्पादनाय सगुणब्रह्म-स्वरूपेण ये त्रयो देवा विद्यन्ते । तेषु एव प्रथमः सर्जनकर्तृत्वात् ब्रह्मोच्यते, द्वितीयश्च स्थितेः कारणं विष्णुर्निगद्यते, तृतीयो हि संहारकरणाच्छिवोऽभिधीयते । इमे च देवशब्दवाच्या अपि न साधारणदेवयोनिगा जीवाः, किन्तु निर्गुणस्य भगवत इमे सगुणमूर्तयः।

अत्र च सृष्टिरक्षाया विष्णुना सह सम्बद्धत्वाद् अस्यां स्तुतौ तस्यैव प्राधान्यम् । तत्सम्बन्धेनैव विष्णुभावं पुरस्कृत्य सगुणब्रह्मणः स्वरूपपरिचित्यै यथासम्भवं प्रयत्नो विहित उपलभ्यते । अत्र संस्तवे यावन्ति विशेषणानि सन्ति तानि सर्वाण्येव प्रायो निर्गुणब्रह्मप्रधानान्येवोपलभ्यन्ते ।

परमात्मनो यन्निर्गुणं भावातीतं पदमुच्यते तच्चोपासनाभिप्रायेण सगुणभावे परावर्तितुमेव पञ्चानां सगुणरूपाणां ध्यानानि शास्त्रादिषु समुपलभ्यन्ते । तथा हि—विष्णु-सूर्य्य-भगवती-गणपतिशिवाश्चेति पञ्चापि विग्रहवत्यो मूर्तयः निर्गुणस्य परमात्मनो भावातीतमेव भावं सगुणभावमार्गेण धारणायामानाययितुं गुणाश्रयीभूता विद्यन्ते । इत्यत एवेह स्तुतौ श्रीभगवान् विष्णुदेवः त्रिगुणात्मको निर्गुणश्चोक्तोऽस्ति । एतद्भावाभिप्रायेणान्यत्राप्युक्तम्।

अक्षरावगमलब्धये यथा स्थूलवर्तुलदृषत्परिग्रहः ।
शुद्धमुक्तपरिलब्धये तथा दारुमृण्मयशिलामयार्चनम् । इति ॥३६-४२॥

## ब्रह्मणः सगुणनिर्गुणादिस्वरूपरहस्यम् ।

वेदशास्त्रादिषु परमात्मा हि सृष्टितः परत्वेन त्रिगुणातीतत्वेन एकत्वेनाद्वितीयत्वेन जीवानां मनोबुद्धिविषयातीतत्वेन च वर्णितोऽस्ति । परन्तु जिज्ञासूनां तृप्तये स भावत्रयविशिष्टत्वेनापि परिलक्षितो विद्यते । तथा हि ब्रह्म ईशो विराट् चतुर्थोऽवतारश्च यो हि लीलाविग्रहशब्दभागपि निगद्यते ।

तत्र भगवतो निर्गुणस्य निष्क्रियस्य सृष्टितोऽतीतस्याध्यात्मस्वरूपस्यैव ब्रह्मेति नाम निगद्यते । तस्यैव सगुणं स्वरूपं सृष्टेर्द्रष्टृमात्रमुच्यते । यस्य योग-

शास्त्रे 'पुरुषविशेष' इति संज्ञोच्यते तच्चाधिदैवं स्वरूपमीश्वर इत्युच्यते। अनन्त कोटिब्रह्माण्डोपेतं यत्तदीयं महत् स्थूलमाधिभौतिकं स्वरूपं विद्यते तदेव विराडित्युच्यते जीवशरीराश्रयेण या भगवतो विशिष्टा शक्तिः कलारूपेणाविर्भवति सैव तस्यावतार स्वरूपमुच्यते। एतदेव भगवतः स्वरूपस्य चतुर्व्यूहसम्बन्धिनां भावानां रहस्यम्। अस्यैव विज्ञानस्याश्रयेण ब्रह्म-विष्णु-महेश-प्रभृतीनां सर्वेषामेव स्वरूपस्यावगतिः सम्भाव्यते।

## पञ्चदेवोपासनारहस्यम्।

पञ्चदेवोपासनायां ब्रह्मविष्णुमहेशात्मकमूर्तित्रयतः केवलं विष्णुशिवयोरेव नामोपलभ्यते—तत्रेदं निदानम्। यद् ब्रह्मणो रजोऽधिष्ठातृत्वेन रजोगुणसम्बन्धतस्तस्येश्वरत्वेऽङ्गीकृतेऽपि उपासनासम्बन्धतो न तस्य प्राधान्यमभ्युपेयते शास्त्रकृद्भिः। सामान्यतो गीतोपनिषत्प्रभृतिशास्त्रेषु ज्ञानयोगकर्मयोगात्मके साधनपद्धति द्विविधे एव निर्दिष्टे। श्रीमतो भगवतो ब्रह्मणः चिद्भावसम्बन्धतः सांख्ययोगः, सद्भावसम्बन्धतश्च कर्मयोग इति द्विविधे अपि निष्ठे स्वभावसिद्धे स्तः। इत्यत एव केवलं विष्णुशिवयोरेव सगुणोपासना शास्त्रादिषूपलभ्यते।

अन्यतश्च पञ्चोपासनात्मकं सगुणोपासनं यद्वेदेषु तत्सम्मतशास्त्रेषु चोपलभ्यते तत्र पञ्चानां सगुणब्रह्मोपासनानां भावो निर्णीतोऽस्ति। तासामुपासनानां तुलनात्मकपर्य्यालोचनया तासां विज्ञानगवेषणया च योगशास्त्रतन्त्रशास्त्रयोश्चैतासां रहस्यपर्य्यवेक्षणेन चैतदुपलभ्यते यत्—विष्णूपासनायां भगवतश्चिद्भावस्य, शिवोपासनायां भगवतः सद्भावस्य, देव्युपासनायां भगवतः शक्तिभावस्य गणपत्युपासनायां भगवतो ज्ञानमयप्रधानभावस्य सूर्य्योपासनायाञ्च भगवतः स्वाकर्षणरूपस्य तेजोभावस्य प्रकाशो विद्यत इति। इत्येवं पञ्चानां स्वतन्त्रभावानामवलम्बनतः पञ्चापि स्वतन्त्राः सगुणब्रह्मोपासनाप्रकाराः पार्थक्येन शास्त्रादिषु वर्णिताः समुपलभ्यन्ते। तासां पञ्चानामपि उपासनानां दार्शनिकं रहस्यं पृथगेव निर्दिष्टं। तत्र-चतुर्व्यूहकल्पना पूर्वोक्ताधारानुसारं पृथगेव निर्दिष्टास्ति। यदा वाङ्मनोबुद्ध्यगोचराया ब्रह्मसत्ताया अनुभवं विष्णुरूपे कर्तुं अभिलषेच्चेत्तदा कथं चतुर्व्यूह-कल्पना कर्तव्येति समभिहितमुपरिष्टात्। बहुत्र शास्त्रेषु वासुदेवसंकर्षण-प्रद्युम्नानिरुद्धाख्यैश्चतुर्भि र्नामभिश्चतुर्व्यूहनामकरणमपि दृश्यते। शक्तेः सुरक्षाप्रकारस्यैव व्यूहमित्याख्या। उपासनाप्रकारस्याथवा ज्ञानप्रकारस्य सुरक्षाहेतोरेवोपासनाशास्त्रे ज्ञानशास्त्रे वा चतुर्व्यूहकल्पनोपलभ्यते। इत्यत एव पुराणेषु दर्शनशास्त्रेषु च व्यूहशब्दप्रयोगोपलब्धिः।

यदा च निर्गुणं ब्रह्म लक्ष्यीकृत्य चतुर्व्यूहकल्पना क्रियेत तदा ब्रह्मेशविराड्लीलाविग्रहरूपाश्चत्वारो भावमयाः स्वरूपा ग्रहणीयाः स्युः। एवञ्च यदि भगवतो विष्णोर्भावं सम्मुखीनं कृत्वा चतुर्व्यूहकल्पनाऽऽश्रीयेत तदोपरिष्टान्निर्दिष्टास्ते चत्वारो भावा वासुदेवसंकर्षण-प्रद्युम्नानिरुद्धा गृहेलिमा भवन्ति।

भगवतो विष्णोरध्यात्माधिदैवाधिभौतस्वरूपाणां लक्षणानि तु प्रागेवेहोपनिबद्धानि। इत्थञ्च भगवान् विष्णुर्यदा सृष्टिरक्षाभिप्रायेण स्वीयचिन्मयकलायाः स्वशक्तेश्च प्रकाशं कस्यचन जीवस्याश्रयेणेह जगति विशेषतः प्रकाशयति तदा सैव लीलाविग्रहरूपा तस्य सर्वप्रत्यक्षावस्था 'अवतार' शब्दवाच्या ज्ञेया।

जीवपिण्डेष्वेव प्रथमकलातोऽष्टमीं कलां यावत् जीवत्वद्योतिकाः कला निगद्यते। नवकलातः षोडशकलावधि विविधश्रेणिगानामवताराणां कलाः समाम्नायते। भगवति श्रीकृष्णे तु षोडशानामपि कलानां सम्पूर्णतैवासीदिति तस्य कृते पुराणादिषु "कृष्णस्तु भगवान् स्वयमिति" गीयते। एतदेवोक्तानां चतुर्णां मूर्तीनां शास्त्रसिद्धम् शुद्धं स्फुटं रहस्यम्॥ ४३–५६॥

## द्रौपद्याः पञ्चपतित्वरहस्यम्।

इन्द्रो हि देवराजः। यथा यमराजो धर्म्माधर्मनियमनकर्तृत्वाद् धर्म्मराज उच्यते तथैवेन्द्रोऽपि देवानां शासकत्वे देवराजशब्दभाग् भवति। सर्वमपीदमिन्द्रधर्मराजादि पदं स्थिरं चिरस्थायि चोच्यते।

तत्रेन्द्रदेवस्याध्यात्मिकाधिदैवाधिभौतिकानि स्वरूपाणि ध्रुवमूहनीयानि। पुराणादिषु यत्रेन्द्रदेवस्य स्वरूपं स्वर्गलोकस्थितिशीलं निरुक्तं विद्यते, तद्धि तस्य स्थूलमधिभूतं स्वरूपम्। येन च स्वरूपेण सर्वव्यापिकया शक्त्या सर्वमपि दैवं राज्यं सञ्चाल्यते तद्धि तस्याधिदैवं स्वरूपं, यथा हि मनुष्यपिण्डेषु दक्षिणहस्ते इन्द्रस्य स्थितिः, ब्रह्माण्डे च मेघादिषु वज्ररूपेण संस्थितिः। तस्याध्यात्मरूपपरिज्ञानायोपरिष्टान्निर्दिष्टं लौकिकपरकीयभाषानिबद्धं वाक्यजातमवगन्तव्यम्। वृत्रासुरोत्पत्तिपरिचायकं पद्यजातं परकीयभाषामयमूहनीयम्। इन्द्रस्य तेजोबलादीनां विभागशोऽपसृत्यान्यत्र संक्रमणं हि लौकिकभाषयोपनिबद्धं येन च तस्याध्यात्मिकस्य स्वरूपस्य किञ्चिन्निदर्शनं भवति।

अन्यतश्च पाण्डवानामुत्पत्तिवर्णनमत्राधिदैविकं, महाभारते चाधिभौतिकरूपेण तेषामुत्पत्तिर्निरूपिता। यथा च स्थूलसूक्ष्मकारणस्वरूपेण शरीरस्य भेदत्रयं प्रतिपिण्डं निरुच्यते, तथैव प्रतिपिण्डमध्यात्माधिदैवाधिभूतात्मकं कारणत्रयमपि विज्ञेयमेव। तथा हि–सर्वत्रैव सर्वसाधारणेष्वपि पुंस्सु स्थूलं शरीरमाधिभौ-

तिकं आभ्यन्तरीणा शक्तिरेवाधिदैवं, तच्छरीराश्रित आत्मा किंश्रेणिगः कीदृगधिकारवान् इत्याद्यात्मसम्बन्धिनोऽधिकारा एवाध्यात्मिकं स्वरूपम् ।

एते त्रयोऽधिकारा देवपिण्डेषु सुस्पष्टं एव प्रकाशन्ते । मनुष्यपिण्डेषु तु आध्यात्माधिदैवाधिकारौ न सुस्पष्टं प्रतिभासेते इति विवेकः । एषामधिकाराणामियान् विस्तारो विद्यते यद् इमे त्रयोऽप्यधिकारा उद्भिज्ज-स्वेदजाण्डजादिषु सर्वेष्वपि जीवेषु उपलभ्यन्ते ।

तत्र इयानेव भेदो विद्यते यदेतेषां चतुर्विधानामपि भूत-संघानामाधिभौतिकं स्वरूपं सुस्पष्टं भवति । आधिदैविकमाध्यात्मिकञ्च स्वरूपं तत्तद्योन्यभिरक्षकेषु देवेष्वेव विद्येते । इत्यत एव यावन्ति उद्भिज्जादिसंघानां सहजपिण्डानि सन्ति तावन्त्येव तज्जातिगानि दैवतानि तेषां पृथक्त्वेन संरक्षकाणि भवन्ति ।

इत्यस्मादेव हेतोः पञ्चापि पाण्डवा आधिभौतिक-स्वरूपेण पृथग् विभिन्ना अपि आधिदैविक-स्वरूपत एक एवासन् । इत्यत एव पञ्चानामपि पुरुषाणां पत्नी भूताऽपि द्रौपदी सतीत्वधर्मस्यासाधारणं तपःसाधनं कर्तुं प्राभवत् ।

द्रौपद्याः सतीत्वविषयिण्याः शङ्कायाः समाहितिप्रकारस्त्वित्थमूहनीयः । तथा हि—मनुष्यधर्माणां चत्वारो भेदाः साधारणविशेषापदसाधारणधर्मभेदात् । यस्य विवेचनं महर्षिभरद्वाजविरचित-कर्ममीमांसादर्शने विस्तरशः समासाद्यते ।

तत्रासाधारणधर्म्मस्येदं स्वरूपम् यद् जन्मान्तरार्जिताचिन्त्यदिव्यकारणवशात् केनचन यदि काचनासाधारणी शक्तिरधिगता चेत् स एवासाधारणधर्म्माधिकारी भवितुमर्हति । यथात्रैव पुराणे वर्णितेनाधिदैवकारणप्रभावेण द्रौपद्यामीदृशी दैवी शक्तिः प्रविष्टाऽऽसीत् यया सा योगिजनदुर्लभा योगशक्तिशालिनी सञ्जाता । सा च तदीया योगशक्तिरीदृशीमुन्नतिपरां काष्ठामधिगतासीद् यया सा स्वमनोबलेन तस्मिन् समये तमेव पतिं मन्यतेस्म नारदनियमानुसारेण यस्यावसरो यदा भवतिस्म, प्रतिज्ञानुसारम् अन्यान् पृथग् इतरजनवदेव जानाति स्म ।

यथा हि वेश्या गण्डकी वेश्यात्वे सत्यपि स्वसतीत्वप्रभावतो देवीत्वमुपससाद, शालग्रामशिलोत्पत्तिक्षेत्रस्वरूपा गण्डकी नदी भूत्वाऽहर्निशं सरति । यस्या आधिदैवं स्वरूपं गण्डकी देवी तदधिष्ठात्रीरूपेण तिष्ठति, तथैव द्रौपद्यपि स्वानिर्वचनीयया योगधारणया अचिन्त्यवैभवेन च स्वसतीत्वात्मकतपःप्रभावेण सतीपञ्चके गण्यमाना प्रातःस्मरणीया आर्य्यनारी कथ्यते । सतीत्वधर्मश्च तपःप्रधानं तस्याधारश्च सतीनां मनसः तीव्राऽविचलिता धारणैव हेतुः । यथा काचन योषित् कस्मिंश्चिज्जन्मनि कस्यचन पुंसः स्वसा भवति, अपरस्मिंश्च तस्यैव माता भवति, इतरस्मिंस्तु तस्य स्त्री भवति, एवं रूपान्तरमाश्रियमाणाऽपि स्वपूर्वजन्मवृत्तान्ताज्ञानतः

स्वमनसो धारणां परिवर्तयन्ती स्वसतीत्वधर्म्मं साधु गोपायति। एवंविधा हि घटना नारीजीवने प्रायो नित्यैवापतति ।

इत्थञ्च द्रौपद्यपि दैवशक्तिसम्पन्ना महायोगिनी स्वप्रतिज्ञानुरूपं स्वसतीधर्मरत्नमवन्ती प्रतिहायनं कालविभागानुसारतः स्वमनोधारणां स्वयोगप्रभावेण पञ्चानामपि पतीनां कृते परिवर्तयितुं समर्थाऽभवत्, तैः पञ्चभिरपि पतिभिः सह सा स्वनारीधर्ममक्षुण्णं निर्वोढुमशक्नोच्च । यतो हि सा योगिनीषु प्रथमा परमतपस्विनी साक्षात् शक्रपत्न्याः शचीदेव्या एव तेजसः प्रादुर्भूता परमाराध्या सतीनामादर्शस्थानीया आसीदित्यसन्दिग्धम् ॥ १—२६ ॥

## श्रीमतो बलदेवस्य सूतवधप्रायश्चित्तरहस्यमूलकं सर्वतीर्थभ्रमणरहस्यम् ।

ब्राह्मणा हि स्वधर्मपालनतो ब्रह्मलोकं समधिगच्छन्ति । ऊर्ध्वलोकेषु सप्तसु सप्तमोऽन्तिमो लोकस्तु ज्ञानलोक एव षष्ठस्तूपासनालोकः, अनयोरेव मध्ये ब्रह्मलोक-गोलोकमणिद्वीपादयो लोका विराजन्ते । सूतो हि पौराणिक आधिभौतिकरूपतो ब्राह्मणभिन्नयोनौ गृहीतजन्मापि वेदभाष्यरूपाणां पुराणशास्त्राणां सततं परिशीलनतो महात्मत्वमुपजगाम, इत्यत एव सोऽन्येन हतोऽकालमृत्युमुपेयिवानपि स्वपवित्रधारणाप्रभावेण ब्रह्मलोकमधिगन्तुं समर्थो बभूव ।

तस्य हन्ता भगवदवतारस्वरूपो बलरामो हननकाले घटनाचक्रतो मद्यपानप्रक्षुब्धचेता अपि ततो द्वितीयक्षण एव प्रकृतिस्थो भूत्वा प्रत्यागतविवेकः स्वस्य कार्य्यस्यानौचित्यं सूतस्य चोत्तमगतिलाभञ्च पर्य्यालोच्य लज्जितो भूत्वाऽऽत्मानं गर्हयामास स्वपापप्रायश्चित्तं कर्त्तुमपि सन्नद्धो बभूव ।

पापप्रायश्चित्तेषु सर्वतः प्रथमं पश्चात्तापो हि सर्वाभ्यर्हितं प्रायश्चितं ततश्च सर्वसमक्षे स्वपापोद्गिरणमपि द्वितीयकोटिगमुच्यते । यतो हि आभ्यामर्धपापक्षयो भवति । ततश्च प्रायश्चित्तान्तरकरणे शास्त्राज्ञा विद्यते इत्यस्मादेव हेतोः शास्त्रमर्य्यादासंरक्षको लोकव्यवहारविद् बलराम एवंविधं मार्गमाश्रितवान् । त्रिधा हि पापप्रायश्चित्तानि धर्मशास्त्रादिषु श्रूयन्ते। दानात्मकमेकं, द्वितीयं तपोरूपं, तृतीयञ्च यज्ञात्मकम् । तत्र द्वितीयं तपोरूपं प्रायश्चित्तमेव स समुचितं कर्तुं समर्थितवान् । तीर्थदर्शनं हि नैमित्तिकं कर्मयज्ञं तपोधर्ममूलकं च कथयन्ति तज्ज्ञा मनीषिणः । बलरामस्य च सर्वतीर्थपर्य्यटनं द्वादशवार्षिकं व्रतमासीदिति तत्तपोमूलकं प्रायश्चित्तमेव तस्य तदासीदिति निश्चितम् ॥ २४-३७ ॥

## आध्यात्माधिदैविकाधिभौतिकस्वरूपतः शक्तित्रय-सिद्धित्रयरहस्येन सह विश्वामित्रतः तासां वैक्लव्य-रहस्यम्

इहान्तर्जगति शक्तिद्वयं विद्यते । एका दैवीशक्तिर्द्वितीया चासुरी शक्ति-

रिति । तत्रोभयोरेव शक्त्योः पृथगू विभिन्नावेवाधिष्ठातृदेवौ स्तः । दैव्याः शक्त्या अधिष्ठातारश्च देवेष्वेव केचन भवन्ति । ये सिद्धेर्धर्म्मस्य च प्राप्तौ सहायका भवन्ति विरुद्धशक्तीनां-विघ्नकारिणीनां शक्तीनां असुरा अधिष्ठातारो भवन्ति ये चासुरलोकेष्वेव निवसन्ति । मानवानामन्तःकरणमेव तेषामुभयेषां देवानामसुराणामपि कार्य्यभूमिर्निगद्यते । यदा येषां यत्रावसरः समायाति तदा तत्र ते स्वाधिकारं यथावसरमासादयन्ति । इदमेव हि देवासुरसंग्रामस्याध्यात्मिकं रहस्यम् । यथा सिद्धिदातारो देवास्तथैव तद्विरुद्धाः सिद्धिविघ्नविधातारोऽसुराः कथ्यन्ते । अतो विघ्नसमूहानां राजा विघ्नराज इति व्यक्तिरूपेण स्वीकृतौ न युक्तिविरोधो भाति । यतो हि विघ्नकर्तुरासुरी वृत्तिरेव तेषामाध्यात्मरूपम् । तासामासुरीणां वृत्तीनां चालिकाः शक्तय एव तेषामाधिदैवं स्वरूपम्, विघ्नकारिणोऽसुरा येऽसुरलोके पदभाजः सन्ति त एव तासामासुरीणां वृत्तीनामाधिभौतं स्वरूपम् , विघ्नानां समस्ते तु एतत्स्वरूपत्रयमपि प्रामाणिकमेव । 'श्रेयांसि बहुविघ्नानि' इति लौकिकी गाथा प्रसिद्धैव, सर्वेऽपि प्रायोऽनुभवन्त्येव श्रेयस्सु कर्मसु विघ्नबाहुल्यम् भवतीति ।

इदानीं पदार्थ-विद्या-विज्ञानसाहाय्यतः स्फुटमेवेदमवगम्यते यत् काम-क्रोध-लोभ-हिंसादिवृत्ति-सम्पन्नानां मानवानां प्रतिकृतिः तत्तन्मनोवृत्तिरागप्रतिफलिता भिन्नभिन्ना पृथगेव दृश्यत इति । इत्थञ्चेमे देवासुरात्मके, वृत्तिस्वरूपे सर्व-प्रत्यक्षगम्ये एव । सर्वेष्वपि मनुष्यसमाजेषु देवासुरयोः सत्ता प्रकारान्तरतोऽभ्युपगतैवावलोक्यते । यथा हि आर्य्याः सनातनधर्मावलम्बिनो देवासुरसत्तामङ्गीकुर्वन्ति तथा पारसीका अपि 'अहूरं देवा' इतिगणद्वयमङ्गीकुर्वन्ति । ईसानुगा मोहम्मदीयाश्च 'फिरिस्ता शैतान' इति वर्गद्वयमुररीकुर्वन्त्येव । एवञ्च सुरासुरभेदेन जगत्सञ्चालकशक्तिं सर्वेऽपि पृथक् स्वसमाजानुरूपामामनन्त्येवेति नास्ति विरोधोऽत्र केषामपि । सनातनधर्मशास्त्रादिषु देवासुरसृष्टिरहस्यं बहुशो विस्तृतमेव समुपलभ्यते ।

यावत्यो हि सिद्धयः सन्ति ताः सर्वा अपि त्रिधा एव विभक्ता ज्ञेयाः । तथा हि ज्ञानसम्बन्धिनी सिद्धिराध्यात्मिकी, कर्मसम्बन्धिनी आधिदैविकी सिद्धिः कथ्यते, स्थूलपदार्थसम्बन्धिनी आधिभौतिकी सिद्धिश्चोच्यते । आसां त्रिविधानामपि सिद्धीनां दैवे जगति या आधिदैविकस्वरूपा देव्यः सन्ति ता एव त्रिविद्याशब्दवाच्याः । तन्त्रान्तरेषु त्रिविद्यानां कृपाप्राप्तये तासां वशीकारेण च सिद्धयवाप्तये बहव उपाया विवेचिताः सन्ति ।

तत्र तिसृणामपि सिद्धीनाम् एकत्रैकदैव प्राप्तिरतिदुर्लभा समाम्नायते ।

# सूर्योदयः ।

सप्तमे वर्षे } आश्विनस्य पूर्णिमा सं० १९८८ । { चतुर्थ संख्या

## सम्पादकीया अभिप्रायाः ।

### सनातधर्मसंरक्षणोपायाः ।

इदानीन्तने काले भारतवर्षवासिनां, विशेषतः सनातनधर्मावलम्बिनां सन्निधाने जीवनमरणसम्बन्धी प्रश्नः समुपस्थितो वर्तते । इमां संकटशतसमाकुलामवस्थामतिवाह्य यदि तैश्चिरजीवनमधिगन्तुमभिलष्यते, तदा समुपेक्षाभावमालस्यं च सुदूरमपास्य जागर्तिपरैः सङ्घटितैश्च भवितव्यम् । सङ्घटनस्य केवलं नामश्रवणेनैव न कार्यं सेत्स्यति; कार्यरूपेण तस्य परिणति नितरां समुचिता । सभां विरचय्य वाग्धाराभिः, धर्मनाम्ना धनोपार्जनैः, धर्मकञ्चुकेन आत्मानमाच्छाद्य कार्यक्षेत्रेऽपि समवतीर्य पारस्परिकवादविवादादिभिः सम्प्रति न भविष्यति कार्यसिद्धिः । एतर्हि सर्वश्रेणिगै विविधैः साम्प्रदायिकैश्च एकस्यैव धार्मिककेतोस्तले समागत्य ध्रुवमात्मरक्षा विधेयेति ।

वर्णाश्रमधर्मावलम्बिनां हिन्दूनां संग्रन्थनं, सङ्घटनम्, सम्वर्द्धनं च आत्रिंशद्वर्षेभ्यः श्रीभारतधर्ममहामण्डलेन यथाशक्ति समनुष्ठीयते । सनातनधर्मणामखिलभारतवर्षव्यापि महामण्डलमेवाद्वितीयं संस्थानकम् । एतदेव सनातनहिन्दुजातीयानां प्रतिनिधिसभारूपेण भारतशासकाः, धर्माचार्याः, स्वाधीना नरपतयः, साधारणा जनाश्च मन्यन्ते । बहुभिर्विरोधिभिः सुदीर्घकालात् समये समये समाक्रान्तापीयं सभा स्वकीयमात्मानं परिरक्षन्ती स्वीयां सजीवतां च परिचाययन्ती साम्प्रतमपि सत्यमूलकं स्वीयमात्मबलं प्रदर्शयत्येव । यद्यपि संस्थाया एतस्याः सहस्रं सदस्याः सन्ति । किन्तु संग्रन्थनस्य विचारतः पञ्चविंशतिकोटिहिन्दुप्रतिनिधीनामियं संख्या न संजनयति सन्तोषं सतां स्वान्तेषु । अतोहि सनातनधर्मावलम्बिनां भ्रातॄणां भगिनीनां च सन्निधाने

सादरं सविनयं च मदीयमदो निवेदनं यत् तैस्ताभिश्च सन्तोषप्रदसमधिक-संख्यया सभाया अस्याः सदस्यतां स्वीकृत्य त्रिकालज्ञमहर्षिप्रदर्शितस्य तस्य मार्गस्यानुसरणं क्रियतां, यतोऽभ्युदयनिःश्रेयससिद्धिः स्यात्।

एतद्धर्मसभाधार्मिकपताकातले समुपस्थातुं सुविचारपूर्णपद्धतेरङ्गीकारात् यद्यप्यस्याः संसद् आधर्माचार्यं राजानो महाराजा धनिनो दरिद्राश्च सदस्यतामङ्गीकृतवन्तः सन्ति; परन्तु तस्याः साधारणसभ्यतापरिपाटी नितरां सुमनोहरा सर्वजनहिताधायिका च। अस्यां संस्थायां सम्मेलनेन न केवलं पारलौकिको धार्मिक एव, किञ्च व्यक्तिगतो महत्त्वपूर्णो लौकिकश्च लाभो वर्त्तते। यस्य संक्षिप्ता विवृति निम्नतो निर्दिश्यते—

(१) साम्प्रतिके काले सनातनधर्मावलम्बिनां सामाजिकशक्तिवृद्धिं, स्वधर्मज्ञानप्रचारं, वर्णाश्रमश्रृङ्खलासंरक्षणं च समुद्दिश्य श्रीभारतधर्ममहामण्डलं द्वारीकृत्य संस्कृतं मासिकपत्रं "सूर्योदय" नामकं, द्वैभाषिकं (हिन्दी-अंग्रेज़ी) "भारतधर्म" नामकं च प्रकाश्यते। द्वयोरेकतरं यथेच्छं साधारणसदस्यैरपि विना मूल्यं लभ्यते। प्रत्येकं वार्षिकं मूल्यं मुद्रात्रयम्।

(२) महामण्डलसदस्याः किल स्वाभाविकरूपेणैव तत्संस्थापितस्य "समाजहितकारिकोष" स्यापि सभ्याः परिगण्यन्ते। ते च स्वसंयुक्तकुटुम्बस्य बहूनामपि नरनारीणां समाजहितकारिकोषसदस्यतासम्पादनपूर्वकं विवाहादिव्ययसाध्यविविधविधेयावसरेषु धनसाहाय्यं कर्त्तुं शक्नुवन्ति। कोषोऽयं मध्यवित्तानां हिन्दूनां पारिवारिकधनसंकटसमये सहायतां प्रदातुमेव संस्थापितो वर्त्तते। इदानीं समये न केवलं भारतवर्षे एव, किन्तु निखिलेऽपि भूमण्डले कार्याभावः प्रवर्द्धते। मध्यवित्तमानवानामाय एतावान् स्वल्पतरोऽस्ति यत् गार्हस्थ्यं व्ययमतिवाह्य धनसंकटावस्थायाः कृते निजायतो न मनागपि ते परिरक्षितुं शक्नुवन्ति। एतादृशेभ्यो मानवेभ्यः स्वपुत्रकन्यादीनां विवाहेषु निजानां सम्बन्धीयानां श्राद्धादिषु वा कोषतोऽस्मात् सहस्रं रूप्यकाणि १०००) सहायतारूपेण दीयन्ते। एतत्कोषनियमानां सारल्यात् साधारणयाश्च साधारणा अपि स्त्रियः पुमांसश्च यथेच्छं लाभं प्राप्स्यन्ति। एतत्कोषस्य राजेष्टत्वमपि संजातम्। अतो नाल्पीयस्यपि कपटशङ्का हानिशङ्का भयशङ्का वा सम्भावनीया।

(३) श्रीभारतधर्ममहामण्डलस्य सभ्येभ्यः सुन्दरं सचित्रमेकं मानपत्रमप्यर्प्यते येन तेषां प्रतिष्ठावृद्धिर्भवति। आङ्गल-हिन्दीभाषामयानि पुस्तकानि विविधान्यन्यान्यपि मुद्रितवस्तूनि तेभ्यो दीयन्ते।

(४) धर्म-समाजसम्बन्धीयानां शङ्कानां समाधानं व्यवस्थासम्बन्धि-

परामर्शदानं च स्वकीयसदस्येभ्यो दक्षिणाग्रहणमन्तरेणैव संस्थेयं विदधाति ।

( ५ ) स्वीयैः सभ्यैः समुपस्थापितानां धार्मिकसामाजिकानां प्रश्नानां समाधानं स्वीये मुखपत्रे "भारतधर्मे" "सूर्योदये" च प्रकाश्य संस्थेयं तेषां साहाय्यं करोति ।

( ६ ) सनातनधर्मसम्बन्धसंवलितग्रन्थलेखक-प्रकाशकानां पुस्तक-प्रचारादिकार्येषु सभेयं सहायतामनुतिष्ठति, तत्पुस्तकानां नामावली स्वकीयेषु समाचारपत्रेषु अमूल्यग्राहं प्रकाशयति । उपर्युक्तान् ग्रन्थान् स्वीयपाठ्यपरीक्षा-क्रमेऽपि संनिवेशयति ।

( ७ ) श्रीभारतधर्ममहामण्डलतः प्रकाशमापन्नाः धर्मग्रन्थाः, वार्षिक-पुस्तकं "महामण्डल डाइरेक्टरी" नामकं ग्राहकान्तरापेक्षयाऽल्पमूल्येनैव सद-स्येभ्यो दीयन्ते । इत्यादि ।

एतादृशबहुविधानां लाभानां सत्त्वेऽपि श्रीभारतधर्ममहामण्डलस्य साधा-रणसदस्यताशुल्कं केवलं वार्षिकं रूप्यकद्वयमेव संरक्षितमास्ते । मनुष्याणां जीवनं बहुमूल्यं सदपि किञ्चित्कालस्थायि । न चापि तेषां युवावस्था, कार्य-शक्तिः, धनोपार्जनपद्धतिश्च सर्वदा समाना स्थातुमर्हति । अतः सर्वविधाना-मपि भ्रातृभगिनीनां समीपेषु सादरं सविनयं सानुनयं साग्रहं चास्माकं निवेदनं यदतिशीघ्रमेव श्रीमहामण्डलसभ्यतामङ्गीकृत्य विपुलं धनं धर्मञ्चाधिगत्य स्वकीय-सर्वोच्चसंघटनद्वारा देशोद्धारकार्येष्वग्रे सरन्तु, स्वधर्मं स्वदेशं च परिरक्षन्तु । येषां यासां वा स्वधर्मस्य स्वजातेः स्वदेशस्य च प्रेमलेशोऽपि विद्यते, तादृशाः सनातनधर्मप्राणाः नरो नार्य्यश्च श्रीमहामण्डलस्य भारतवर्षव्यापिसंघटनरूपमहा-यज्ञेऽस्मिन् अवश्यमेव तत्सदस्यतामङ्गीकृत्य स्वीयसहयोगं ददतु । विविध-प्रकाराणां लाभानामुपरि दृष्टिपातं कृत्वा स्वधर्मस्वजातिस्वदेशकृते वार्षिको हि रूप्यकद्वयस्य त्यागो न महान् विद्यते । त्यागश्चाप्येष तेषामनेकप्रकारलाभाय प्रकल्पते । रूप्यकद्वयेनैव रूप्यकत्रयलभ्यं मासिकपत्रमपि ते लब्धुं शक्ष्यन्ति । अन्यच्च-श्रीभारतधर्ममहामण्डल-संस्थायाः सदस्यत्वमङ्गीकृत्य तांस्तान् महोप-कारान् अधिगन्तुं पारयिष्यन्ति येषां दिङ्मात्रं प्रदर्शनमस्माभिरुपरि कारित-मास्ते ।

ये याश्च महानुभावा महोदयाः स्वदेश-स्वधर्म-स्वजाति-प्रेम्णा जातीयमहा-यज्ञेऽत्र भागं ग्रहीतुमीहन्ते, ते ताश्च कृपया रूप्यकद्वयेन सार्द्धं सदस्यतासूचकं पत्रं "प्रधानाध्यक्ष, श्रीभारतधर्ममहामण्डल, जगत्गंज, बनारस कैन्ट" इति संकेतेन शीघ्रं प्रेषयन्तु ।

## शिवसायुज्यं कामयामहे ।

——:०*०:——

नितरां विषीदति चेतो यत् धर्ममार्तण्ड-महामहोपाध्याय-पण्डितप्रवर-नित्यानन्दपर्वतीयमहोदयानां सितम्बरमासस्य तृतीयायां तिथौ ( १९३१ ) मध्याह्ने मणिकर्णिकातीर्थे शरीरावसितिः संवृत्तेति । पर्वतीयमहोदयानां कैलासवासेन श्रीमत्याः संस्कृतसरस्वत्या अनिर्वचनीया क्षतिरभूत् । वर्षेऽस्मिन् महामहिमशालिनां विदुषां वियोगदुःखेन वाराणसी तत्रत्या पण्डितमण्डली च निरतिशयं सन्तपति । कैलासवासिनामेतेषां व्याकरण-न्याय-सांख्य-ज्यौतिष-कर्मकाण्ड-धर्मशास्त्रादिषु पाण्डित्यमलौकिकमासीत् । एषां धार्मिकजीवनं तु असत्प्रशंसनमतिशेते, त्याग-तपश्चरणादिकञ्च भारतीयसंस्कृतज्ञानां सुविदितचरमेवास्ति । एतेषां जन्म १९२४ विक्रमवर्षस्य कृष्णत्रयोदश्यां समभूत् । द्वात्रिंशद्वर्षावस्थातः स्वीयसहधर्मिणीवियोगेन ब्रह्मचर्यपालनपूर्वकमेतैरनेके विद्यार्थिनोऽध्यापिताः प्रख्यातयशसो विद्वांसश्च कृताः । बहूनां व्याकरणादि-ग्रन्थानां टीकाटिप्पण्यः, अनेके मौलिकाश्च ग्रन्था एते लिखिताः सन्ति । शोक-सन्तप्ता वयं शिवसायुज्यं तेषां कामयामहे ।

———

## संसारस्य सिंहावलोकनम् ।

———०:*:०———

फ्रांसदेशस्य शासका "वोयडिविन्सिनिस" नामके स्थाने सकलस्य संसारस्य पञ्चानामपि महादेशानाम् ( एशिया-योरप-आस्ट्रेलिया-अमेरिका-अफ्रिका ) सूक्ष्मरूपेण निर्माणं कृतवन्तः सन्ति । प्रत्येक देशस्य सुप्रसिद्धानि दर्शनीयानि भवनादीनि तत्र निर्मितानि । संसारस्य मानचित्रमिदं २५० एकड़-भूमौ निर्मितं वर्त्तते । अस्य निर्माणे ९०, ०० ०० ००० संख्यकानां रूप्यकाणां व्ययो जातः । अस्य सम्पूर्णसंसारमानचित्रस्य दर्शने प्रायः पञ्च घटिका व्यतियन्ति । भूमण्डलस्य सर्वेषामपि दर्शनीयानां विचित्राणां च स्थानानां तत्र दर्शनं क्रियते ।

× × × ×

व्यतीते यूरोपीयमहायुद्धे आङ्गलस्थान-फ्रांस-जर्मनी-रूसादीनां देशानां बहवः पुमांसो मृता इति सर्वे जानन्ति । अतः कारणात् तेषु देशेषु पुरुषाणाम-

पेक्षया स्त्रियो वृद्धिं गताः सन्ति । फ्रांसे २० लक्षसंख्यकाः, जर्मनीदेशे ३० लक्ष-संख्यकाः, रूसे ४० लक्षसंख्यकाः, आङ्गलदेशे २० लक्ष संख्यकाः, पोर्टुगाले च ५ लक्षसंख्यकाः स्त्रियः पुरुषाणामपेक्षया अधिकाः सन्ति । फ्रांसस्य शासकाः पुरुषाणां न्यूनताहेतुना पुत्रानुत्पादयन्तीभ्यः स्त्रीभ्यः पारितोषिकाणि प्रयच्छन्ति । फ्रांसनिवासिन्यो विलासिन्योऽविवाहितावस्थायामेव समधिकं सुखमाकलयन्ति, इत्यत एव तत्र पुरस्कारप्रबन्धः कृतः ।

× × × ×

यूरोपीयेन वैज्ञानिकेनैकेन निद्रापरिचायकमेकं यन्त्रमाविष्कृतम् । खट्वायां नियोजितेन यन्त्रेणैतेनेदमवगन्तुं शक्यते यदत्र शयनकर्त्ता कदा निद्रातुमाव्रजत्, कियत्कालं च पार्श्वपरिवर्त्तनमकरोत्, कदा निद्रितः कदा वा निद्रामजहादिति ।

\+ × × +

वियना—( आस्ट्रिया ) स्थाने चत्वारिंशद्वर्षदेशीयः कोऽपि पुमान् उदरपूरभोजनानन्तरं सार्द्धदशसेटकपरिमितं दुग्धमाहरति । एवमयमेकस्मिन् वर्षे नवतिमणमितं दुग्धं नवमणमितसर्करासहितं पर्याप्तभोजनानन्तरं पिबति । एवं करणेनाऽपि पुमानयं न वा उदरव्याधिना ग्रस्तो न वा माथुरश्चतुर्वेद इव स्थूलकायः संवृत्तः ।

× + + ×

भारतवर्षे २२८२२६ संख्याकेषु पुं विद्यालयेषु ६७६७३४४ संख्यका विद्यार्थिनः शिक्षामधिगच्छन्ति । स्त्रीणां कृते च २७४२५ पाठशाला विद्यन्ते । आसु १००१०३२ विद्यार्थिन्यः पठन्ति ।

× × × ×

संसारेऽत्र सर्वतोऽधिकशिक्षाप्रचारः डेनमार्कस्थाने जर्मनी-देशे च निभाल्यते । तत्र शिक्षां विना एकोऽपि पुरुषः स्त्री वा न वर्त्तते । भारते प्रतिशतम् अष्टौ पुरुषाः शिक्षिताः सन्ति ।

× × × ×

भारते कुष्ठरोगग्रस्तानां खञ्जानाम् अन्धानां च ८६०००६६ मिता संख्या वर्त्तते । विदेशेषु प्रवासिनां भारतवासिनां २१३४६६६ संख्या विद्यते । अमेरिकायां प्रतिमानवं वार्षिक आयः १५५६० रूप्यकमितः, इङ्गलैण्डे १२२१।), भारते च प्रति मनुष्यं वार्षिक आयः केवलं ४२॥) सार्द्धद्विचत्वारिंशन्मुद्रात्मक एवास्ति ।

\+ × + +

वर्त्तमानसंवत्सरमनुष्यगणनानुसारेण भारतवर्षस्य ३५,२६,८६,८,७६ जनसंख्या वर्तते । अत्र १८,१६,२१९१४ पुरुषाः, १७,१०,६४,९६२ स्त्रियश्च सन्ति । उपर्य्युक्तजनसंख्यायां २२ ८३,३०,९१७ हिन्दवः, ७,७७,४३,९२८ माहम्मदाः ४३,०६,४४२ सिक्खाः, ६६,६१,७९४ खैस्ताश्च । जनसंख्यायामत्र ब्रिटिश-भारतीयानां २७,१२,७३,१०७ संख्याऽस्ति । तत्र १७,६६,३४,४३५ हिन्दवः ६,७०,८५,५१० माहम्मदाः ३१,९२,१६६ सिक्खाः, ३५,३१,७०३ खैस्ताश्च । विभिन्नप्रान्तानां जनसंख्या निम्नतो निर्दिश्यते । अत्र हिन्दवो माहम्मदाश्च सन्ति नाऽन्ये ।

| | हिन्दवः | माहम्मदाः | संयुक्तसंख्या |
|---|---|---|---|
| अजमेरयुक्ते मेदपाटे | ४,४३,५०६ | ९७,१३३ | ५,६०,२९२ |
| आसामे | ४६,३१,७६० | २७,५५,९२४ | ८६,२२,२५१ |
| बलोचस्थाने | ४१,४३२ | ४,०५,३०६ | ४,६३,५०८ |
| बङ्गप्रान्ते | २,१५,३७,९२१ | २,७५,३०, ३२१ | ५,०१,२२,५५० |
| उत्कलयुतविहारे | ३,१०,१०,६६० | ४२,६४,६७६ | ३,७६,७६,५७६ |
| मोहमय्याम् | १,६६;१६,८६६ | ४४,५७,१३३ | २,१८,५४,८४१ |
| वर्मप्रान्ते | ५,७४,६९७ | ६;०६,८४१ | १,४६,४५,९६६ |
| वरारयुक्तमध्यप्रान्ते | १,३४,६०,१०५ | ६,८२,८५४ | १,५५,०७,७२३ |
| कुर्गे | १,४६,००७ | १३,७७७ | १,६३,३२७ |
| इन्द्रप्रस्थे | ३,९९,८६३ | २,०६,९६० | ६,३६,२४६ |
| मद्रासे | ४,०३,९२,९०० | ३३,१६,०२३ | ४,५६,७५,६७ |
| सीमप्रान्ते | १,४२,९७७ | २२,२७,३०३ | २४,२५,०७७६ |
| पञ्चाम्बुनदे | ६३,२८,५८८ | १,३३,३२,४६० | २,३५,८०,८५२ |
| युक्तप्रान्ते | ४,०९,०५,५२३ | ७१,८१,९२७ | ४,०,४,०८,७६३ |

× × × ×

अमेरिकादेशवासिनो बालकबालिकानां संरक्षणार्थं कीदृशं यत्नमातिष्ठन्तीति वार्ता साम्प्रतिकघटनयैकया सुस्पष्टं विज्ञायते । न्यूयार्कनगरे लुण्ठकानां दुष्कर्मकारिणामेकः समवायस्त्रिवर्षदेशीयमेकं बालकं गुडकेन व्यापादयत् । कारणेनैतेन तत्रत्या जनता प्रज्वलितक्रोधाग्निरभवत् । स्थाने स्थाने सभां कारं कारं कुकृत्यस्यैतस्य घोरं विरोधमन्वतिष्ठत् । तत्रत्येन रक्षाविभागेन त्रिंशत्सहस्रसंख्यका रक्षिणो नियुक्ता यत् ते हत्याकारिणं तं जीवन्तं मृतं वा निगृह्णीयुः । हत्याकारिणं निग्रहित्रे ७५०००) पञ्चसप्तति सहस्रमुद्रात्मकं पारि-

शस्त्रसम्पाते अशीतिः सैनिकाश्चीनीया मृता सार्द्धचतुःशतं निगृहीताश्च। जापानीया सेना तत्रत्येषु शस्त्रागारेषु प्रमुखस्थानेषु च निजाधिकारं स्थापितवती। चीनसेनाऽपि मुकदनं प्रतिष्ठते, कोरियातो जापानसेनाऽपि मञ्चूरियां प्रयाति, परमुभयदेशशासकाः संघर्षमिमं शान्तयितुं प्रयतन्ते। परिस्थितिपर्यालोचनेनेदं ज्ञायते यदुपर्युक्तहत्याकारणस्य यावत् समाधानं न भविष्यति, न तावत् जापानसेना मञ्चूरियां त्यक्ष्यति।

× × × ×

वर्त्तमानसंवत्सरमनुष्यगणनानुसारम् इटलीस्थानस्य जनसंख्या ४,२१,१८,४३५ मिता विद्यते। १९२१ ईसवीयवर्षमानवगणनापेक्षया तत्रत्या संख्या ३४०७८५९ समधिका जाता। इटलीस्थाने 'तानाशाह सिन्योर मुसोलिनी' महाशयेन तत्रत्या नागरिकाः सम्बोधिता यत् यदि संसारे इटली किमपि कृत्वा दर्शयितुमिच्छति तदा १९५० ईसवीयवर्षाभ्यन्तरे तदीया जनसंख्या ६०००००००भवतु। तत्परिणामेनैव तत्रत्योत्पत्तिपरम्परा नितरां प्रवर्द्धते। यूरोपे जनसंख्याधिक्ये प्रथमं स्थानं जर्मनीदेशस्य, द्वितीयम् इटलीप्रदेशस्यैवास्ति। यदि इटली-जनसंख्या तथैव भविष्यत्यपि समये वृद्धिंगमिष्यति, तदा १९५० ईसवीयवर्षाभ्यन्तरे तत्रत्या मनुष्यसंख्या नूनमेव ६०००००००मिता भवितुं शक्ष्यति।

× × × ×

व्यतीतेन यूरोपीयमहायुद्धेन हेतुना संसारेऽत्र स्त्रीणां कोटिः वैधव्यमनुभवति। १९१९ ईसवीये वर्षे केवलम् इङ्गलैण्ड एव ३५८००० विधवा विश्रमवृत्तिं (पेन्शन) लभन्तेस्म। आसु बहुभिरेव स्त्रीयः पुनर्विवाहो विहितः। वर्त्तमानसंवत्सरस्य तत्रत्यमनुष्यगणनासंख्यातो विज्ञायते यत् ११८००० विधवानां विश्रमवृत्तिः पुनर्विवाहकारणात् संनिरुद्धा। इदानीं केवलं १४०५५० विधवाः किल तत्र विश्रमवर्त्तनं लभन्ते।

+ + + +

अफगानस्थाने पञ्चशतक्रोशं लम्बायमानो धूम्रयानमार्गो निर्मीयते। तदर्थम् अफगानशासको जापानीयान् तत्कलाकोविदान् आहूय नियुक्तवानस्ति। श्रूयते कार्यस्यैतस्य पूर्त्तये जापानेन स्वकीया ५००००००००मुद्रा अफगानस्थानाय प्रदत्ता इति।

# सूर्योदयः ।

ले०—श्रीदिनेशझा ।

—※:०:※—

( १ )

विद्वन्मण्डनमण्डली जलजिनी यं सर्वदैवेहते
नोलूकाञ्जजनः कदाचिदपि यश्चैवेहते शत्रुवत् ।
बाला संस्कृतभारती स्वमनसस्सङ्कल्पसम्पूर्त्तये
यश्चाश्वीहत एव सोऽयमभवत् "सूर्य्योदयः" कान्तिमान् ॥

( २ )

पूर्वं व्यासां सततवितता पत्रिका जारिकाणा-
मासीत्प्रौढिः कलितयशसाम्प्रेमिवर्गाश्रितानाम् ।
दृष्टे यस्मिन्नथ विचकितास्सङ्गभङ्गात्प्रियाणां
छिन्दन्ते तास्तदरिसदृशस्यैव "सूर्योदयो"ऽयम् ॥

( ३ )

आनन्दो "मञ्जु–भाषिण्य" विरतसुरताज्जायमानस्समानः
येषाञ्चित्ते सुखं नो समधिकमभवत् "सुप्रभाते"ऽपि जाते ।
प्रोद्यन्मोदाकरादप्यवनिसुरजनानान्तु "सम्मेलनाच्च"
पूर्णामोदन्न जाताः, समुदितमनसःसन्तु "सूर्य्योदयेन" ॥

( ४ )

निद्रालसताधीनस्सन्नहमिह वा समाश्रयन्नासम् ।
किन्त्वथ सत्पथनेता जातः "सूर्य्योदयो" दृष्टः ॥

———

# कलावश्वमेधानुष्ठानम्।

हरिवंशपुराणान्तर्गतभविष्यखण्डे दृश्यते यदश्वमेधार्थं प्रवृत्तो जनमेजयः पाकशासनोपरि क्रुद्धोऽश्वमेधं परित्यज्य शापमदाद् यदद्य प्रभृति कोऽपि क्षत्रियो नाश्वमेधेन यजेतेति। तद् यथा-"जनमेजय उवाच--

यद्यस्ति मे यज्ञफलं तपो वा रक्षतः प्रजाः।
फलेनानेन सर्वेण ब्रवीमि श्रूयतामिति॥
अद्यप्रभृति देवेन्द्रमजितेन्द्रियमस्थिरम्।
क्षत्रिया वाजिमेधेन न यक्ष्यन्तीति शौनक!"

कौटिल्यप्रणीतार्थशास्त्रेऽपि कथेयं सूत्ररूपेण लिखिताऽस्ति—

"कोपाज् जनमेजयो ब्राह्मणेषु विक्रान्तः" इति।

निर्दिष्टेभ्यो वाक्येभ्यो निश्चीयते यज्जनमेजयवाक्यानुसारेण क्षत्रियाः सुप्रसिद्धेनाश्वमेधेन महेन्द्रयजनमत्यजन् इति।

"अश्वालम्भ" मित्यादीनि वाक्यान्यपि पूर्वोक्तमेवाऽर्थं द्रढयन्ति। यद्यपीदं जनमेजयकृतमश्वमेधनिवारणं श्रूयते, तथाप्येकान्ततो नाश्वमेधनिरोधः क्षत्रियेष्वभूत्। तत्रैव हरिवंशपुराणे जनमेजयं प्रति भगवान् बादरायणो भविष्यन्तमश्वमेधं सुस्पष्टं निगदितवान्। तद् यथा—

"औद्भिज्जो भविता कश्चित् सेनानीः काश्यपो द्विजः।
अश्वमेधं कलियुगे पुनः प्रत्याहरिष्यति॥
तद् युगे तत्कुलीनश्च राजसूयमपि क्रतुम्।
आहरिष्यति राजेन्द्र! श्वेतग्रहमिवान्तकः॥"

(हरिवंशपुराणम्)

वाक्येनानेन सिध्यति यत् कलियुगेऽप्यश्वमेधो जात इति। पूर्वनिर्दिष्टाश्वमेधकर्त्तुः समयो नाम च पूर्ववृत्तगवेषणया स्पष्टं विज्ञायते।

इतिहासविदामिदं मतं यत् भगवान् महाभाष्यकारः पतञ्जलिमुनिः, मौर्यसचिवः सेनानीः पुष्पमित्रनामा च समकालिकौ बभूवतुः। मौर्यवंशीया नृपाः समभूवन् बौद्धधर्मानुयायिनः। तत्सेनानीश्च पुष्पमित्रो ब्राह्मणो वैदिकमतानुयायी बभूव। बौद्धानां समुत्पीडनेन वैदिकधर्मस्य ह्रासः, यज्ञादिकर्मणां च बौद्धराजशक्त्या नियन्त्रणमभूत्। प्रजानां धार्मिकक्षोभतो हतेऽन्तिममौर्यनरपतौ बृहद्रथे सेनानीः पुष्पमित्रो हि साम्राज्यकर्णधारोऽभूत्। तेन (पुष्पमित्रेण)

अश्वमेधोऽनुष्ठितः। अत्र प्रमाणभूतं कविकुलतिलककालिदास-प्रणीत-"मालविकाग्निमित्र"-निम्नाङ्कितं वाक्यम्। तथाहि—

"स्वस्ति। यज्ञशरणात् सेनापतिः पुष्पमित्रो वैदिशस्तत्रस्थमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्येदमनुदर्शयति। विदितमस्तु। योऽसौ राजसूययज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो निरर्गलस्तुरङ्गो विसृष्टः, स सिन्धोर्दक्षिणरोधसि चरन् अश्वानीकेन यवनेन प्रार्थितः। तत् उभयोः सेनयो र्महानासीत् सम्मर्दः।

ततः परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्त्तितः॥

सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताऽश्वो यक्ष्ये। तदिदानीं भवता बधूजनेन सह यज्ञसेवनायागन्तव्यमिति।"

इदमेव भगवतो व्यासदेवस्य निर्दिष्टेन "औद्भिज्जो भविता कश्चित्"—इत्यादिवाक्येन समर्थ्यते।

अस्य मौर्यसचिवस्य पुष्पमित्रस्य स्थितिसमयो विक्रमादित्यात् शतं समाः पूर्वत एवेतिहासविदः समामनन्ति। मौर्यसाम्राज्यविध्वंसानन्तरं विशालेऽस्मिन् भारते गुप्तवंश्यानां नरपतीनां साम्राज्योदयो जातः। गुप्तसाम्राज्योदयकालस्तु विक्रमस्य चतुर्थी शताब्दी सुनिश्चिता। एते (गुप्तवंश्याः) नरपतयो वैदिकाः, विशेषतः शैवाः समभूवन्। अस्मिन्नेव वंशे लब्धजन्मा सम्राट् समुद्रगुप्तोऽश्वमेधमनुष्ठितवान्। अत्र प्रमाणं तु समुद्रगुप्ततनयस्य द्वितीयचन्द्रगुप्तविक्रमादित्यस्य मथुरास्थः शिलालेख एव। तद् यथा—
mathura town Inscription Chandegnpt II "........................................................................सर्वराजोच्छेत्तुः पृथिव्यामप्रतिरथस्य चतुरुदधिसलिलास्वादितयशसो धनदवरुणेन्द्रान्तकसमस्य कृतान्तपरशो र्न्यायागतानेककोटिगोहिरण्यप्रदस्य चिरोत्सन्नाश्वमेधाहर्त्तुः महाराजश्रीगुप्तप्रपौत्रस्य महाराजाधिराज श्रीघटोत्कचपौत्रस्य महाराजाधिराजश्रीचन्द्रगुप्तपुत्रस्य लिच्छिविदौहित्रस्य महादेव्यां कुमारदेव्यामुत्पन्नस्य महाराजाधिराज-श्रीसमुद्रगुप्तस्य पुत्रेण महादेव्यां दत्तदेव्यामुत्पन्नेन परमभागवतेन महाराजचन्द्रगुप्तेन"इत्यादि।

अत्र रेखाङ्कितविशेषणेन सुस्पष्टं समुद्रगुप्तस्य अश्वमेधानुष्ठातृत्वं प्रतीयते। अस्य समुद्रगुप्तस्य पौत्रेण कुमारगुप्तेनापि अश्वमेधानुष्ठानमाचरितमिति तदीय (कुमारगुप्त) मुद्रासु समुल्लिखितेन "अश्वमेधपराक्रम" इत्यनेनानुमातुं शक्यते। समुद्रगुप्तस्य समयः ३३५ ईसवीयवर्षादारभ्य ३८० पर्यन्तम्, कुमार-

गुप्तस्य च समयः ४२१ खिष्टाब्दात् ४४१ पर्यन्तं पुराविदो व्याहरन्ति। इत्थमपि श्रूयते यद्दीशवीयैकादशशताब्द्यां तत्समीपतो वा अनङ्गपालेन दिल्लीश्वरेण अश्वमेधः कृतः। मृच्छकटिक-शूद्रकस्य अश्वमेधानुष्ठानं संस्कृतज्ञानां विदितचरमेवेति।

श्रीविन्ध्येश्वरीप्रसादशास्त्री।

---

# श्रीशिवचन्द्रमिश्रः।

लेखकः—साहित्यरत्न-श्रीभूपनारायणझा शर्मा।

(व्याकरण-न्यायाचार्यः)

——:०:——

योहि भवाम्बुधपदमध्यास्य अनुक्षणमनिर्वचनीयचिकित्साचातुरीचन्द्रिकोदञ्चनचमत्कृतदिङ्निचयश्चकोरायमाणचेतनमात्रचिकीर्षितदर्शनोऽत्रदेदीप्यतेस्म; सोऽद्य सद्य एवावद्यवृत्तिना दुर्दैवविधुन्तुदेनान्तर्हित इति कस्यनान्तर्हितमाकस्मिकशोकसन्दोहेनान्तर्हितकामानामहितकामानाञ्च। श्रूयते—

१९४८ वैक्रमाब्दे अधिसारन (छपरा) मण्डलान्तर्गतगङ्गातटनिकटस्थायिमानू-वुरग्राममतिप्रतिष्ठितशाकद्वीपीयवंशोदधिसमुन्मीलितः शिवानुग्रहफलतया चन्द्रसमकलतया च शिवचन्द्रेत्यमन्दश्रवणसुन्दरतास्पदपदसंकेतितश्च भवान्, निजाम्बागर्भाधिशयनषष्ठमास एव भवज्जनकसायुज्यविषादिन्यापि सञ्जातवंशमणिपरिस्फुरणप्रसादिन्या वैदुष्यविशेषशालिन्या निजजनन्या तुरीयवत्सरादेवारभ्य रामायणादिपुण्यकथाप्रकथय्य सद्यः सप्रतिभभवत्कृततदनुवादश्रवणसमुल्लासिन्या यथाक्रममक्षरविन्यासादिनिपुणीकरणपुरस्सरममरकोशादिकमभ्यास्य सप्तमे वत्सरे यथागृह्योक्तप्रकारमुपनयनसंस्कारसमुल्लासितः पण्डितप्रवरश्रीरामप्रकाशमिश्रतश्चन्द्रिकामध्येतुमारेभे। अधीतचन्द्रिकश्च सुधाधिकमाधुरीसम्भृतसंस्कृतसंलपनप्रसीदत्परिजनानुमत्या मुजफ्फरपुरमागत्यातिप्रशस्तपण्डितगोपीकृष्णशर्मतोऽध्येतुमुपक्रममाणो द्वादशे वत्सरे व्याकरणमध्यमपरीक्षामुत्तीर्य क्रमशः साहित्यतीर्थताञ्चोपलेभे। अथ सहैवानुषङ्गिकतया विषयान्तरमप्यधिगच्छन् कुलक्रमागततयैकान्तहृद्यामायुर्वेदविद्यामेव प्रधानतयाविद्यामिति हृद्यालोच्य हाजीपुरमेत्य अद्याप्यन्तेवासिमनोहारि-धन्वन्तरिप्रभृतिप्राक्तनाचार्यानुकारि, समुचिताऽऽयुर्वेदरत्नाकरेत्युपाधिधारिपण्डितश्रीव्रजबिहारिचतुर्वेदचरणारविन्दयोरच्छच्छायमध्युष्य-भिषग्वरश्रीहरिनन्दनझा-प्रभृतिभिः सम-

मायुर्वेदमध्येतुमुपचक्रमे । श्रीचतुर्वेदचरणा अपि भवदीयाप्रतिमप्रतिभा-प्रमुदिताः भवन्तमशनसौकर्यादिसम्पादनया स्वतनयादप्यधिकमुपलालयन्त आयुर्वेदप्रौढ़तामप्रापय्य स्वप्रदत्तमुद्राशतपञ्चकमूल्यकौषधिभिर्व्यवहर्तुं छात्राध्यापनञ्चकर्तुं मुजफ्फरपुरम्प्राहिएवन्, भवांश्च तत्रापि यथा गुरुचरणनिदेशमनुतिष्ठन् पण्डितश्रीकिशोरीझातः सांख्यमधीत्य तत्तीर्थपरीक्षामुत्तीर्य च १९१४ ईसवीये विहारपण्डितसभा-परिगृहीतायुर्वेदतीर्थपरीक्षामुत्तमकक्षायामुत्तरन् हिरण्यपदकम्प्रपेदे ।

अथ १९१७ ईसवीये भारताधीशविहारप्रान्तीयसचिवोद्घाटितमुजफ्फरपुरीयधर्मसमाजसंस्कृतमहाविद्यालयायुर्वेदाध्यापकं गवेषयद्भिस्तदधिकारिभिर्बलदेवमिश्रप्रभृतिभिर्भवदध्यापनसमीचीनशैलीसमुद्घोषणतः—सन्तुष्यद्भिः स्वयमाहूय तत्पदमधिष्ठापितो भवान् यथानियतसमयमधिमहाविद्यालयमध्याप्य सहस्रद्वयाधिकमासिकायालयनिजशारदामहौषधालयमनुदिनमाहूय सकलौषधिपरिचायनपुरस्सरतद्विरचनप्रकारशिक्षया आयुर्वेदाचार्यतां चिकित्सकाचार्यताञ्च प्रापितेन सञ्जातस्वनिरूपितश्यालतानुकूलप्रसादश्रीमत्कालिकाप्रसाद-रामदेवझा-प्रभृतिनाऽन्तेवासिशतेनाऽऽदिगन्तमवनिवलयमभिव्यापयामासेति न तिरोहितम् ।

न चैतावदेव, अपि तु भवतो लेखकललामतामशेषसहृदयोल्लासि साहित्योद्भासि सुललितवाग्मितामधनजननैसर्गिकानुग्रहशीलतामपरैरगदङ्कारैरसाध्यत्वेनाध्यवसिताया अपि रुजः समुपशमनकुशलताञ्चानुचिन्त्य को न स्वदश्रुमयलोचनोऽधुनोद्वीक्ष्यते । विशेषतश्च श्रीमच्चतुर्वेदिचरणाः सपरिवारगणाः, ये च पाटलिपुत्रीयायुर्वेदीयमहाविद्यालयाध्यक्षस्वसुतश्रीहरिनारायणचतुर्वेदिप्रभृतिसमक्षतायामपि स्वप्रसिद्धिप्रयोजक-पाण्डित्य-प्रकर्षशालितया भवत्येवानुषक्तचेतसश्चकासतिस्म भवन्मङ्गलाय च स्वसर्वस्वव्ययमपि तृणाय मन्यन्तेस्म ।

पाटलिपुत्रसञ्जातपञ्चदशाखिलभारतवर्षीयवैद्यसम्मेलने पाश्चात्यचिकित्सासरणिमनुसृत्य आयुर्वेदोक्तमतमाक्षिपतः कस्यचिन्मुखं स्वशास्त्रीयपक्षपोषणमुखेन पाश्चात्यपक्षप्रतिक्षेपपरेण व्याख्यानेन मलिनयन् तत्सम्मेलनसम्मिलित पं० श्रीमदनमोहनमालवीयमहोदयान् श्रीचतुर्वेदमहोदयांश्च कथमुल्लासयामासेति तत्सभ्या यथायथ्यनुस्मर्त्तुमर्हन्ति ।

हन्त तादृशमपि भवन्तं चतुर्विंशेसवीयत आरभ्य प्रमेहसंक्रान्तमेकत्रिंशेसवीयप्रथममासाद्राजयक्ष्मणाऽऽक्रम्यमाणमाकर्णयन्तः श्रीचतुर्वेदमहोदयाः स्व-

मुपसृत्य सपरिवारमनिलसलिलपरिवर्त्तनाय हाजीपुरमानीय प्रतिदिनमायुर्वेदोक्तविधिना स्वविद्यालयान्तेवासिभिर्हवनगोदानादिपूर्वकचिकित्सामारेभिरे। परन्तु कतिपयदिवसानन्तरमपि दुर्दैवप्रतिबद्धचिकित्साफलतया श्रीचतुर्वेदमहाशयाः कोइलवर शोणभद्रतटमधिवासयितुं पण्डितश्रीकालिकामिश्रप्रभृतितत्परिवारमाज्ञापयामासुः, किन्तु तथाऽनुष्ठितेऽपि फलानुपलब्ध्या पाटलिपुत्रीयगङ्गाप्रवाहवर्त्तिजलयानमेकमासमध्युष्य मोतिहारीप्रान्तीय मेहसीपत्तने पाश्चात्यपद्धत्यनुसारिचिकित्सकनिकटमधिवस्तुमारेभे।

अथ ततोऽपि परिवर्त्तनमननुभूय मार्चमासत्रिंशदिवसे अलमोड़ाम्प्रस्थाय तत्र कतिपयदिवसानवस्थाय च नैरुज्यासम्भावनया श्रीविश्वनाथसायुज्यमभिप्रेत्य काशीमागतः, तत्रापि च I. Sc. कक्षायामधीयानस्य स्वपारोक्ष्येऽपि परिवारभारक्षमतयोत्प्रेक्ष्यमाणस्य स्वज्येष्ठपुत्रस्य अकस्मात् सञ्जातविसूचिकया प्राणप्रयाणादुपचितशोकाद्दुद्गतया त्वरया काशीमपहाय स्वजन्मभूमिमागतः पञ्चषदिवसान्तरे स्वपत्तननिकटवर्त्तिगङ्गातरङ्गे विष्णुसहस्रनामादिपुण्यश्लोकं पठन् अप्रैल-मास-त्रिंशदिवस-द्विवादनावसरे परलोकमगादिति विषादमाजन्म न विस्मर्त्तुमर्हति पण्डितसमाजः। इति।

---

# नियमे विमर्शः

## ( बिहारोत्कल–संस्कृत–समितेः )

——:०※०:——

सर्वत्रैव सर्वस्मिन्विषये एकदा निर्धारितानि परीक्षापाठ्यपुस्तकानि चिरकालं सुस्थिराणि भवन्ति। यद्यपि पञ्चनदीयपरीक्षासु ग्रन्थानां परिवर्तनं प्रायस्त्रैवार्षिकं समलङ्करोति सर्वेषां दर्शनपथं, परन्तु न प्रधानतामापन्नानामपि तु नितरामप्रधानानां प्रधानाङ्गभूतानामकिञ्चित्कराणां तत्राऽपि परिमितसमयपर्य्यन्तं पाठ्यत्वेनोपकल्पितानामेवेति। व्याकरणे शब्देन्दुशेखरस्य, साहित्ये काव्यप्रकाशस्य, धर्मशास्त्रे मिताक्षरायाः, न्याये न्यायसूत्रस्य, परिवर्तनं न कस्याऽपि दृष्टिपथं श्रुतिपथं वा समासादितम्।

अथ वाराणसेयसाहित्याचार्य्य-शास्त्रिपरीक्षायाश्च कतिपयवर्षतः परीक्ष्यग्रन्थानां परिवर्तनशालिता समवेद्यते परन्तु तत्रावधारितग्रन्थानां सारतां समवेद्य सत्यं प्रमोदमावहति साहित्यरसिकानामन्तरात्मा। रसगङ्गाधरव्यक्तिविवेक–चित्रमीमांसादीनां प्रगाढगाम्भीर्य्यविषयमवेक्ष्य साहित्यमर्मविमर्शिनां परिश्रमशालिनां विदुषां प्रमोदप्रवाहः संप्लावयत्येवान्तरात्मानम्। आशासे च स्वीयां सनातनीं प्रथामनुसृत्य वाराणसीस्थपरीक्षासु परीक्ष्यग्रन्थनिर्वाचने समधिकृताः प्रस्तुतसमये परिकल्पितग्रन्थानां चिरस्थायितासम्पादने सर्वतोभावेन प्रयतमानाः भविष्यन्त्येव। यद्यपि प्रगाढपाण्डित्यमन्तरा न साम्प्रतिकनियमे

पाठ्यत्वेनावधारितानां ग्रन्थानामध्यापने कोऽपि प्रभुतामासादयितुं प्रभवति तथाऽपि परिकल्पितग्रन्थानां चिरस्थायित्वे तदध्यापनार्हं पाण्डित्यं न दुर्लभं व्युत्पन्नानामुद्योगशीलानां बाह्यानामप्यध्यापकानां किमुत तद्विधानां वाराणसेयानाम्।

विहारोत्कलसंस्कृतसमितिपरीक्षासु तु ग्रन्थानां सदातनी परिवर्तनशालिता समवलोक्यते तत्राऽपि विशेषतः साहित्यग्रन्थानामेवेति ना नोऽविदितं सर्वेषाम्। एतदेव तदध्ययनाध्यापनशीलानामप्रौढत्वस्य निदानम्प्रतीयते। श्रूयते च नूतननियमे साहित्याचार्य्ये काव्यप्रकाश-काव्यप्रदीपावभिनिविष्टौ भवेताम्। अत्र चैवं मीमांसा समुदेति यत्काव्यप्रकाशेनैव काव्यप्रदीपस्य विषयाणां प्रायः गतार्थत्वे उभयोरभिनिवेशः निष्फल एव। यदि रसगङ्गाधरव्यक्तिविवेकवक्रोक्तिजीवितचित्रमीमांसादीनामन्यतमस्य सर्वेषां वाऽभिनिवेशश्चेत्परमोचितं स्यात्। परन्तु तेषां कस्यापि सत्वरं पिरिवर्तनं यदि न भवेत्।

किञ्च नैषधस्य नवमसर्गात्परेषां सर्गाणां, ध्वन्यालोकस्य तृतीयोद्योतस्य च परीक्षातो निःसारणं तेषां गौरवेऽनवधानतां प्रमाणयति। एवं मध्यमातः किरातार्ज्जुनीयस्य तृतीयसर्गस्य वाग्भटालङ्कारस्य च वहिष्करणं न मनोरमम्। ग्रन्थनिर्वाचनावसरे यदि प्रधानविद्यालयस्य तत्तद्विषयाध्यापकानामनुमतिरपेक्षिता चेन्नैवं खेदस्य विषयः समुपस्थितो भवेदिति। यदि व्याकरणग्रन्थानां परिवर्तनं नावलोक्यते तदा किमपराद्धं साहित्येन। यदि च गजनिमीलिकया साहित्यग्रन्थानां परिवर्तनमेवाभिमतं तदधिकृतां तर्ह्यस्माकमाक्रन्दनमरण्याक्रन्दनमिवाऽऽस्ताम्।

अपरोऽप्येकः महान् खेदस्यावसरः साहित्यविदामन्तरात्मनि समुदेति यत् श्रुतबोधस्याप्यध्यापने वेपमानाः शुष्कवैयाकरणाः कथमपि सङ्घुष्टसाहित्यग्रन्थऽन्तेवासिनः साहित्याचार्यपरीक्षायां प्रेषयन्ति कलङ्कयन्ति च साहित्यगाम्भीर्य्यमिति यो यस्मिन्विषये आचार्यः स तस्मिन्नेव विषये आचार्यैं छात्रान्प्रेषयितुं शक्नोतीति विहारोत्कलस्य समितेः पुरातनो नियमो गतवर्षादेव हरिशङ्करशर्मणामादेशेन विपर्य्यस्तः। उपरितनेषु सर्वेषु विषयेषु संस्कृतसमितेः कार्य्यसम्पादकमहोदयानां दृष्टिपातो विधेय इति भूयोभूयः सम्प्रार्थयते।

श्रीगिरिजानन्दमिश्रः,
गयान्तर्गत-खरखुरास्थ-ब्रजभूषण-
विद्यालय-साहित्याध्यापकः।

———

# शोकाश्रुविन्दवः !

(१)

समस्त-सामन्त-शिरोविभूषणम्-
यशोदयाशीलगुणैकभाजनम्।
प्रभ्वादिनारायणसिंहभूपति-
र्विहाय काशेयजनान् क हा ! गतः॥

(२)

शोकाकुलातिकरुणार्तरवैर्विलप्य
संमूर्च्छिता पुनरहो प्रतिबोधिताऽपि।
हा ! काशिराज ! तव काशि-प्रजा विषण्णा
कस्मान्न तां समभिवीक्ष्य ददासि धैर्यम्॥

(३)

राहोरहो वदनकन्दरमुद्रितेऽस्मिन्
भानौ बभूव भयविह्वलितं जगद्यत्।
तद्‌व्यस्तमापतितमेवमतीव चित्रम्
सूर्यग्रहेण यदभूद्‌द्विजराजहानिः॥

(४)

नागाष्टनन्दविधुसम्मितवैक्रमेऽब्दे
कृष्णे नभस्यथ कुजे च कुमारतिथ्याम्।
प्रादुर्बभूव वत काशिपकालबार-
श्चास्मत्प्रभुर्दिनकरोऽस्तमितो यदस्मिन्॥

महामहोपाध्याय—
पं० श्रीअयोध्यानाथशर्म्मात्मजस्य—
रघुनाथशर्म्मणो ज्यौतिषाचार्य्यस्य।

प्रकृतमेव विषयं संस्कारज्ञाननिमित्तं पुनः प्रस्तौति—

**रागद्वेषसम्बद्धाऽभिनिवेशः ॥ १५७ ॥**

अस्वाभाविको हि संस्कारो रागसम्बन्धाभिनिवेशतो द्वेष-सम्बन्धाभिनिवेशतो वा जीवपिण्डे समुदेति । प्रथमतो हि तस्य द्वे श्रेणी भवतः ॥ १५७ ॥

तत्र प्रथमश्रेणिभेदं ब्रूते—

**तनुरुदारश्च रागः ॥ १५८ ॥**

रागसम्बन्धतो हि सम्पद्यमानः संस्कारोऽतिसूक्ष्मशक्तिसम्पन्नो भवति अथवोदारो भूत्वा प्रबलशक्तिसम्पन्नो वा भवति ॥ १५८ ॥

सम्प्रति द्वितीय-श्रेणिभेदन्निरूपयति—

**स्मरणास्मरणयोगो द्वेषः ॥ १५९ ॥**

द्वेषाभिनिवेशतो जायमानो हि संस्कारो द्विधा सुस्मृतियुग् विस्मृतियुक् च भवति । तत्र प्रथमस्य संस्कारस्य स्मृतिस्तिष्ठति । द्वितीयस्य तु विस्मरणमेव भवति ॥ १५९ ॥

इदानीं विस्मृतियुक्तस्य संस्कारस्य वैशिष्ट्यं ब्रूते—

**प्ररोहबाधो विस्मृतौ ॥ १६० ॥**

पूर्वोक्तौ द्वौ रागजौ संस्कारौ, स्मृतियुक्तश्च द्वेषजोऽपरः, इमे त्रयोऽपि नियमतोऽङ्कुरं जनयन्ति । किन्तु विस्मृतियुक्तः संस्कारोऽङ्कुरोत्पत्तौ बाधक एव भवति ॥ १६० ॥

अधुना कर्मविपाकज्ञानं सङ्केतयति—

**विचारानुगमतः कर्मविपाकदर्शनम् ॥ १६१ ॥**

योगदर्शने सविकल्पकसमाधेश्चत्वारो भेदा उदीरिताः । वितर्कानुगतश्चैको विचारानुगतश्च द्वितीयः, आनन्दानुगतस्तृतीयः, अस्मितानुगतश्चतुर्थ इति । एषु चतुर्ष्वपि विचारानुगतसमाधिसाहाय्येन योगिनः सत्यभिलाषे कर्मविपाकरहस्यानुसन्धानं कर्तुमर्हन्ति । पूर्वोक्तविज्ञानमनुस्मरन्तः समाधिभूमावुपेत्य विचारानुगतसमाध्याश्रयेण कार्य्यमिदं साधयितुमर्हन्ति । उन्नता एव योगिराजाः संस्कारज्ञानप्राप्तये मार्गमिममाश्रयितुं शक्नुवन्ति ॥ १६१ ॥

तत्साफल्योपायं ब्रूते—

**अन्तरायाभावे आसन्नम् ॥ १६२ ॥**

अन्तरायाणां विघ्नानामभावेऽत्यन्ताभावे सति आसन्नं शीघ्रं योगसाफल्यं भवतीत्यर्थः ।

२१

विघ्नानामभावे सति संस्कारसंयमविधाना योगी शीघ्रतयैव साफल्यमृच्छति । योगविघ्नानां वर्णनं बाहुल्येन योगदर्शने समुपलभ्यते । उपायप्रत्यय-भवप्रत्ययावस्थारहस्यपर्य्यालोचनया योगान्तरायाणामवगतिर्बहुशो जायते ॥ १६२ ॥

प्रकृतविषय-प्रसङ्गेन तद्भेदानाह—

**पञ्चधाऽन्तरायाः ॥ १६३ ॥**

योगसाधनवेलायां येऽन्तराया योगिषु तेषां योगयुक्तान्तःकरणेषु च जायन्ते । तान् पञ्चधा विभजन्ति तज्ज्ञा योगिनः ।

तथा हि—अभिनिवेशज एको रागजन्यो द्वितीयो द्वेषजन्यस्तृतीयोऽस्मिताजन्यश्चतुर्थः, स च द्विविध इत्येवं सर्वे मिलित्वा पञ्चधा भवन्ति ।

उन्नतोन्नतान्तःकरणेष्वपि महामायाप्रभावेणैषां पञ्चविधानां विघ्नानां समुद्भवसम्भावना सदैव विद्यते । परोपकारपरायणेषु महापुरुषेष्वपि जगत्कल्याणकरणाभिनिवेशः पुण्य-पापयोश्च रागद्वेषासक्तिसम्भवः स्वाभाविक एव । अतश्चाघटनघटनापटीयस्या महामायायाः प्रभावतोऽलक्षितानिश्चितरूपेण ईदृशानां विघ्नानामुत्पत्तिशङ्का तेषामत्युन्नतेषु प्रशान्तेष्वप्यन्तःकरणेषु यदा कदा विद्यत एव । योगिनामस्मिताऽवस्था यद्यपि सर्वोत्कृष्टा तथाऽपि तत्रावस्थायामपि द्विविधस्य विघ्नस्य समुत्पत्तिसम्भवः । अनयोरेव द्वयोर्योगविघ्नयोराधिदैवस्वरूपस्य सप्तशतीगीतासूपनिषत्सु मधुकैटभनाम्नो र्द्वयोरसुरयोः स्वरूपेण वर्णनं समुपलभ्यते ।

अस्यामस्मितावस्थायां यौ समाधिशत्रुभूतौ द्वौ विघ्नौ स्तः, तयोरेवाधिदैवस्वरूपौ तौ मधुकैटभनामानौ दैत्यौ ब्रह्मणः समाधिस्थेऽन्तःकरणे ब्राह्म्या हि सृष्टेः समकालमेवान्तरायं चक्रतुः । तौ च ज्ञानरूपिणो भगवतश्चिन्मयस्य विष्णोः साहाय्याद्विनाशितौ अभूताम् ।

अस्मितादशायां यदि नादावलम्बनं भवति तर्ह्येवानयोरन्तराययोः समुद्भवो जायते । तथा हि—नादे आनन्दमोहितमन्तःकरणं यत् तमोगुणाभिमुखं भवति सैव प्रथमावस्था । इतश्च जडात्मकस्य समाधेः समुद्रेकः सम्भवति । द्वितीयस्याञ्चावस्थायां नादसम्बन्धतश्च बहिर्मुखो भूत्वा योगी यदा स्वलक्ष्यच्युतो भवति तदैवास्य योगविघ्नस्योद्गमः । नादस्याश्रयेणैवानयोर्द्वयोरुद्भवः । द्वावेवेमौ तमोगुणमयौ स्तः । द्वौ चेमौ प्रबलौ समाधिविघ्नौ गण्येते । इत्थञ्च एभ्यः पञ्चविधेभ्योऽपि विघ्नेभ्योऽवसरमदत्वा संस्कारसंयमकर्तार उन्नता योगिगणाः कर्म्म-विपाकपरिणाममधिगन्तुमर्हन्ति ।

अङ्कुरोत्पत्ते र्भावजन्यां त्रिविधामपि श्रेणीं तथा वर्गजन्यां चतुर्विधां श्रेणीं तयोश्च वैचित्र्यं ध्यानविषयीकृत्य तेनैव सह समाधिवशतः संस्कारोत्पत्ते निदानञ्चोहयित्वा अपरञ्चास्वाभाविकानां संस्काराणामुत्पत्तिरहस्यञ्च सम्यज्ज्ञात्वा ततोऽपि योगविघ्नान् वञ्चयित्वा विचारात्मकस्य समाधेः साहाय्येन च स्वस्याः संयमशक्तेश्च साधु ध्रुवं स्फुटमुद्रेकेण योगिराजाः कर्मविपाकपरिणामं साधु समधिगन्तुमर्हन्तीति दुर्गमोऽयं पन्थाः सर्वयोगिनाम् ।

प्राकृतनाः सर्ववन्द्यास्त्रिकालदर्शिनो महर्षयोऽनयैव लोकातीतया योगपद्धत्या कर्मबीजस्वरूपाणां संस्काराणामवगत्या कर्म-विपाकपरिणाममवगच्छन्ति स्म । तेनैव जन्मजन्मान्तरगतान्यपि वृत्तानि स्वहस्तस्थितामलकफलवत्सर्वात्मना विदन्ति स्म । पुराणादिषु च यद्बहूनामतीतानागतानां मानवदेवासुरोद्भिदादीनां जन्मजन्मान्तररहस्यवर्णनं प्रत्यक्षवदुपलभ्यते तदित्थम्भूताया एव योगशक्तेः परिणामफलमूहनीयमिति ॥ १६३ ॥

इदानीं पिण्डनिर्णयमातनोति—

त्रिविधं पिण्डं सहजमानवदेवभेदात् ॥ १६४ ॥

सहजाश्च मानवाश्च देवाश्च तेषां भेदः, तस्मात् हेतोः पिण्डं स्थूलशरीरं त्रिविधं त्रिप्रकारकं निगद्यत इति सूत्रार्थः ।

स्थूलशरीरमेव पिण्डशब्दवाच्यं भवति । तस्य च श्रेणिविभागमुखेन तदीयविज्ञानं विस्पष्टयति महर्षिः सूत्रकारः त्रिविधमित्यादिना ।

इह स्थूलजगति यावन्त्यपि स्थूलशरीराणि भवन्ति । तानि सर्वाण्यपि प्रकारत्रयभाञ्जि एव भवन्ति । तत्र प्रथमं सहजपिण्डं द्वितीयं मानवपिण्डं तृतीयञ्च देवपिण्डमिति भेदात् । स्मृतिशास्त्रादिषु सविशेषमुक्तमिदम् । तथा हि—

सहजो मानवो दैवो जीवपिण्डस्त्रिधा मतः ।
मर्त्येभ्यश्चेतरे निम्ना भूतसङ्घाश्चतुर्विधाः ॥
यैस्तु कर्म फलं पिण्डै र्भुज्यते सहजा हि ते ।
मर्त्योपयुक्तपिण्डा हि कथ्यन्ते मानवाभिधाः ॥
दैवपिण्डाश्च ये व्याप्ता भुवनानि चतुर्दश ।
वर्तन्ते पितरो दैवभोगायतनरूपिणः ।
त्रिविधा एव नन्वेते वर्तन्ते पाञ्चभौतिकाः ।
उपादानेषु किन्त्वेषां प्रभेदो वर्तते महान् ॥ इति ॥

मातृरूपायाः प्रकृतेर्वशवर्तिनो नियमत उन्नतशीलस्य चतुर्विधस्याऽपि भूत-

सङ्घस्य पिण्डः सहजपिण्डो निगद्यते। गतागतचक्रस्य प्रधानकारणरूपं मानवानां स्थूलशरीरं हि मानवपिण्डमुच्यते। इत्थञ्च चतुर्दशानां सूक्ष्मलोकानां जीवानां दैव्या शक्त्या विशिष्टानि यानि स्थूलशरीराणि तान्येव देवपिण्डं निरुच्यते। तत्र देवपिण्डधारिणो जीवा न मातृगर्भतः प्रादुर्भवन्ति तेषु विविधं वैचित्र्यं भवति। तथा ते दैवशक्तिशालिनो भवन्तीत्यत एव दैवपिण्डशब्दभाजो भवन्ति। यथा च महाभारते वनपर्वणि अभिहितमिति—

कर्मजान्येव मौद्गल्य ! न मातृपितृजान्युत।
न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव वा॥
तेषां न च रजो वस्त्रं बाधते तत्र वै मुने।
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः॥
संयुज्यन्ते विमानैश्च ब्रह्मन् ! एवं विधैश्च ते॥ १६४॥

स्वाभाविकसंस्काराधीनं पिण्डं निरूपयति—

**तत्राद्यमायत्तं स्वाभाविकस्य॥ १६५॥**

तत्र पिण्डनिरूपणप्रस्तावे आद्यं सहजपिण्डं स्वाभाविकस्य संस्कारस्य आयत्तम् अधीनम् भवतीति सूत्रार्थः।

प्रकृतिदेव्याः स्वाभाविकेन स्पन्दनेन यथा स्वाभाविकस्य संस्कारस्य सहजस्य च कर्मणः सम्बन्धस्तथैव तेन सह सहजपिण्डस्यापि सम्बन्धः। प्रकृतिर्हि त्रिगुणात्मिकतया स्वभावत एव स्पन्दनवती। तस्याः सकाशाज्जायमानस्य स्वाभाविकस्य संस्कारस्योद्गमप्रकारस्तु साधु पूर्वं निरूपितः। तस्यैव स्वाभाविकस्य संस्कारस्य वेगतो जीवः क्रमाभिव्यक्तिनियमानुकूलं चतुर्विधानां भूतसङ्घानां चतुरशीतिलक्षसंख्यकेषु पिण्डेषु स्वत एव प्रविशन् ततश्चोद्गच्छन् पुरः संवर्द्धते। इमानि सहजपिण्डात्मकानि उन्नतिसोपानानि जीवानां क्रमोन्नतिमार्गे स्वत एवोपलभ्यन्ते॥ १६५॥

प्रसङ्गतः शङ्कासमाधानमभिधत्ते—

**तत्रेतरेऽपि भोगाय॥ १६६॥**

तत्र सहजपिण्डे इतरे अन्ये मानवदेवपिण्डगा जीवा अपि सम्भवतो भोगाय जनुरासादयन्तीति सूत्रार्थः।

ननु सहजपिण्डगा जीवाः स्वत एव प्रकृतिस्वाभाविकतरङ्गप्रभावपतिताः सहजपिण्डमाश्रित्योद्भवन्ति पुनश्च मृत्युमुपेताः यथोर्ध्वमुपसर्पन्ति, इति नियमे जागरूके, शास्त्रादिषु समुपलभ्यमानस्य पिण्डान्तरगानां जीवानां सहजपिण्डप्र-

वेशप्रमाणस्य का गतिःस्यात्? श्रुतावप्येवम्भूतानां पिण्डान्तरगतानां जीवानां सहजपिण्डप्रवेशो दृश्यते यथा—

"य इह कपूयचरणाः अभ्यासो ह तद्ये कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा" इति ।

यमलार्जुनौ देवपिण्डजावपि जीवौ व्रजे वृक्षयोनिमुपेतावास्तामिति सर्वजनविदितो वृत्तान्तः । राजा नहुषो देवपिण्डधारी भूत्वाऽपि सर्पो बभूव इत्येतादृशीनां शङ्कानां किं दार्शनिकं समाधानम्? इति प्रश्ने समुत्तरयति—

जीवो यदा पञ्चकोशपूर्णतामासादयति तदा स पूर्णशक्तिसम्पन्नो भूत्वा स्वच्छन्दगति र्भवति । इत्थञ्च यथा स स्वीयतीव्रास्वाभाविकशुभसंस्कारबलेन उन्नतोन्नतान् लोकानासादयति तथैव स स्वकीयतीव्रास्वाभाविकाशुभसंस्कारवशात् नरकलोके प्रेतलोकेऽपि गन्तुमर्हति । विशेषतो दण्डभोगाय च सहजपिण्डे समागत्य अशुभसंस्कारभोगसमाप्तिं कर्तुमर्हति । परन्तु भोगोऽयं नैमित्तिको निगद्यते । यतो हि तस्याशुभभोगस्यावसितौ स जीवः पुनस्तत्रैव मानवपिण्डे देवपिण्डे वा समुपैति, यतः स तत्र समागत आसीदिति । अत्र सूत्रे 'अपि' शब्दो दण्डस्यासाधारण्यं द्योतयति। यदीदृशी घटना उग्रदण्डनिमित्तिका क्वचिदेव भवतीति ॥ १६६ ॥

सम्प्रति अस्वाभाविक-संस्काराधीनं पिण्डं निदर्शयति—

**अस्वाभाविकतन्त्रे द्वितीयतृतीये ॥ १६७ ॥**

द्वितीयश्च तृतीयञ्च ते, अस्वाभाविकस्य संस्कारस्य तन्त्रे आधीने इत्यर्थः। द्वितीयतृतीयपिण्डे मानवदेवरूपे अस्वाभाविकसंस्काराधीने इतियावत् ।

यदा जीवोऽन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयकोशपरिपूर्णो गतागतचक्रे परिभ्रमति, अथवा देवश्रेणिमुपेत पैशकर्माधीनो दैवीं क्रमोन्नतिमासादयति, तदा हि सोऽनयोर्द्वयोरप्यवस्थयोरस्वाभाविकसंस्कारजन्यमेव पिण्डं प्राप्नोति । यतो हि स उभयत्रापि उन्नतावनताधिकारमासादयति । उभयत्रैवास्वाभाविकस्य भोगस्य निष्पत्तिर्भवति उभयत्रैव स स्वाधीनस्तिष्ठति । इत्थञ्च अनयोर्द्वयोरप्यवस्थयोः पिण्डं परिग्रहीता जीवोऽस्वाभाविकसंस्कारबलेनैव-स्वपिण्डं परिगृह्णातीति विवेकः ॥ १६७ ॥

प्रसङ्गतो जन्मान्तरनिमित्तं निर्वक्ति—

**संस्कारप्राबल्यं जन्मान्तरनिमित्तम् ॥ १६८ ॥**

अन्यज्जन्म जन्मान्तरम् तस्य निमित्तम् कारणम् संस्कारस्य प्राबल्यम्

प्रबलतैव भवतीति सूत्रार्थः, मनुष्यसम्बद्धा अस्वाभाविकाः संस्काराः सञ्चित-क्रियमाण-प्रारब्धभेदेन त्रिधा विभक्ता उपलभ्यन्ते । यथोक्तं शम्भुगीतायाम्—

प्रारब्धं सञ्चितं कल्याः ! आगामीति प्रभेदतः ।
प्रोच्यते त्रिविधं कर्म कर्मतत्त्वविशारदैः ॥

अनन्तजन्मजन्मान्तरभवानां कर्मराशीनां संस्कारसमूहाः कर्म्माशये सञ्चिताः सङ्घीभूताः तिष्ठन्तः 'सञ्चित–' शब्दवाच्या भवन्ति । वर्तमानजन्मनि नवीनाः संगृह्यमाणाः संस्कारराशयः क्रियमाणपदाभिधेयाः । मानवानाम् एकस्य जन्मनोऽवसाने द्वितीयस्य च प्रारम्भे ये प्रबलाः संस्काराः फलोन्मुखीभूता नवीन-जन्मनो हेतुतां व्रजन्ति त एव प्रारब्धशब्देनोच्यन्ते । तत्र सञ्चितेष्वेव कर्मराशिषु य एकजातीयाः संस्काराः प्रबला भवन्ति । त एव नूतनं जन्मोत्पादयन्तीति विभावनीयम् । यथा हि सप्तस्वपि धातुषु समुदितेषु अयस्कान्तमणिं निक्षिप्येत चेत्तत्र समुदाये सर्वानपि धातून् विहाय सोऽयस्कान्तमणिः केवलमयोधातु-मेवात्मसात् करोति, तथैव समानश्रेणिगाः प्रबलाः संस्कारसमूहाः सङ्घीभूय जीवेन सार्धं सम्मिल्य नूतनं देहं निर्म्मान्ति । यथोक्तं महाभारते—

बालो वा यदि वा वृद्धो यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत् फलं प्रतिपद्यते ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ इति १६८ ॥

अधुना प्रकृतविषये शङ्कासमाधाने ब्रूते—

**तत्प्रामाण्यं संस्कार-वैचित्र्यात् ॥१६९ ॥**

जन्मान्तरसत्तां सन्दिहाने जिज्ञासौ तत्समाधानार्थं संस्कारविचित्रतां हेतुत्वेनोपन्यस्यति । संस्काराणां वैचित्र्यात् वैलक्षण्यात् तस्य जन्मान्तरस्य प्रमाणानां भावः प्रमाण्यम् यथार्थोऽनुभवो विधातव्य इति भावः ।

जन्मान्तरस्य सत्तायां प्रत्यक्षं प्रमाणमिदमवगमनीयम् यत् प्रतिमनुष्यं संस्काराणां वैचित्र्यम् पृथगेवासाद्यते । तत्र विना किञ्चित् प्राक्तनं कारणं कथ-मिदं सम्भवतीति अकामेनाऽपि भवता स्वीकरणीयमेव । इत्थञ्च प्राक्तने कारणे सिद्धे तदेव कारणं कर्मणो बीजभूतः संस्कारो ज्ञेयः ॥ १६९ ॥

तदेव विज्ञानं पुन र्विस्पष्टयति—

**क्रियावैचित्र्यादेतज् ज्ञेयम् ॥ १७० ॥**

ननु संस्कारवैचित्र्ये एव किं प्रमाणमित्याशङ्कायां सूत्रकृन्महर्षिः

समुत्तरयति। क्रियाणां वैचित्र्याद् वैलक्षण्याद् एतत् संस्कारवैचित्र्यं ज्ञेयम् भगवन्तव्यमिति सूत्रार्थः। प्रतिमानवं क्रियाणां पार्थक्यं प्रत्यक्षत एवासाद्यते, अतश्च प्रतिमानवं वैचित्र्यपूर्णानां कर्मबीजरूपाणां संस्काराणामपि पार्थक्यं सिद्ध्यत्येव।

इह संसारे कश्चिद्राजा, कश्चित् प्रजावर्गः। कोऽपि पूर्णाङ्गः, कोऽपि विकलाङ्गः। कश्चिद् धनी, अपरोऽकिञ्चनः। कश्चन सुन्दर; इतरः कुत्सितः। कोऽपि नीरोगः, कोऽपि चिररोगी। कश्चिद् अल्पायुः, कोऽपि दीर्घायुः। कोऽपि बुद्धिमान्, कोऽपि मन्दमतिः। कोऽपि ब्राह्मणः, कोऽपि शूद्रः। कोऽपि सुखी कोऽपि दुःखी, इत्येवं प्राक्तनसंस्काराणां फलस्वरूपा विविधाः क्रियाविचित्रता मानवेषु समुपलभ्यमानाः संस्काराणां वैचित्र्यं प्रमापयन्ति। संस्कार-वैचित्र्यसिद्धौ च जन्मान्तरसिद्धिः स्वत एवोदेति। अतश्च पूर्वोक्तशङ्कायास्तत्र अवसर एव नायाति। उक्तञ्च मानवसंहितायाम्—

यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्य्यये
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः इति ॥ १७० ॥

इदानीं संस्कारफलान्याह—

तती जातिः ॥ १७१ ॥

संस्कारात्मकस्य कारणस्य प्रथमं कार्य्यं जातिः। संस्कारात्मकबीजात् या प्रथमा क्रिया जायते सैव जातिः। आर्य्यजातिः, अनार्य्यजातिः, ब्राह्मणजातिः शूद्रजातिः। इत्यादिकं सर्वमपि प्रारब्धसंस्कारस्य प्राथमिकं फलं गीयते। यतो हि गुणत्रयपरिणामैः सह जातीनां साक्षादेव सम्बन्धः। गुणानामाधारः स्थूलशरीमेवास्ति इत्यतो मातापित्रो रजोवीर्य्यप्राधान्येनैव जातिवैशिष्ट्यमूहनीयम्। जन्मना सार्धं तस्या जातेर्घनिष्ठसम्बन्धभागित्वात् तस्याः सर्वापेक्षया वैशिष्ट्यम्।

विशेषतो भोगेनापि जाते र्महान् सम्बन्धः। यतो हि यस्या जातेः पिण्डे जीवो जन्म गृहीत्वा प्रविशति। तत्र यथायोग्यरजोवीर्य्याभ्यामीदृगधिकारस्तेना साद्यते यथा भोगानुभवे विविधं वैचित्र्यं समुत्पद्यते। तथा हि अनार्य्यजातेराचारानुभवे आर्य्यजातेराचारानुभवे च महदन्तरमहोरात्रवदुपलभ्यत एव। धार्मिकस्यैकस्य ब्राह्मणस्य धनसम्बन्धीयानुभवे तत्रैव कुसीदग्राहिणो वैश्यस्य धनसम्बन्धीयानुभवे च स्वर्गपातालवदन्तरम्भविष्यत्येव।

अन्योऽपि विशेषो विद्यते जातौ। यतो हि अभ्यासेन कर्म्मणां साधारणतया परिवर्तनं भवितुम्पार्य्यते। परन्तु जातेर्जन्मना सह साक्षात् सम्बन्धसत्वात् न तत्रेदं परिवर्तनं भवितुमर्हति।

विषयोऽयमन्यथाऽपि विवरितुं शक्यते । तथा हि—शूद्रजातिजो जीवो ब्राह्मणजातिसम्बन्धिकर्माभ्यासं कर्तुमर्हति । परन्तु पूर्वसंस्काराधीनतया विशेषजातौ समुत्पन्नतया तज्जातिगरजोवीर्य्योत्पन्नविशेषशरीरलाभेन च विशेषगुणाधिकारिणि तस्मिन् कथमपि जातिपरिवर्तनं नैव भवितुमर्हति । जातेस्तु जन्मना सह विशेष-सम्बन्धभागित्वात् सा तु सैव स्थास्यति या जन्मतः समुत्पन्ना विद्यते ।

जन्मना सह जातेरकाट्य-सम्बन्धोऽस्तीत्यस्येदं वैज्ञानिकं रहस्यं यद् एकजातीयं कर्मान्यजातौ कदाचिदागच्छेदपि, परन्तु तत्र गुणपरिवर्तनं नैव सम्भवति । यतो हि सत्वरजस्तमांसि त्रीण्यपि तत्त्वानि रजोवीर्य्याभ्यामेवाकृष्यन्ते इति ॥ १७१ ॥

द्वितीयं फलमभिधत्ते—

**आयुः ॥ १७२ ॥**

प्रारब्धस्य संस्कारस्य द्वितीयं फलमायु विद्यते । वस्तुतः कर्मपरिपाकं भोक्तुमेव जीवा जनुर्गृह्णन्ति । तस्य नियतस्य फलस्य भुक्त्यै देशकालौ अपेक्ष्येते । तत्र पूर्वसूत्रोक्ता जातिरेव देशशब्दान्तर्गता ज्ञेया । योगशास्त्रेऽपि स्थूलशरीरमेव देशरूपेणोक्तम्—तथा हि—

प्रकृतेर्मण्डलं यत्तद् ब्रह्माण्डं तत्समष्टितः ।
तदेव पिण्डरूपेण प्रोच्यते व्यष्टिनामतः ॥

आयुश्चैव कालरूपेण प्रोच्यते । यतो हि विना कालनियमनं भोगनियमसिद्धिरेव न सम्भवति । उदाहरणतो यथा-एकस्य मनुष्यस्यायुरशीतिवर्षात्मकं यदि नियम्येत, तदैव तदीयभोगपरिणामो बाल्य-यौवन-जराप्रभृतीनामन्तर्भावानां नियमितत्वं च सम्भाव्यते । अतश्चेदमवश्यमेवावधारणीयम् यत् प्रारब्धपरिपाकात्मन आयुषोऽपि प्राधान्यम् ॥ १७२ ॥

तृतीयं वक्ति—

**भोगश्च ॥ १७३ ॥**

भोगनिमित्तमादायैव जीवो जन्मान्तरं गृह्णातीत्यभिहितंप्राक् । एकविधस्य भोगस्य परिसमाप्तौ जीवो जीर्णवस्त्रत्यागानन्तरं नवीनपटपरिधानवत् एकं पिण्डं परित्यज्य पिण्डान्तरमाश्रयति । उक्तञ्च गीतोपनिषदि—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥इति॥

आसां सिद्धीनां प्राप्तौ यानि साधनानि अनुष्ठीयन्ते तानि योगमूलकानि तपोमूलकानि वा भवन्ति । तत्र साधनवेलायाञ्च क्षमामौनसंयमानामालम्बनं सर्वथाऽवश्यकम् । एषां त्रयाणां मध्ये समस्तं व्यस्तं वा विनष्टं स्याच्चेत्तदोक्तयो र्योगतपसोरवश्यं विनाश ऊहनीयः ।

आसां तिसृणां विद्यानाञ्च माहात्म्यमीदृगुन्नतं विद्यते यद् उन्नतोन्नता अपि देवा एकाधारे एकदैव ताः सर्वा अप्यधिगन्तुं नार्हन्ति ।

उदाहरणतो यथा—आध्यात्मिक्यः शक्तयो महत्सु ऋषिषु समुपलभ्यन्ते, परन्तु ता एव सर्वेष्वपि भगवदवतारेषु नासाद्यन्ते । इत्थमेव या नानाविधा आधिदैव्यः सिद्धयो भगवदवतारेषूपलभ्यन्ते ता एव न ऋषिषु समासाद्यन्ते । अतश्चासां सर्वासामपि एकाधारे प्रकाशोऽसम्भव एव प्रतिभाति । अस्मादेव हेतोर्महर्षेर्विश्वामित्रस्यापि आसां तिसृणां प्राप्तौ विघ्नाः सञ्जाता इति विभावनीयम् ।

तथापि विश्वामित्रस्य महर्षेः तपसोऽसाधारण्यं सर्वजगत्प्रसिद्धमेव । यतो हि स महात्मा एकस्मिन्नेव जन्मनि क्षत्रियशरीरं परिवर्त्य ब्राह्मणशरीरमधिगतवानभूत् । इत्यत एव यदि तस्यासाधारणतपस्विनो वशे इमाः तिस्रोऽपि सिद्धयः स्युस्तर्हि जगदधिष्ठात्र्या जगदम्बाया आज्ञाविरुद्धमसम्भवत्कार्य्यमपि सम्भवत् स्यादिति विचारणयैव विश्वामित्रासाधारण-तपःप्रभावपरवशाः तेन बलादाकृष्यमाणाः तद्भयत्रस्ताः तत्त्रिविधसिद्ध्यधिष्ठातृदेवता दुःखिता आसन् इति ।

विश्वामित्रस्य चेतसि क्रोधाहङ्कारयोः समुदयवेलायामेव तथा तस्य मौनव्रतभङ्गसमकालमेव तदीया प्रबलाऽपि तपःशक्तिः क्षीणा सञ्जाता । यया च प्रबलया तपःशक्त्या सुदृढया च योगशक्त्या तास्तिस्रो महाविद्याः समाकृष्यमाणा आसन्, सा शक्तिश्छिन्नभिन्ना अभवत् । ततश्च तासां त्रिविधानां स्वतन्त्रतयाऽन्तरायोपलब्ध्या पलायनावसरोपस्थितिरजनीति ताः पलाय्य स्वाधिष्ठानमाश्रिताः । इत्थञ्च हठात् सिद्धिसंसाधने साधकानामन्तरायबाहुल्यमेवं स्वाभाविकमेव । अतश्च स्वयमुपस्थिताः सिद्धय एव योगिभिस्तदुपादानैर्षिभिरुपादेयाः, न तु तासां कृते बलप्रयोगो विधेय इति शास्त्रेषु हठाद्बलप्रयोगेण सिद्धिसाधनं विगर्हितम् ।

## हरिश्चन्द्र-विश्वामित्रोपाख्यानप्रसङ्गतः प्राचीनराजर्षीणां चरित्ररहस्यम्—

प्राचीन-कालोद्भवाः क्षत्रिया राजानः कीदृशा धर्मपरायणा उदारास्तेजस्विनो दृढप्रतिज्ञाः सत्यसन्धा दानशीला लोभ-रहिता ब्राह्मणभक्ताः स्ववाक्यपा-

लनाय सर्वस्वत्यागिनो भवन्ति स्म इति सूचयति सर्वान् विश्वामित्राय हरिश्चन्द्रस्य सर्वस्वदानरहस्यम् ।

मानवशरीरोपलब्धौ सत्यां मृत्योरनन्तरं सर्वदिक्ष्वपि स्वैरगतिर्भवितु मर्हति मानव इति सर्वतन्त्रसिद्धान्तः । स हि स्वकर्मवासनया प्रेतलोकं नरकलोकं पितृलोकं ततोऽप्युन्नतोन्नतं देवलोकं ब्रह्मलोकं गोलोकमाहोस्विदसुरलोकमध्यास्तुमर्हति ।

इत्थञ्च स्वकर्मणां क्षणकदण्डभुक्त्यै उद्भिज्जस्वेदजाण्डजजरायुजानां योनीनां सहजपिण्डेषु कियतः कालस्य कृते पात्यमानो भवितुमर्हति मानवः । तथा देवा अपि कियतः समयस्य कृते दण्डभोगायेह मृत्युलोकरूपे मनुष्यलोके पात्यन्ते । तदानीं तेषां देवपिण्डपातस्तावत्-कालाय जायते यावत्ते मानवपिण्डाश्रयेण तिष्ठन्ति । त्रिधा खलु पिण्डानि भवन्ति । तत्र तिर्य्यग्योनिगानां सहजपिण्डानि कथ्यन्ते, मनुष्याणां मानवपिण्डानि निगद्यन्ते, विविधश्रेणिगानां देवानान्तु देवपिण्डानीति समाम्नायते । विश्वेदेवाः कियते कालाय मनुष्यपिण्डाश्रिता अभूवन्निति पुराणप्रसिद्धम् ॥ ६४-६६ ॥

## वाराणस्या आध्यात्माधिदैवाधिभौतरूपभावत्रयरहस्यम् ।

वेदवत् पुराणशास्त्रेषु यत्र नामरूपयोर्वर्णनं विद्यते तत्सर्वमपि भावत्रयपरिपूर्णं विद्यत इति विभावनीयम् । इति सिद्धान्तानुसारं परकीयभाषाविशिष्टायामस्यां कथायां वाराणसीशब्दोऽपि त्रिभावात्मक एवोहनीयः । यदा दिव्या मनुष्योपभोगातीता वाराणसी भगवता शिवेन प्रतिष्ठापिता निगद्यते, तदा वाराणस्याः स्वरूपं कथं त्रिभावात्मकमिति शङ्कायामस्ति विमर्शावसरः ।

मनुष्यपिण्डेषु इडापिङ्गलानाम्नोरुभयोर्दिव्यनाड्योः सङ्गमस्थले सुषुम्नानाम्न्या दिव्यनाड्यास्तटे वाराणसीपीठं विद्यते । यच्च ज्ञानप्रदात्रा भगवता शिवेन विनिर्मिता सकलेन्द्रियसम्बन्धविरहिताऽपि निगद्यते । केवलं योगिन एवास्या आध्यात्मिक्याः काशीपुर्य्या दर्शनं सेवनञ्च विधाय स्वस्वरूपोपलब्धिं कुर्वन्ति । इयमेव नित्यकाशीति कथ्यते । एतदेव वाराणस्या अध्यात्मस्वरूपरहस्यम् । वाराणस्याञ्च सर्वेषामेव देवानां पीठस्थानं विद्यते । इह भारते वर्षे एतादृङ् नान्यत् किमपि तीर्थस्थानं विद्यते, यत्र सर्वेषां देवानां सर्वेषाञ्च तीर्थानां प्रतिकृतिस्वरूपतः स्वतन्त्रा स्वतन्त्रा सत्ता देदीप्यमाना तिष्ठेदिति ।

अत्र वाराणस्यां भगवतो भूतनाथस्य विश्वनाथस्य कृपया यदा धरातलस्थानां सर्वश्रेणीगानामपि तीर्थानां देवपीठानाञ्चाधिदैवकेन्द्रं प्रतिष्ठितं विद्यते

तदा वाराणस्याश्चिदाकाशः सर्वविधानामपि पीठाभिमानिदेवानां साक्षात् सम्बन्धविशिष्ट इति निर्विवादसिद्धम् । इत्यत एव वाराणस्या दिव्यपुरीत्वे इन्द्रियासक्तिजनितभोगानुपयुक्ततायाञ्च नास्ति सन्देहलेशः । एतद्धि वाराणस्या आधिदैवस्वरूपम् ।

वाराणस्याः तृतीयस्वरूपपर्य्यालोचनवेलायां वेदपुराणादिसर्वशास्त्रेभ्यो लौकिकेतिहासेभ्यश्च सर्वथेदं प्रमाणितं भवति, यद् वाराणसी हि सर्वदा सर्वतः विद्यापीठं सर्वप्रधानं धर्म्मपीठं मुक्तिपुरी च निगद्यते इति गुणातीतभूमिरियं सर्वैः सम्मता । इत्यत एव शास्त्रादिषु समुल्लेखोऽयमुपलभ्यते यद् वाराणसी भगवतः शिवस्य त्रिगुणात्मकस्य त्रिशूलस्योपरि प्रतिष्ठिता विद्यते । यतश्च प्राक्तने काले सर्वथापि नगरीयं राजकीयाक्रमणस्यापि अगोचरा स्वतन्त्रैवासीत् । अतश्च काश्याः सर्वतन्त्रस्वातन्त्र्यतः स्थितिरेवाधिभौतिकस्वरूपपरिचायिका । काश्या इदं सर्वमपि महत्त्वमधुनापि विचारशीला महापुरुषा अनुभवितुं शक्नुवन्ति इति । १—४ ॥

## विश्वामित्रहरिश्चन्द्रोपाख्यान-रहस्य—वर्णनप्रसङ्गतः ब्रह्मक्षत्रयोः परस्परोपकार्य्योपकारकभावप्रख्यापनम् ।

हरिश्चन्द्रोपाख्यानपर्य्यालोचनया साधारणतो महर्षेर्विश्वामित्रस्य कठोरत्वं महाराजाधिराजस्य हरिश्चन्द्रस्य च दौर्बल्यमेव प्रकाशते । अतश्चायं विषयः त्रिविधात्मकभाषानुसारेण धर्म्माधर्म्मरहस्यानुसारेण च विमर्शनीय इति ।

वेदपुराणादिषु च ये समाधिगम्यानां स्वानुभवानां द्योतकाः सन्दर्भराशयो विद्यन्ते ते सर्वेऽपि समाधिभाषानिबद्धा ज्ञेयाः । ये च वाक्यसङ्घास्तेषां दृढतायै लौकिकरूपद्धत्या रूप्यरूपकभावमाश्रित्य विवृताः सन्ति, ते हि लौकिकभाषामया उच्यन्ते । या चाख्यायिका धर्माधर्मयोरथवा तदीयस्य कस्यचनापि अङ्गस्य निर्णयार्थमुपनिबध्यते सा हि परकीयभाषावती कथ्यते । इत्थञ्च पूर्वमेव विवृतं मनाक् ।

इयञ्च महाराजस्य हरिश्चन्द्रस्याख्यायिका परकीयभाषानिबद्धैव विद्या । क्षत्रियधर्म्मस्य पूर्णस्वरूपमङ्कयित्वा जगति तस्य प्रकाशनमेवास्या गाथायाः सदुद्देशः । तत्र शूद्रधर्मः कामप्रधानो वैश्यधर्मश्चार्थप्रधानः, क्षत्रियधर्मो हि धर्मप्रधानः, ब्राह्मणधर्मो मोक्षप्रधान इति कथितमेवास्ति । इत्यतश्च विश्वामित्रो महर्षि र्बाह्यस्थूलरूपेणातिकठोराचारत्वेनापि हरिश्चन्द्रस्य महाराजस्य

परमोपकारी कृतज्ञ एवासीत्। एतस्मादेव हेतोः स हरिश्चन्द्रं राजानं धर्मस्य परां काष्ठां प्रापयितुं व्रतमिदं कठोरतरमङ्गीकृत्य नृपतिं तद्धर्म्मभार्य्यां तदात्मजञ्च राजकुमारं त्रीनपि महतीं दुर्दशां प्रापितवान्। विश्वामित्रो हि महर्षिः सिद्धिलोभग्रस्तः पतनोन्मुख एवासीदत एव स तिसृणां महाविद्यानां साधनपरायणो बभूव। महाराजश्च हरिश्चन्द्रस्तं महर्षिं विश्वामित्रं सिद्धिप्राप्त्या तत्सङ्गाभिनिवेशात्मकयोगमार्गान्तरायाद् गोपयित्वा तस्य मुक्तिमार्गं विशदं चकारेति सर्वात्मना स्वीकर्तव्यमेव। विश्वामित्रोऽपि महर्षिःश्रीमतो महाराजाधिराजस्य हरिश्चन्द्रस्यामुना साहाय्येन सन्तुष्टः प्रत्युपकारधिया प्रेरितः श्रीमन्तं महाराजं हरिश्चन्द्रमपि स्वधर्म्मपालनस्य चरमां काष्ठामारोप्य कृतकृत्यं विधातुमेवेदृशीमद्भुतामसाधारणीमलौकिकीं घटनां घटयामास।

## श्रीमतो महाराजहरिश्चन्द्रस्य चरित्ररहस्यपर्य्यालोचनया भारतीय-क्षत्रिय-नृपाणां स्वधर्म-प्रतिपालने दृढप्रतिज्ञत्वप्रख्यापनम्।

अन्यतश्च महाराजो हरिश्चन्द्रोऽपि भारतीयः सम्राट् क्षत्रियधर्म्मतोऽणुमात्रमपि न चस्खाल, सर्वत्रैव गहनधर्म्मसन्धौ स्वधर्म्मलक्ष्यमक्षुण्णंविदधदीदृश्यामपि दुर्गतौ स्वक्षत्रियधर्मपथाद्रेखामात्रमपि न व्यतीयाय। प्रायः कामार्थधर्म्ममोक्षेषु चतुर्वर्गेषु कामार्थावेव सामान्यजीवानां पातित्यहेतू भवतः। यतश्च कामार्थपरवशा जीवाः स्वकामनापूर्त्यै स्वार्थार्जनलिप्सासम्पादनाय च गर्हितादृगर्हिततरमपि जघन्यं कुकृत्यं कर्तुं नावशेषयन्ति। इत्यस्य शतश उदाहरणं प्रतिक्षणमस्मिन्मृत्युलोके दृष्टिपथमायात्येव। परन्तु तत्रैव स्वधर्म्म-प्रतिपालनाय महापुरुषाः सर्वस्वत्यागपूर्विकां घोरतरां दुर्गतिं सोढुं कीदृग् बद्धपरिकरा भवन्तीत्येतदपि महाराजस्य हरिश्चन्द्रस्य जीवनचरिते प्रत्यक्षमेवासाद्यते।

कामार्थजन्या तृप्तिस्तु इन्द्रियाधीनेति मोहान्धानाम् इन्द्रियलोलुपानां सामान्यजनानां कृते तत्पक्षपातित्यम् आधिक्येन च तदासक्त्या तद्गर्तपातः स्वभावसिद्धो धर्मः। धर्म्मसंग्रहे तु प्रत्यक्षतो धर्मप्रसादातिरिक्तमन्यन्न किमपि जीवानां पुरत आकर्षणं भवति, प्रत्युत क्लेशाधिक्यमेव तैर्भोक्तुं बद्धपरिकरैः सदा भूयते। इत्येवं कष्टतरसाध्ये धर्म्मसंग्रहे तत्परीक्षापराकाष्ठायामुपस्थानं राज्ञान्तु कथैव का योगिराजानामपि दुर्लभतरं भवति। अन्यच्च त्रिविद्याभ्योऽभयं दत्वा तपस्विनो ब्राह्मणस्य कोपपात्रताभवनं तज्जन्यकष्टपरम्परायाः शिरसा वहनं राजधर्म्मान्तर्गताभयदानस्य चरमदृष्टान्तत्वेनावसेयम्।

धनैश्वर्य्यसंग्रहश्च भोगार्थमकृत्वा दानार्थमेव तत्संग्रहकरणं राज्ञां प्रधानं

कर्तव्यम् । तच्च राज्ञा हरिश्चन्द्रेण विश्वामित्रस्य दानग्रहणेच्छाप्रकाशे तदिच्छानुकूलद्रव्यदानस्वीकृत्या राज्ञः क्षत्रियस्य स्वभावसिद्धं धर्मं प्रतिपालयता प्रत्यक्षत एव प्रकटितम्, तदुपरि च स्वीयं सर्वस्वं दानरूपेण दत्वा दानवीरस्यादर्शः स्फुटमेव निदर्शितः । साम्राज्यस्य सकलैश्वर्य्यस्य च त्यागं महर्षिकृते कृत्वा स दानशीलताया उदारतायाश्च पराकाष्ठां परिदर्शितवान् ।

अन्ततश्च स्वात्मानं महाराज्ञीं राजकुमारञ्च विक्रीय सत्यधर्मपालनस्य परां काष्ठां स्वीयपुण्यचरिते उपस्थापितवान् । क्षत्रियनरपतीनां धर्मस्य कृते कीदृक् स्वसर्वस्वसमर्पणं समुचितमिति तस्यान्तिमचरिते समुद्घोषितं दृश्यते । यत्र धर्मस्य पूर्णता विद्यते तत्रावश्यं दैवी पूर्णा सहायता समुपसर्पति इति निश्चितम् । यतो हि असुरा अधर्मपरिपोषका देवाश्च स्वभावत एव धर्मसहायका इति विज्ञेयम् । सात्त्विकसुखप्राप्तौ च प्रथमं दुःखानुभूतिः पश्चाच्च सुखानुभव इति प्राकृतिकः पन्थाः । उक्तञ्च गीतोपनिषदि–

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं ज्ञेयमात्मबुद्धिप्रसादजम् ।

इत्थञ्च श्रीमतो महाराजस्य हरिश्चन्द्रस्य पुण्यमये जीवने नानाविधानामसाधारणानां दुःखानां समुद्गमेऽपि अवसाने त्वलौकिकस्यासाधारणस्य तद्दुःखपरिणामरूपस्याभ्युदयस्याप्युद्गमोऽभूदिति लोकत्रयविदितो वृत्तान्तः । अपरञ्चेदृशस्यालौकिकस्य दानयज्ञस्य तपोयज्ञस्य च फलोपलब्धिरपि तादृशी एवालौकिकी लोकत्रयासाधारणी स्वर्गारोहणरूपतः परिणममाना भुवनत्रयविदिता प्रसिद्धैव ॥ ११८–१२० ॥

## श्री-हरिश्चन्द्रस्य महाराजस्य स्वप्नरहस्यम् ।

यद्यपि स्वप्नानां बहवो भेदाः सन्ति सात्त्विकाश्च स्वप्ना भविष्यत्घटनाद्योतका अपि भवन्ति, एवञ्च पारलौकिकभोगस्वरूपा अपि स्वप्नाः कदाचन दृष्टिगोचरीक्रियन्ते, स्वप्नविज्ञानमपि अलौकिकरहस्यपरिपूर्णं विद्यते । तथापि अत्र परकीयभाषात्मिकायामस्यां गाथायां महाराजाधिराजस्य हरिश्चन्द्रस्य परमधार्मिकस्य धार्मिक्या धृतेः पराकाष्ठा निरूपिता दृश्यते । स हि धार्मिकीं सात्त्विकधृतिं स्वप्नेऽपि न त्यक्तवान् । तादृशे निरुपमेऽसह्ये क्लेशसमूहे पौनःपुन्येन भुज्यमानेऽपि तस्य स्वधर्मावनस्वरूपा सात्त्विकी धृतिर्न परिचस्खले एवं कष्टपरम्परामनुभवन्नपि स महर्षिं विश्वामित्रं दोषित्वेन न गणयामास । सत्यपथारूढः स त्यागतपस्ययोः परां काष्ठामुपेत्य स्वीयां सात्त्विकीं धृतिं गोपायन् धर्मसाधनद्वाराऽभ्युदयनिःश्रेयसयोः पूर्णमधिकारमधिशिश्रायेति ।

## महाराजहरिश्चन्द्रस्योपाख्यानस्यालौकिकत्वरहस्यम् ।

महाराजाधिराजस्य हरिश्चन्द्रस्योपाख्यानं कीदृगलौकिकाधिदैवरहस्य-परिपूर्णम् कीदृक् च धार्मिकालौकिकप्रभावविशिष्टं तितिक्षा-दमसत्यसात्त्विकधृतेश्च जाज्वल्यमान-दृष्टान्त-स्वरूपम्, तस्य राज्ञोऽलौकिकस्य चरित्रस्याऽतुलनीयया मनोहारितयाच सम्पृक्तम् । त्रिलोकीमित्रस्य विश्वामित्रस्य मनुष्यलोकहितानुसन्धानपराया मैत्र्या उदाहरणेन, तथा राजमहिष्या अपि सत्याः साध्व्यास्तद्धर्मपत्न्या एवं लोकातीतस्य त्रिलोकीपवित्रकरस्य तच्चरित्रस्य च एतदुपाख्यानं प्रत्यक्षतो दृष्टान्तीभूतमासाद्यते ।

एकस्मिन्नेवाधारे ईदृशस्य सर्वरहस्यपूर्णस्य सर्वातिगस्याश्चर्य्यकरस्य चरितचित्रणस्योपलब्धिः दृष्टान्तरूपतो वेदेभ्य आरभ्य सर्वेषु शास्त्रेषु नैवान्यत्र क्वाप्युपलभ्यते ।

अन्यतश्च सनातनधर्मणो राज्ञ आदर्शः कीदृगपेक्ष्यते प्रजावात्सल्यञ्च तदीयं कीदृक् स्यात्, स्वप्रजोपरि स्नेहदृष्टिसंस्थापनमुखेन कीदृशेन च नरपतिना कृतज्ञेन भाव्यमित्यादीनां पवित्रभावानां जागरूकमुदाहरणमस्मिन्नेव मङ्गलमये राजचरिते चित्रितमासाद्यते ।

## पुराणभाषायास्तदीयेतिवृत्तस्य च लौकिकत्वोपलब्धिरहस्यम् ।

अपरतश्चातिरहस्य-मयस्याधिदैवचरित्रस्याऽपि दिग्दर्शनमस्यां पुण्य-मय्यां गाथायां विहितं विद्यते । धर्म्माधर्मनियामको हि भगवान् यमो धर्मराजो यत्राग्रेसरो भवति तत्र तस्यानुसरणकर्त्तारो सर्वेऽपि देवाः सहायका भवन्ति । विशुद्धधर्म्माचरणतश्च देवानान्तु कथैव का, असुरगुरवोऽपि विशुद्धधर्मानुष्ठातु र्महिमानं कीर्तयन्ति । अनया परकीयया भाषया अस्यैवाध्यात्मरहस्यस्य दिग्दर्शनं विहितम् । अत्रापराण्यपि बहूनि ज्ञातव्यवस्तूनि जिज्ञासूनां कृते विद्यन्ते । तानि यथा—परकीयभाषानिबद्धा गाथा उपश्रुत्य प्रायः चिन्ताशीलाः पुरुषा विमोहिता भवन्त एतादृशी र्गाथा लौकिकेतिहासत्वेन कल्पयित्वा भ्रमत ऐतिहासिक-तत्त्वानुसन्धाने व्यापृता भवन्ति । परन्तु पुराणपाठकानां सर्वथैवेदं स्मर्त्तव्यम् यद् वेदैः पुराणैश्च सह नास्ति कोऽपि लौकिकेतिहासानां सम्बन्ध इति ।

वेदेषु पुराणेषु वा या ईदृश्यः कथा उपलभ्यन्ते, या श्च तासां परकीय-भाषारूपेण अतिमनोहारिण्यो रोचकभयानकादिवर्णनपद्धतयः समासाद्यन्ते, ताः सर्वा अपि कल्पकल्पान्तघटनावलीभित्तौ प्रतिष्ठिता भवन्ति ।

इमाः कथा अधीयानः कश्चिद्यद्येवमधिगच्छति यदिमाः सर्वा अपि कथा

एतद्युगीना एव सन्ति, आहोस्विदनयैव चतुर्युग्या सम्बन्धभागिन्यः सन्तीति तर्हि स न तत्त्ववित् । यतो हि—वेदेषु ईदृशानां विचाराणामवसर एव नोदेति । यतश्च सर्गादौ वेदमन्त्रा ऋषीणां पवित्रान्तःकरणे प्रतिफलिताः स्वस्वरूपेणैव यथायथमाविर्भवन्ति । ते हि मन्त्राः पुराणकर्तुः स्मृतिपथे भावरूपतः सविकल्पकसमाधिद्वितीयावस्थाख्येन विचारसमाधिना शब्दान्तररूपेण आविर्भवन्ति न तु यथावेदं तत्र प्रकाशन्ते । ततश्च ते पुराणप्रवर्तका महापुरुषा महात्मानः ता गाथाः स्वकाव्यप्रतिभानुसारं पुराणनियमानुकूलञ्च तत्र पुराणादिषु उपनिबध्नन्ति । इत्यतश्च सर्वतन्त्रसिद्धमिदं यद् इमाः परकीयभाषानिबद्धा गाथा लौकिकेतिहासदृष्ट्या नैवं कदापि पर्य्यालोचयितव्या इति ।

## प्रतिकल्पमवतारलीलाचरितानां पार्थक्योपलब्धिरहस्यम् ।

द्वितीयोऽयं विचारणीयो विषयः, यत् प्रतिब्रह्माण्डं समष्टिप्रारब्धसम्बन्धभाजो या आधिदैव्यो लीला इह मृत्युलोके जायन्ते, ताः सर्वा अपि प्रतिविशेषावस्थं नित्यभावेन गुम्फिता भवन्ति । उदाहरणतो यथा त्रेतायुगे जायमानोऽपि रामावतारोऽनेकस्मिन्नपि चतुर्युगीप्रवाहे भवितुमर्हति । एवमेव विविधा भगवदवतारलीला आहो देवतावतारलीला उत नित्यर्षिवृन्दावतारलीला अपि एकेनैव नाम्ना अभिधीयमानाः सृष्टेर्विभिन्नकल्पेषु चतुर्युग्यां वा सततं दृश्यमाना आयान्त्येव, अग्रेऽपि च निर्बाधं भविष्यन्ति ।

एतादृशीनां दैवीनां घटनावलीनां प्रादुर्भावे प्रतिब्रह्माण्डं समष्टिसंस्कारा एव निदानत्वेनोच्यन्ते । फलतो यादृश्यामवस्थायां मत्स्यावतारो यस्याञ्च कृष्णावतार इह जगति समुदभवत् तादृशी अवस्था यदैव घटनाचक्रतः समुपस्थिता स्यात्तदैव ताववतारौ पुनरपि प्राकाश्यमासादयेतामिति निर्णीतः पन्थाः । तत्र शरीरवैचित्र्ये व्यक्तिवैचित्र्ये अंशतो लीलावैचित्र्ये विद्यमानेऽपि तत्कृताः सर्वा अपि घटना नित्या एव गण्येरन् । इत्यत एव हेतोः पुराणान्तरेषु आसामवतारविभूतीनामन्यासामपि कथाघटनानां स्मृतयो विभिन्ना दृश्यन्ते । इत्थञ्च कल्पभेदेन घटनाचक्रभेदतो गाथानां वर्णनप्रकारवैचित्र्यसिद्धौ न केषामपि सन्देहलेशावसरः ।

## पुराणादिशास्त्रेषु समाध्यादिभाषात्रितयोपन्यासरहस्यम् ।

पुराणादिशास्त्रेषु के विषयाः सन्ति,कुत्र च कियन्तस्तेषाम् अंशा लौकिक्या भाषया निबद्धाः, कियन्तश्च परकीयभाषासम्वलिता इत्यादिनिर्णयस्तु दार्शनिकबुद्धिगम्य एव । अष्टाङ्गयोगस्य समाधिरूपं चरमं साधनमपि द्विधा विभक्त,

विद्यते। एकं सविकल्पकसमाधिरूपेण द्वितीयं च निर्विकल्पकसमाधिरूपेण। तत्र निर्विकल्पकसमाधिस्तु एक एव, किन्तु सविकल्पकस्य सन्ति चत्वारो भेदाः। वितर्कानुगतः प्रथमो विचारानुगतश्च द्वितीयः, आनन्दानुगतस्तृतीयोऽस्मितानुगतश्चतुर्थं इति। एषां सर्वेषामपि विस्तृतं विवेचनं स्वयोगदर्शनभाष्ये यथावद्विहितमस्माभिः।

तत्र वितर्कानुगत-समाधिसाहाय्येन लौकिक्या भाषाया विचारानुगत-समाधिसाहाय्येन च परकीयाया रचना सम्पाद्यते। अस्या गाथायाः प्रथमः परिशिष्टांशस्तु परकीयभाषयैव निबद्धोऽस्ति। अयन्तु निबन्धो लौकिक्या भाषया सम्बलितः।

इयं हि लौकिकी भाषा, शिष्यवात्सल्यादर्शपूर्णस्य सूर्य्यवंशोद्भवानां क्षत्रियाणां कुलगुरोर्ब्रह्मवर्चस्विनो महर्षेः वशिष्ठस्य करुणोत्पन्नमोहेन, अपरतश्च तपस्याया आदर्शमूर्त्तेः क्षात्रतेजोविशिष्टतयोग्रतरकठोरस्वभावशालिनो जगत्त्रयस्यापि सुहृदो महर्षेर्विश्वामित्रस्य स्वाभाविकेन क्रोधेन च यदज्ञानमूलकं जन्यमजनि, तेन च जन्येन तयोर्महात्मनोर्यत्पतनं क्षणिकं सर्वजनदृष्टिगोचरतामनीयत, तस्य पतनस्य द्वन्द्वयुद्धस्य चाध्यात्मिकं रहस्यं लौकिक्या भाषया सुमधुरमञ्जुलमसृणकवितानिबद्धया विचरय्य अस्या आख्यायिकायाः सौन्दर्य्यवृद्धिं विदधता, निबद्धेति विभावनीयम्। इत्थञ्च पुराणपाठकैरिदं सततं स्मरणीयं यदस्या गाथायाः पूर्वार्द्धभागस्तु परकीयभाषया उत्तरार्द्धांशस्तु लौकिक्या भाषया समुद्भासित इति।

## दशमाध्याये समागत-परकीया-लौकिकी-समाधि-रूप-भाषात्रय-निर्णयरहस्यम्।

अध्यायोऽयं परकीय-समाधिभाषाभ्यां परिपूर्णः। उपरितने वर्णन-प्रस्तावे यः कथावर्णनप्रसङ्गः, स तु परकीयभाषाविशिष्टः। आत्मज्ञान-विषयकश्च वर्णन-प्रस्तावः समाधिभाषामयो विहित इति। परकीया भाषा यथा विचारानुगत-समाधिना लौकिकी च वितर्कानुगतसमाधिना विरचिते स्यातां, तथैव समाधि-भाषाऽपि योगशास्त्रीयसंयमक्रियासाहाय्यमाश्रित्य विरचिता भवतीति ध्रुवमूहनीयम्। एकस्मिन्नेवाधारे धारणाध्यानसमाधीनां त्रयाणामपि समनुष्ठानेन संयमसिद्धिर्भवति। तेनैव संयमबलेन सर्वाऽपि सिद्धिर्हस्तगता भवति। सिद्धिवर्णनञ्च विस्तरशो स्वकीये योगदर्शनभाष्ये तृतीयाध्याये विहितमस्माभिः। तत्रैव द्रष्टव्यं दिदृक्षुभिः।

योगसाधनोक्तसंयमक्रिययैव पिण्डत आरभ्य ब्रह्माण्डान्तानां लोकलोका-

श्रीविश्वनाथो जयति ।

स० नं० ४६४

# श्रीभारतधर्ममहामण्डल प्रधानकार्यालय ।

जगत्गञ्ज, बनारस ।

ता० १—नवम्बर १९३१

सनातनधर्मावलम्बी सज्जनों, माताओं, धर्मोपदेशकों, धर्मालयोंके अधिकारियों और धर्मसंस्थाओंके पदधारी महाशयोंसे सविनय निवेदन—

## विषय—वर्तमान समयमें आत्मरक्षाका प्रयत्न ।

इस समय भारतवासियों,—विशेषतया सनातनधर्मावलम्बियों,—के सम्मुख जीवन-मरणका प्रश्न उपस्थित हुआ है। इस संकटावस्थाको पार कर यदि सनातनधर्मावलम्बियोंको चिरजीवन प्राप्त करना है, तो उन्हें उपेक्षा-भाव और आलस्यको त्यागकर जागृत और संघटित हो जाना चाहिये। संघटनका नामस्मरण करनेसे ही अब काम नहीं चलेगा, उसे कार्यरूपमें परिणत करना आवश्यक है। केवल कभी कभी सभा करके व्याख्यानबाजी, धर्मके नामसे अर्थोपार्जन और धर्मकी आड़में कार्यक्षेत्रमें आकर भी आपसमें लड़ने झगड़ने या नामके लिये सभा-सोसाइटियोंके बनानेसे भी अब काम नहीं चलेगा। इस समय धर्मके एकही झंडेके नीचे सब श्रेणियोंके व्यक्तियोंको नाना पथोंसे आकर एकत्रित होना होगा और उसी झंडेतले सबको एकत्रित होकर आत्मरक्षा करनी होगी।

वर्णाश्रमधर्मावलम्बी हिन्दुओंके संघटन, संरक्षण और संवर्द्धनका कार्य श्रीभारतधर्ममहामण्डल अपनी शक्तिके अनुसार प्राणपनसे गत ३० वर्षोंसे करता आ रहा है। वर्णाश्रमियोंकी यही एकमात्र अखिलभारतवर्ष व्यापी ऐसी विराट् संस्था है, जिसे हिन्दुजातिकी प्रतिनिधिसभा रूपसे भारतसरकार, सब हिन्दुधर्माचार्य, सब हिन्दु स्वाधीननरपति और सर्व साधारण प्रजाने स्वीकार कर लिया है और जो इतने दिनोंसे अपने अस्तित्वकी रक्षा करती हुई अपनी सजीवताका परिचय देती आयी है और विरोधियोंके लगातार आक्रमणोंसे भी आत्मरक्षा करती हुई इसने अपने सत्यमूलक आत्मबलका

परिचय दिया है। यद्यपि इसके सहस्रों सदस्य विद्यमान हैं, तथापि संघटनके विचारसे पचीस करोड़ हिन्दुओंके प्रतिनिधियोंकी यह संख्या सन्तोषजनक नहीं कही जा सकती। अतः हमारा सनातनधर्मावलम्बी भाई-बहिनोंसे अनुरोध है कि, लाखोंकी संख्यामें वे इस सभामें सम्मिलित हों और सब मिलकर त्रिकालज्ञ महर्षियों द्वारा प्रदर्शित उस मार्गका अनुसरण करें, जिससे इस लोक और परलोकमें पूर्ण अभ्युदय प्राप्त कर अन्तमें सब प्रकारका सुख प्राप्त हो।

यद्यपि इस भारतवर्षव्यापी संस्थाके अनेक श्रेणीके सभ्य और सभ्याएँ हैं, जिसमें धर्माचार्यों और राजा महाराजाओंसे लेकर धनी और दरिद्र सब प्रकारकी प्रजाको एक ही झंडेतले एकत्रित होनेकी शैली बहुत ही विचारपूर्वक रक्खी गयी है; परन्तु उसके साधारण सभ्य होनेकी शैली सर्वजनहितकारी है। इस संस्थामें सम्मिलित होनेसे कुछ महत्वपूर्ण लौकिक और व्यक्तिगत भी लाभ हैं, जिनका संक्षिप्त विवरण यहाँ देना हम उचित समझते हैं।

१—इस समय सनातनधर्मियोंकी सामाजिक शक्तिवृद्धि, स्वधर्मज्ञानका प्रचार और वर्णाश्रमशृङ्खलाकी सुरक्षाके निमित्त श्रीमहामण्डलके द्वारा एक संस्कृत मासिक पत्र "सूर्योदय" और दूसरा हिन्दी-अंग्रेज़ी द्वैभाषिक मासिक पत्र "भारतधर्म" नियमित रूपसे प्रकाशित होता है। दोनोंमेंसे कोई एक पत्र, जो चाहें, श्रीमहामण्डलके साधारण सभ्योंको बिना मूल्य दिया जाता है। जिनका मूल्य वार्षिक ३) है।

२—इस संस्थाके जो सभ्य होंगे, वे स्वाभाविकरूपसे ही इस संस्थाके द्वारा स्थापित "समाजहितकारी कोष" (All India Hindu Mutual Benefit Society) के मेंबर हो जायँगे और अपने संयुक्त-कुटुम्बके जितने चाहें उतने नर नारियोंको समाजहितकारी कोषका मेंबर बना कर उनकी शादी और गमीके समय यथेष्ट धनकी सहायता प्राप्त कर सकेंगे। यह कोष मध्यवृत्ति हिन्दुओंको पारिवारिक संकटके समय सहायता पहुंचानेके उद्देश्यसे स्थापित किया गया है। इस समय अपने देशमें ही क्या, संसारभरमें बेकारी बढ़ रही है और मध्यवित्त लोगोंकी आय इतनी अल्प है कि, गृहस्थीके खर्चका निर्वाह कर संकटसमयके लिये वे अपनी आयमेंसे कुछ भी नहीं बचा पाते। ऐसे लोगोंको पुत्र-कन्याओंके विवाह और आत्मीयोंकी गमीके अवसरपर इस कोषसे १०००) तक सहायता दी जाती है। इसके नियम ऐसे सरल रक्खे गये हैं कि, साधारणसे साधारण स्त्री-पुरुष भी इससे लाभ उठा सकते हैं।

इस कोषकी गवर्नमेण्ट द्वारा रजिस्ट्री भी हो गयी है। अतः कुछ धोखेकी भी बात नहीं है। इसकी नियमावली मँगाकर देखनेसे ये बातें विदित होंगी।

३—श्रीभारतधर्ममहामण्डलके सभ्योंको एक सुंदर चित्रसहित दर्शनीय मानपत्र दिया जाता है। इसके पानेसे उनकी प्रतिष्ठावृद्धि होगी और उन्हें हिन्दी और अंग्रेजीके छोटे-छोटे ग्रन्थ तथा अन्य कागज़ात बिना मूल्य दिये जायँगे।

४—धर्म या समाज सम्बन्धी शंकाओंका समाधान कर व्यवस्था आदि सम्बन्धी परामर्श यह संस्था बिना किसी प्रकारकी दक्षिणा लिये ही अपने सभ्योंको देती है।

५ - अपने सभ्योंको धार्मिक और सामाजिक प्रश्नोंके करने पर अपने "भारतधर्म" मुखपत्रमें उनका समाधान प्रकाशित कर उन्हें सहायता पहुंचानेका भी नियम रक्खा गया है।

६—सनातनधर्म सम्बन्धी ग्रन्थोंके प्रणेताओं और प्रकाशकोंके ग्रन्थोंके प्रचारमें यह संस्था सहायता करेगी, उनकी नामावली अपने मुखपत्रोंमें बिना मूल्य छापेगी और उपयुक्त ग्रन्थोंका अपने पाठ्यक्रममें भी समावेश कर लेगी।

७—महामण्डलसे प्रकाशित धर्मग्रन्थावली और वार्षिकपुस्तक ( महामण्डल डाइरेक्टरी ) उन्हें अपेक्षाकृत कम मूल्यमें देनेका नियम रक्खा गया है।

यह सब लाभ पहुंचाते हुए भी संस्थाका साधारण मेम्बरीका चन्दा केवल २) वार्षिक ही रक्खा गया है। मनुष्यका जीवन मूल्यवान होने पर भी अस्थायी है। इसके अतिरिक्त उसकी युवावस्था, कर्तृत्वशक्ति और उपार्जनशक्ति भी सदा समान नहीं रहती। अतः देशके सब भाई-बहिनोंसे हमारा सविनय निवेदन यह है कि, वे अतिशीघ्र इस संस्थाके सभ्य होकर धर्म और विपुल धनको प्राप्त करते हुए अपने उत्तम संघटन द्वारा देशोद्धारके कार्यमें अग्रसर हों और अपनी जाति, स्वधर्म और स्वदेशको स्थायी लाभ पहुँचावें।

सनातनधर्मावलम्बी नर-नारी, जिनके हृदयमें थोड़ा भी धर्मप्रेम और स्वजाति प्रेम है, उनको अवश्य श्रीमहामण्डलकी इस भारतवर्षव्यापी संघटनशैलीसे लाभ उठाना उचित है। इस प्रकारसे यदि नाना प्रकारके लाभोंकी ओर दृष्टि रखकर वे केवल २) सालका त्याग स्वधर्म, स्वजाति और स्वदेशके लिये करेंगे, तो कोई बड़ी बात नहीं है। दूसरी ओर उनका यह २) सालका त्याग उन्हें अनेक प्रकारके लाभ पहुँचावेगा। २) के बदले उन्हें ३) साल मूल्यका तो मासिक पत्र ही मिलेगा। इसके अतिरिक्त एक ऐसी बड़ी संस्थाके सभ्य और सभ्या बन

कर वे और कितने प्रकारके लाभ प्राप्त कर सकेंगे, इसका दिग्दर्शन हम ऊपर कर चुके हैं।

जो स्वदेशहितैषी और स्वधर्म-प्रेमी नर नारी इस स्वजातीय संघटनमें भाग लेना चाहें, वे कृपापूर्वक महामण्डलके नियमित फार्मको भरकर भेजें अथवा निम्नलिखित मजमूनका पत्र लिख भेजें।

निवेदक—
**कवीन्द्रनारायण सिंह**
( धर्मविनोद, रायबहादुर ) जनरल सेक्रेटरी
श्रीभारतधर्ममहामण्डल।

---

श्रीमान् जनरल सेक्रेटरी,

**श्रीभारतधर्ममहामण्डल, प्रधानकार्यालय,**

**जगत्‌गंज, बनारस।**

महाशय,

मैंने श्रीमहामण्डल सर्कुलर नं० ५६४ को देखा और श्रीमहामण्डलके सभ्य होनेके सुगम और उत्साहजनक नियम तथा समाजहितकारीकोषके समाजोपकारक उद्देश्योंको देखकर मैं प्रसन्न हुआ। मैं मेम्बर होनेकी इच्छासे यह पत्र भेज रहा हूं। साथमें वार्षिक चन्दा २) भी भेजता हूं। कृपाकर मेरा नाम मेम्बरोंकी सूचीमें चढ़ा लें और मुझे भारतधर्म/सूर्योदय नियमित भेजा करें।

भवदीय—

दस्तखत————————

पूरा नाम————————

पूरा पता————————

स्थान————————

ता०————————

# सूर्योदयः ।

सप्तमे वर्षे } कार्तिकस्य पूर्णिमा सं० १९८८ । { पञ्चम संख्या

## सम्पादकीया अभिप्रायाः ।

### कुठाराघातमाचरिष्यन्ति ।

—०:*:०—

अक्तूबरमासस्याष्टम्यां तिथौ लन्दननगरे "माइनारिटी" नामिकायामुपसमित्यां भाषणं कुर्वन् महात्मा गान्धिः अस्पृश्यानां सम्बन्धे सबलमिदं मुद्घोषितवान् यत्—"व्यवस्थापरिषदि स्थानप्राप्तेरपेक्षया सामाजिकैर्धार्मिकैश्चात्याचारकदम्बैः परिरक्षणमेव तेषां (अस्पृश्यानां) कृते महद् आवश्यकं वर्त्तते। रीतिरेव, या किल विधानतोऽपि गरीयसी, सकलान् एवास्पृश्यान् नीचनीचां दशां प्रापयत्। हिन्दूनां कृते नूनमेव लज्जास्पदमेतत्। तैरेतदर्थं प्रायश्चित्तं विधेयम्। आत्मानमुच्चवर्णम्मन्यमानैरेव स्वदेशभ्रातृषु तेषु प्रबल अत्याचारो विहितः। अहं तु एवंविधस्य विधानस्य स्वीकृतिं वाञ्छामि येन सर्वेऽमी दोषा अत्याचारा वा तिरोभवेयुः। धन्यवादार्हः किल भगवान् ईश्वरो येन किल हिन्दुहृदयेषु सम्प्रति महान् क्षोभस्तदर्थमुद्भावितः।" इत्यादिकं सर्वम् अक्तूबरमासस्य दशम्यां तिथौ "पायनियर" पत्रेऽस्माभिरवलोकितम्। ननु महात्मनो गान्धिमहोदयस्यैवं व्याहरणं समुचितं न वेत्यधो विविच्यते—

यदि राजनीतिनेता सन्नपि महात्मा महोदयो धार्मिकनेतारमप्यात्मानमभिमन्यते चेत्तदा आर्यमत-ब्रह्ममतादिवत् स्वीयं गान्धिमतमपि प्रचारयितुमस्ति तस्याधिकारः। नान्यथेति न्याय्यः पन्थाः। सम्प्रति वर्णाश्रमशृङ्खलां रक्षयित्र्याः सनातनधर्मावलम्बिन्या आर्यप्रजाया धर्मसिद्धान्तविरुद्धं स्वकीयमुपर्युक्तमतं प्रकटयन् स नूनं भगवतः परमेश्वरस्य सनातनधर्मावलम्बिनां च सन्निधाने कृतापराधः। राष्ट्रसभायाः कस्यचन नायकत्रयस्य गान्धिमहोदयस्य वा दृष्ट्या स्पर्शास्पर्शयोः शुद्ध्यशुद्ध्योर्दार्शनिकं विवेकं मन्यमानाः सना-

तनधर्मावलम्बिन्यः प्रजाः मूर्खतां बर्बरतामुपेयुष्य एव सन्ति, परन्तु तासामस्तित्वं संख्याधिक्यं च तैरपि ध्रुवं स्वीकर्त्तव्यम्। साम्प्रतमपि ग्रहणादौ पर्वणि शुद्ध्यादिविवेकप्रेरिताः संख्यातीताः सनातनधर्माण एकत्र संमिलन्ति, इदानीमपि भारतस्य सर्वेष्वपि प्रान्तेषु स्पर्शास्पर्शविवेकं मन्यमाना अगणिता नरो नार्यश्च स्वकीयं भोजनं पानं विविधं व्यवहारादिकं च विदधानाः परिदृश्यन्ते। अधुनापि भारतस्य निखिलेष्वपि स्थानेषु सनातनधर्माणो हिन्दवो नैजेषु देवालयेषु वर्णव्यवस्थोपासनाचारानुसारं स्वकीयं पूजनकार्यं सम्पादयन्तोऽतीत संख्याः सज्जना विलोक्यन्ते। सनातनधर्मावलम्बिन्यः प्रजास्तु स्पर्शास्पर्शशुद्ध्यशुद्धि-विवेकं नैव नैजकुसंस्कारजं प्रत्युत स्वधर्माङ्गमामनन्ति। वैदिकदर्शनस्य कर्ममीमांसाशास्त्रस्य सिद्धान्तोऽयं वर्त्तते यत् शुद्ध्यशुद्धिस्पर्शास्पर्शविचारो न केवलं स्थूलेनैव देहेन, अपि तु पञ्चभिरपि कोषैः कृतसम्बन्धो विज्ञेयः। शुद्ध्यशुद्धि-स्पर्शास्पर्शविवेको हि ख्रिस्तमतावलम्बिभिर्माहम्मदैश्चापि स्वीक्रियत एवेति महात्मगान्धिप्रभृतिभिर्नेतृभि र्न विस्मरणीयम्। अत एव माहम्मदा मारितमेव मांसं स्वीकुर्वन्ति, नैव तद्विपरीतमपवित्रम्। भारतवर्षं किल धर्मभूमिः। अत्र हि बहुविधसम्प्रदायमतानि विलसन्ति, निखिलान्येव स्वस्वरीत्या स्पर्शास्पर्शयोः शुद्ध्यशुद्ध्योः स्वीकृतिं प्रतिपद्यन्ते। अतो हि महात्मनो गान्धिमहोदयस्योपरि निर्द्धारितः सिद्धान्तो न केवलं सर्वश्रेणिगानां भारतीयानां दुःखाकरः किञ्च क्षोभकारकोऽपि वर्त्तते। राष्ट्रियमहासभां शक्तिशालिनीं विधातुं प्रातः-स्मरणीयलोकमान्यतिलकादीनाम् आदिराष्ट्रनेतृणामुपदेशानुसारं वर्त्तमानै राष्ट्रसभानायकैरपि विवेचनीयमिदं यत् कस्यापि भारतीयधर्ममतस्य केनापि सिद्धान्तेन सह यदि कस्यचन विषयस्य सम्बन्धो वर्त्तते चेत्तदा तैर्हस्तक्षेपो न विधेयः इति। यदि ते नैवमनुष्ठास्यन्ति तदा राष्ट्रियमहासभा-महाशक्ति-मूले कुठाराघातमाचरिष्यन्ति।

---

## अवश्यं संरक्षणीयः।

—:❀:—

भगवतः परमेश्वरस्य सर्वजीवहितैषित्वं प्रसिद्धं, तर्हि देवमन्दिरेषु कथं नामाधिकारभेदः स्पर्शास्पर्शविवेको वा स्वीक्रिय इति शङ्का समाधीयते—भगवान् निखिलप्राणिहितकारी दयासागरः सर्वशक्तिश्चेति सत्यम्; परन्तु तस्य सृष्टिषु सुतरामधिकारभेदो दृश्यते। एकस्यामेव जातौ, एकत्रैव कुले कश्चनान्धः, कोऽपि पङ्गुः, कश्चिद् वधिरः, एकः सर्वाङ्गपूर्णः, अपरो दरिद्रः,

अन्यो धनिकः शक्तिशाली बुद्धिमांश्चेति सुस्पष्टं परिदृश्यते। तत्तज्जीवानां पूर्वजन्मकर्मसमूह एवाधिकृतो विभिन्नताहेतुः। अधिकारभेदं पुरस्कृत्यैव परमात्मा सर्वान् सृजति। तदीयसृष्टिसु यद्यधिकारभेदं निभाल्यते, तर्हि तत्सृष्टप्राणिपुञ्जसमुन्नतिनियमभेदेनापि निश्चितमेव भवितव्यम्। ये च किल वैदिकदर्शनसिद्धान्तान् तदीयोपासनापद्धतीश्च सविज्ञानं न जानन्ति, ते हि देवमन्दिराणां महिमानं न वस्तुतोऽवगन्तुमीशते। सनातनधर्माणो मृदं प्रस्तरं वा न पूजयन्ति। ते तु अग्नि-मूर्ति-पट-जल-मण्डल-यन्त्रादिषु षोड़शसु दिव्यदेशेषु पीठ निर्माणपूर्वकं दैवीं सत्तां केन्द्रीभूतां विधाय परमात्मानमन्यान् बहुविधान् देवांश्च समर्चन्ति। प्राणमयकोषस्याकर्षणविकर्षणशक्तिसमन्वयतः समुत्पद्यमानाऽऽवर्त्तरूपपीठेषु प्राणप्रतिष्ठामनुष्ठाय परमात्मा, देवाः, देव्यो वा पूज्यन्ते। पीठस्थापनक्रियायामेतस्यां कर्त्तुः संकल्पसंस्कारादयस्तिष्ठन्ति। अतो हि शास्त्रनिदेशोऽयं यत् यदि शूद्रद्वारा स्थापितां देवप्रतिमां कोऽपि ब्रह्मज्ञानी ब्राह्मणः प्रणमेत्, न तेन ब्राह्मणस्य, प्रत्युत देवविग्रहशक्तेरेव हानिः। एवं हि पीठप्रादुर्भावावसरेषु यदि शुद्ध्यशुद्धिस्पर्शास्पर्शविवेकः संरक्षितस्तदा तद्विरुद्धाचरणेन तत्पीठस्थदेवशक्तिषु व्यत्यासः सम्भाव्यते, योगयुक्ता महात्मानो हि केवलं पीठस्पर्शेनैव तत्स्थां दैवीं सत्तामनुभवितुं समर्थाः। स्पर्शमात्रेणैव तत्त्वज्ञानामन्तःकरणेषु योगयुक्तेषु दैवी सत्ता सुतरामनुभूयते। समुन्नता योगिनः साम्प्रतमपि तत्सत्तामनुभवन्ति। अत एव संन्यासिभिः केवलं प्रतिमास्पर्श एव विधेयो न प्रणाम इति शास्त्रीयमनुशासनम्। अस्मात् कारणात् पीठविज्ञानस्यैतस्य मूर्त्तिपूजया सह सुदृढ़ः सम्बन्धः स्थिरीकृतश्चेत् तदा देवमन्दिरेषु शुद्ध्यशुद्धि—स्पर्शास्पर्शविवेकोऽवश्यं संरक्षणीयः।

---

## आचाराः पालनीयाः।

—:o:*:o:—

देशकालपात्रानुसारं भारतवर्षेऽत्र प्रादुर्भूतानां जटिलसमस्यानां व्यवस्थापनं नास्त्यतिकठिनम्। स्पर्शायोग्यानां पदार्थानां जातीनां वा स्पर्शनं विधाय पारस्परिकमनोमालिन्यापनोदनाय पुनः स्वस्वशुद्धिः सम्पाद्या, येन सामाजिकं प्रेम न विहन्येत। एवं हि कूप-तडागादितो जलाकर्षणप्रश्ना अपि समाधेयाः। "उदारचरितानां तु वसुधैव कुटुम्बकम्" इति यदि सनातनधर्मस्य घोषणा तर्हि सदाचारभ्रष्टान् अपि मानवान् स्वसमाजस्यैवाङ्गानि समवधार्य तैः सार्द्धं यथोचितप्रेमसम्बन्धसंस्थापनं भूषणमेव न दूषणम्। कूप-तड़ाग-नदीनां जलानि-

नापवित्रतां भजन्ते। अतस्तादृशमानवानां तत्तत्सार्वजनिकस्थानेषु जलनिष्कासनानन्तरं जलं गृहीत्वाऽन्यैरुदारहृदयैः सनातनधर्मावलम्बिभिः स्वीया आचाराः पालनीयाः।

## उभयेषां महीयसी हानिः।

—ऽ❀ऽ—

इदानीं समये राष्ट्रमहासभया भारतशासकैश्च विषयेऽत्र नूनं ध्यानं प्रदेयम्। अल्पबुद्धयोऽपि मतमिदमस्माकं नूनमनुमोदयिष्यन्ति। तथाहि—हिन्दुस्थाने बहुविधानि मतानि प्रचरन्ति। तेषु आर्यसामाजिकाः, ब्रह्मसामाजिकाः, सानातनिकाः सुधारकाश्चापि सन्ति। यदि कश्चन धूर्त्तो मानवः सनातनधर्मावलम्बिनां प्रतिनिधिमात्मानमुद्घोषयन् सनातनधर्मस्यालौकिकं सिद्धान्तं विनाशयितुं प्रयतिष्यते, भारतशासकाश्च तत्सहायका भविष्यन्ति; तर्हि नूनं भारतीयाः शासनकर्त्तारोऽपि तद्दोषभाजः। एतादृशस्य पापस्य अन्यायस्य वा फलं समयान्तरे शासनकर्त्तृभिर्नूनमेवोपभोक्तव्यम्। राष्ट्रियमहासभयाऽपि नूनमिदं चिन्तनीयम्—केषाञ्चनापि धर्मसम्प्रदायानां संस्कारेषु क्रियाकलापेषु वा तया हस्तक्षेपो न विधेयः। यदीयं स्वकीयं हस्तं निक्षेप्स्यति, ध्रुवमन्यायमाचरिष्यति, विपद्ग्रस्ता च सम्पत्स्यते। राष्ट्रसभाया निरङ्कुशा नेतारः प्रतिदिवसमिदं पश्यन्ति यत् स्पृश्यास्पृश्य-शुद्ध्यशुद्धि-विवेकवती सनातनधर्मावलम्बिनी प्रजा विनैव कयाचित् प्रेरणया सूर्य-चन्द्रग्रहणप्रभृत्यवसरेषु ग्रहणाशौचतः शुद्धिं धर्मप्राप्तिं च कामयमानाः कोटिं व्ययीकृत्य संख्यातीतक्रोशेभ्यो गङ्गातीरमायान्ति। किं तेषां निरङ्कुशनेतॄणां प्रस्तावस्वीकारेणैव सनातनधर्मावलम्बिनो नरो नार्य्यश्च स्वकीयं शुद्ध्यशुद्धि-स्पर्शास्पर्शभावं परित्यक्ष्यन्ति? न कदापीति। सनातनानि दर्शनशास्त्राणि स्पर्शास्पर्शयोः शुद्ध्यशुद्ध्योश्च सम्बन्धो मानवानां पञ्चभ्योऽपि कोशेभ्यो वर्त्तत इत्यामनन्ति। विष्ठामूत्रादिभिरन्नमयः, ग्रहणशौचादिभिः मनोमयः, वेश्या-म्लेच्छ-नास्तिकादिसंसर्गतो विज्ञानमयश्च कोशोऽपवित्रो भवति। एतादृशं दार्शनिकं सिद्धान्तं नवीनानां निरङ्कुशनेतॄणां कथनेनैव आर्यजातिरियं न कदापि परिहास्यति। यदि भारतीयाः शासका राष्ट्रमहासभासदस्याश्च नैजमदूरदर्शिताभ्रमं परित्यज्य न्यायमार्गं नाश्रयिष्यन्ति तदा उभयेषामेव भविष्यति महीयसी हानि र्भविष्यतीति निर्विवादम्।

## सामाजिकः सुधारः।

—०:*:०—

सामाजिके सुधारेऽस्माकं नितरां पक्षपात इति निःशङ्कोचमुद्घोष्यते। किञ्च याथातथ्यतः समाजस्य सुधारं किल वयं कामयामहे, न च विध्वंसम्। मौलिकत्वं परीक्ष्य कस्यचन समुन्नयनं सुधार इति व्यपदिश्यते। अन्यथा विध्वंस एवेति। इदानीन्तनाः सुधारकम्मन्या मौलिकतां समूलमुन्मूल्य समाजं विगुणयितुं प्रयतन्ते। एवं करणं किल ते सुधारमाकलयन्ति। सारदा-महोदयस्य विधानं मतमस्माकं दृढीकुरुते। कश्चनापि विचारशाली पुमान् बाल-वृद्ध-विषम-विवाहसमर्थको न भवितुमर्हतीति निश्चितम्। यदि केच-नादूरदर्शिनः परिणयं तादृशं कारयन्ति कुर्वन्ति वा चेत् तदा शिक्षितो जीवित-समाजस्तं प्रतिकर्त्तुं शक्नोति। एतदर्थं हि तादृशानां शासकानां शरणं नितरां निष्प्रयोजनं येऽस्माकं धर्मशास्त्रतः सामाजिकरीतिनीतितो वा दूरे तिष्ठन्ति। सारदामहोदयो व्यवस्थापकपरिषदि कोटिसंख्यातिगानां धार्मिकसज्जनानां मनो-भावं मर्दयित्वा नैजं विधानं स्वीकारितवानिति नूनमसौ धर्मविषयेऽपराध्यति। नात्रविषये शासकास्तथाऽपराध्यन्ति यथाऽस्माकं प्रतिनिधयः। कश्चित् स्वीयां कन्यां पञ्चविंशतिवर्षीयामष्टवर्षदेशीयां वा परिणयेत्; न हि तेन शासकानां हानिर्लाभो वा। सारदामहोदयो जानन्नपि स्वीयं विधानं द्वारीकृत्य विशुद्धा-मार्यसंस्कृतिमुपाहासयदिति निर्विवादम्। सम्प्रति सातिशयं सन्तोषमेति स्वान्तं यत् भारतीयशासकाः स्वीकृतेऽपि तत्र शारदाविधाने सामयिकं संशोधनं कर्त्तुं स्वीकृतिमयच्छन्। अस्मिन् अवसरे सनातनधर्मावलम्बिभिस्तथा प्रयतेलिमम्; येन नाऽस्माकं धार्मिके सामाजिके वा व्यवहारे कथञ्चिदपि बाधा सम्भाविता स्यात्। श्रीभारतधर्ममहामण्डलो विषयेऽत्र सम्राट्प्रतिनिधे व्यवस्थापरिषद्-ध्यक्षस्य च सन्निधाने यं किल तन्त्रीसम्वादं प्राहिणोत्, स निम्ननिर्दिष्टरूपः—

"Bharatdharma Mahamandal representing orthodoz Hindu India having branches throughout country again strongly condemn Sarda Act which violates Empress pledge interferes with sacred laws of religion and sacrament Mahamandal welcome Bills repealing same and respectfully warns Government to safegaurd future political danger and request taking farsighted action at this psychological moment."

"अखिलभारतवर्षीयसनातनधर्मावलम्बिनामेकमात्रप्रतिनिधिसभारूपः श्रीभारतधर्ममहामण्डलः प्रतिप्रान्तं स्थापितानेकशाखः पुनरपि सारदाविधानस्य विरोधमाचरति। विधानमिदं हि महाराज्ञ्या विक्टोरियायाः प्रतिज्ञा-विरुद्धं हिन्दूनां धार्मिकसिद्धान्तेषु हस्तक्षेपकरं च। तद्विधानसंशोधनार्थं तत्र यावन्तः प्रस्तावाः समुपस्थापितास्तान् महामण्डलः समर्थयते, शासकांश्च सादरं सावधानान् करोति यत् ते सम्प्रति बुद्धिमत्तया कार्यमनुतिष्ठन्तु, भविष्यति च समये राजनीतिकापद्भ्यो भारतवर्षं परिरक्षन्तु।"

सारदाविधानसम्बन्धे संशोधनमुपस्थापयतः परमश्रद्धेय-श्रीकृष्णमाचार्यमहोदयस्य प्रस्तावं वयं हृदयेन समर्थयामः; व्यवस्थापिकायाः परिषदो धर्मात्मसदस्येभ्यः सनातनधर्मसभासञ्चालकेभ्यो धार्मिकसज्जनेभ्यश्च सानुरोधमिदमस्माकं निवेदनं यत् साम्प्रतं ते स्वीयामुदासीनतां परित्यज्य प्रबलया शक्त्या संशोधनसमर्थनं कुर्वन्तु; येन सनातनप्राचीनगौरवं सुरक्षितं स्यात्; येन भविष्यति च काले न कोऽपि पुमान् अस्माकं धर्मे हस्तक्षेपं कुर्यात्। सनातनधर्मप्रेमाणः सर्वेऽपि हिन्दवः स्वीयं तादृशं संघटनं कुर्वन्तु, यतः किल स्वेच्छाचारपरायणा जनाः "सामाजिक सुधार" नाम्ना नात्याचरेयुरिति।

---

## महीयानुपकारः सम्भाव्यते।

—o:*:o—

सम्प्रति भारतवर्षस्य सर्वेष्वपि प्रान्तेषु आयुर्वेदस्य प्रचारो नितरां समेधत इति सातिशयं सन्तोषं समेति सहृदयस्वान्तम्। आयुर्वेदस्य महिमा पक्षपातरहितैः यूरोपीयैराङ्गलचिकित्सकैरपि मुक्तकण्ठं स्वीकृतः। विहारप्रान्तीयस्य छपरापत्तनस्य "भगवानबाजार" नामके विभागे आयुर्वेदविज्ञान प्रचारार्थमेकः "सारन सरोज" नामा औषधालयः संस्थापितो जातः। अस्यौषधालयस्य प्रधानश्चिकित्सकः श्रीमान् पण्डितसरयूप्रसादपाण्डेयो वैद्यशास्त्री श्रूयते। पाण्डेयमहोदयस्य संरक्षकत्वे सञ्चालकत्वे च औषधालयसमुन्नयनपूर्वकमायुर्वेदीयौषधानां प्रचारेण तत्रत्यजनानां महीयानुपकारः सम्भाव्यते।

---

## कार्यालयः प्रार्थयते।

—o:*:o—

नेदं तिरोहितं "सूर्योदय" पाठकमहाभागानां यत् सम्प्रति साधारणस्यापि पत्रस्य (कार्ड) प्रेषणे त्रीणि ताम्रकर्षणानि व्ययीभवन्ति इति। एकतो नितरामल्पमूल्येनैव सूर्योदयः प्रदीयते। द्वितीयतो यदि ग्राहकाणां सन्निधाने बहूनां पत्राणां प्रेषणप्रयोजनं भविष्यति, तर्हि कथमल्पीयसा मूल्येन तेषां पार्श्वे संस्कृत-सूर्योदयो गमिष्यति? अतो ग्राहकमहाभागाः सूचना पत्र-प्रेषणप्रतीक्षामन्तरेणैव स्वीयं सदस्यताशुल्कं प्रहिण्वन्तु—इति कार्यालयः प्रार्थयते।

---

# धर्मशिक्षायाः प्रयोजनम्।

—०:#:०—

इदानीन्तनेषु विद्यामन्दिरेषु शिक्षामधिगच्छत्सु अन्तेवसत्सु चरित्रहीनत्वं नितरां प्रवर्द्धमानं श्रूयते। नेयं जनश्रुतिर्निराधारा। साम्प्रतं हि गुरुशिष्ययोः प्राचीनः सम्बन्धो लुप्तप्राय इव दृश्यते। विद्यार्थिनां मानसेषु शिष्टाचार-गुरु-भक्तिप्रभृति-शिष्यधर्मप्रतिकूला वृत्तयः प्रादुर्भवन्ति। कारणेनैतेन गुरुशिष्य-सम्बन्धः स्वार्थपरतामभ्युपैति। विषयोऽयं कस्य सहृदयस्य हृदयं चिन्ता-सन्तानवितानैकतानं न विदधाति ?

मानवजीवनसाफल्यस्य निदानं सच्चरित्रतैवेति निर्विवादम्। अतः समाजस्य भाविनः कर्णधाराः विद्यार्थिनः स्वीयचरित्रसुधारसुधारसनिषेवणे सप्रयत्ना भवन्तु। किन्तु खिद्यते चेतो यत् शिक्षणसंस्थाधिकारिणोऽत्र विषये तैलप्रपूर्ण-कर्णाः शेरते। अन्तेवसतां भिन्नभिन्नविषयशिक्षाधिगम एव साम्प्रतिकविद्यालयानां मुख्य उद्देशो विलसति। किन्तु बहूनां विषयाणां शिक्षया को लाभो यदि विद्यार्थिनस्तान् हृदयङ्गमान् न विदध्युः। मानवानां कर्मकुशलतयैव योग्यताया निर्णयो भवति। अतो येन छात्राः कर्मठाः कुशला भवन्ति, स एव शिक्षाया उद्देशः।

एतर्हि विद्यार्थिनां चरित्रताह्रासस्य प्राधान्येन कारणत्रयमवगन्तव्यम्। तथाहि—(१) धार्मिकशिक्षाया अभावः, (२) सुयोग्यानां सच्चरित्राणां शिक्षकाणां न्यूनता, (३) केवलविद्यालयीय-नियमपरिपालनरीतिश्चेति। तत्र क्रमशो निम्ननिर्दिष्टरूपं विविच्यते—

न निभाल्यते सर्वेष्वेव शिक्षालयेषु धार्मिकशिक्षायाः काचिदपि व्यवस्था। भारतवर्षेऽत्र साम्प्रदायिकताया आधिक्येनैव कारणेन विद्यालयादिषु धर्मशिक्षा-व्यवस्थायां बोभूयते महत् काठिन्यम् इति शिक्षाधिकारिणां व्याहृतिः। निष्पक्ष-पात-विचारणे तु व्याहृतिरियं न सद्विचारकोटीमाटीकते। भारतीयेषु विभिन्नस-म्प्रदायेषु सत्यपि पारस्परिकमतभेदे धर्ममूलेषु क्षमा-दया-सहिष्णुता-सत्य-संयम-परोपकारादिषु समेषामैकमत्यमेव वर्त्तते। मतभेदविरहितान् सिद्धान्तानिमान् मानसेषु बद्धमूलान् विधाय तांश्च दैनिकेषु स्वकीयेषु व्यवहारेषु व्यवहर्त्तुं विद्यार्थिनः प्रोत्साहयितव्याः। एतदावश्यकविषयशिक्षणलाभानन्तरं स्वसम्प्रदाय-शिक्षा स्वगृहेष्वपि तैरधिगन्तुं शक्यते। यद्युपर्युक्तधर्मशिक्षालाभव्यवस्थापनं शिक्षाधिकारिभिः शिक्षालयादिषु क्रियते चेत्तर्हि न कथमपि भवेत्सम्प्रदायविरोध-

शङ्कालेशोऽपीति। परिस्थितावस्यां धर्मशिक्षोपेक्षणं नूनं सहृदयहृदयपरितापकारणम्। शिक्षाधिकारिभिस्तु नूनं विषयेऽत्र स्वकीयदृष्टिपातो विधेयः, धार्मिकशिक्षायाः सुव्यवस्थां च विधाय विद्यार्थिनां जीवनानि समुन्नेयानि; अन्यथा शिक्षाप्रकारप्रचारणम् आतनोति केवलं विडम्बनामेवेति।

शिक्षायां साफल्यं शिक्षकाणां साध्वीं साधीयसीं च योग्यतां निर्बिभर्त्ति। संसारेऽत्र शिक्षकाणां स्थानं वर्त्ततेऽत्युच्चतरम्। त एव शिक्षाया आधारस्तम्भाः। छात्राणामुपरि तेषां व्यक्तित्वस्य सुदृढः प्रभावो बोभूयते। छात्राणां बलवती भवत्यनुकरणप्रवृत्तिः। सच्चरित्रता किलोदाहरणसापेक्षा। केवलं नैतिकोपदेशेनैव न भवति छात्राणां चरित्रसुधारः। अतः शिक्षकैः सच्चरित्रताशालिभिर्नूनं भवितव्यम्। सम्प्रति हि शिक्षकाणां नियुक्तौ चरित्रविषये नाधिकारिभिः किमपि ध्यानं प्रदीयते। तैस्तु केवलं विद्याविषयकप्रमाणपत्राणि विलोक्यैव शिक्षकाणां नियुक्तिः क्रियते। यदि शिक्षकाः सच्चरित्रा न भवन्ति तदा तदधीनस्था विद्यार्थिनोऽपि स्वकीयोच्चसच्चरित्रताऽऽदर्शात् परिपतन्ति। अतोऽधिकारिभिः चरित्रबलं परीक्ष्यैव शिक्षका नियोक्तव्याः। सन्दिग्धचरित्राणां शिक्षकपदेषु प्रतिष्ठापनं विद्यार्थिनां चरित्रभ्रष्टतापथे प्रवर्त्तनमेव मन्यामहे।

केवलविद्यालयीयनियमपालनपरिपाटी चापि विद्यार्थिनामुपरि स्वकीयं प्रबलं प्रभावं पातयति। शिक्षालयनियमानुवर्त्तनमेव न केवलं विद्यार्थिनां हिताधायकं, तेषामन्तःकरणेषु तत्तन्नियमानां पालनप्रयोजनीयता, तदपालनानिष्टकारिता च सुदृढं प्रतिष्ठापनीया। आज्ञापरिपालनमहत्त्वमेव यदि ते शिक्षेरन्, तर्हि गुणान्तरशिक्षाग्रहणमनायासेनैव कर्त्तुं शक्नुयुः। साम्प्रतं विद्यार्थिभिः वैवश्येनैव केवलं विद्यालयनियमानुवर्त्तिभिर्भूयते; किन्तु तेषामन्तरात्मसु नियमानुवर्त्तितायाः सहजो भावो नावलोक्यते। अतो वैवश्यात् शिक्षालयनियमानुवर्त्तनं न भवति तेषां व्यावहारिकजीवनाङ्गभूतम्। विद्यामन्दिरनिःसृतेरनन्तरमेव भवति तेषां जीवनमनियमितमनियन्त्रितं च। अतो हि बहुत्र परिदृश्यते यत् शिक्षिता अपि जनाः स्वकीयजीवनोद्देश्यपरिपूर्त्तये न प्रभवन्ति। सुतरां नियमपालनोपयोगिता छात्राणामभिमानसं नूनं प्रतिष्ठापनीयेति।

पथि भयमप्यासीत् लुण्ठकानाम्। सन्निधाने चैतस्य भूषणमास्ते रत्नमयम्। अतो न व्रज्यते स्मैतेनैकाकिना। यावदनेहसं न भवति स्म मेलनं सहचरस्य तदवधि चरणा अपि न निक्षिप्येते स्म। यत्र हि मुच्यतेस्म साहचर्यं तत्रैव चिन्तासन्तानवितानझञ्झावातोद्धूतघनघनाडम्बरो न्यरुणत् हृदयाम्बरम्। दिवसे चैकस्मिन् कृतवान् देवालये कस्मिंश्चन स्थितिम्। आसीच्च सहचरान्वेषणे दत्तचित्तः। इतः परमेवाभूत् सुप्रभातम्। उदियाय च भगवान् स कुण्डलीकुर्वन्निवाखण्डलदिशं, प्रियमारचयन् पुण्डरीकपटलस्य, शोकं मोचयन् कोकलोकस्य, अवलम्बो रोलम्बकदम्बस्य ग्लापयन् कैरवकुलं, सन्तापयन् घूकसङ्घं, दापयन्निवावसरं रजनीरमण्यनवरतविहारश्रान्तस्य निशाकान्तस्य विश्रामाय, प्रबलयन्नुत्साहं मानवानां प्रगेतनकर्मकरणाय, प्रोत्सारयन् तिमिरततिम्, विशदं विषादमनुभावयन् रसिकानां रतिविलासस्य समापनं विधाय, रक्तरश्मिः सहस्ररश्मिः। तस्मिन्नेव सुप्रभातमये समये पर्यवेदयत तेन यच्चत्वारो वणिजो, ये च रात्रावपि तस्मिन्नेव सुरमन्दिरे विशश्रमुः, पर्वतमारोहन्ति। वणिग्भिस्तैः कुतो गंस्यते भवद्भिरितिपृष्टो मिश्रः समचकथत्, उदयपुरं यास्यामीति। त ऊचुः—अस्माभिरपि तु तत्रैव गम्यते, चल्यतां सार्धमेव। मिश्रस्तु कामयाञ्चक्र एवैतत्। तैः साकमेव गन्तुमारेभे। मार्गे पृष्टं मिश्रेण यदिदानीं कियद्दूरं विद्यत उदयपत्तनम्? वणिजो बभणुः—कियद्दूरं किं सम्प्रति, सन्ध्यां यावत्सं प्राप्स्यामः। इयं निखिलापि धरा राणाधिकृतैव तु वर्तते। एवंविधां विदधाना वार्तां ते पञ्च यात्रिणो यान्तिस्म। पर्वतस्य वाटः, काठिन्यकुण्ठितमारोहणम्, क्रोशावधि जनवसतेः सर्वथाभावः, किन्तु साम्प्रतमारोहणं समाप्तिमेति स्म। समजायत नेदीयस्येव समा भूमिः। इतः परमेव परमरमणीयायामधित्यकायां न्यधीयन्त पदानि। यस्याश्चोभयतः समासन् किञ्चिदुत्तुङ्गाः पर्वताः। हरिततरुवरराजी राजते स्म परितः। मध्ये च कलरवायाः स्वल्पपयःपूरप्रवाहिण्याः प्रवाहिण्या मुकुरनिभः स्वच्छ-स्वच्छो जलनिर्झरः शिखरिशिखराणि शुक्लयन् वनावनौ प्रवाहितो भवति स्म। अस्या एव तरङ्गिण्या अनुतीरं मनुष्यैर्व्रज्या क्षुद्रव्रज्यावर्तिष्ट। तद्व्रज्यया व्रजितारं न केऽपि तावदवलोकयितुं पारयन्तिस्म यावन्नेक्षन्तेस्म शृङ्गिशृङ्गमारूढाः। अस्मिन्नेव जनविहीनेऽध्वनि प्रतिष्ठमानं मेदिनीमण्डनायमानं भूमिदेवं सहचरेषु तेष्वन्यतमो न्यगदत्—भवतां सन्निधाने कियद्धनं विलसतीति। समाकर्ण्येदं विस्मयेन भयेन च स्तब्धेन मनसि मिश्रेण समचिन्ति च-सम्भाव्यते भीतिरत्र लुण्टाकानां, कारणादेतस्मादेव सावधानं मां संविधातुं जिज्ञास्यतेऽमुना। किन्तु दुर्बलस्य बलं केवलमनृतमिति भणितिं चरि-

तार्थयता मिश्रमहोदयेन प्रत्यभाणि-यद्वयं भिक्षामात्रजीविनोऽग्रजन्मानः, कुतस्तरामस्माकं धनसम्भवः। वणिजाप्यभ्यधायि-किञ्चिदपि वित्तं विद्येत चेत्तर्हि ददत्वस्मभ्यमितरथा युष्माकं सन्निधाने स्थास्यत्यपि न। निशम्यादो विभयाञ्चकार भूदेवः, ऊरीचकार च कापथ्यम्। कदाचन हि चिन्तयति-यदि रत्नवलयमेभ्यः प्रयच्छेयमहं तर्हि सुरक्षितं सन्तिष्ठेत। कदापि शोचति-नाहमेतान् परिचिनोमि न च जानामि, तदेतेषां विश्वास एव कीदृशः। एवंविधानेव विचारान् बहुशो विविच्य पुनरभ्यदधात्—'मदुपकण्ठे किं वर्तते, भैक्ष्यमात्रं धनमस्ति'। किन्तु संसारस्य नियमोऽयं समुल्लसति यदापदनेहसि यो मानसं बहुषु पथिषु पथिकायितं विदधाति स एव भवति हन्यमानः। तदनुसारं हि बुबुधिरे भृतवैश्यभूमिकाश्चौरा यदस्याभ्यर्णे नूनं काचन विपुला धनसम्पदस्तीति। अतएव विधीयन्ते वार्ता एतादृश्यः। अवगमनात्परं हि को विलम्बावलम्बस्तेषामासीत्। लुण्ठकेनैकेन विधृत्य ब्राह्मणो न्यपात्यत, वक्षसि च तस्य समारुह्यत, चीत्कारकरणभिया मुखमवरुध्यत हस्तेन, मिश्रमहाशयस्य यदा प्रवचनसामर्थ्यमपि व्यनश्यत्तदा दीनोद्धारकभगवतो नामस्मरणमपहाय-किमपिनान्यत् कर्तुमपारयत्। द्वितीयेन दस्युना तस्य धनभारभरिता गोणी समाक्रम्य समासादि, समदर्शि च तत्र यदेकं रत्नमयं कटकम्, द्वे पत्रे द्वावेव दीनारौ विनिबद्धौ वर्तेते। द्रव्यजातानि तानि कटिसात् कृत्वा सहचर एको व्याहारि—सम्प्रति नास्ति किमपि प्रयोजनं ब्रह्महत्यायाः। या काचन धनसम्पत्तिरासीत् सा गृहीता साम्प्रतं फणत्वयम्। सहचरेण सम्प्रदत्तमुत्तरम्—नो, मोचनं न समीचीनतां समाश्रयिष्यति, समुज्झितोयं कलयिष्यति कोलाहलम्, जानाति भवान् यद्यत्वे राजसिंहस्य कीदृशः तपति जगति प्रतापतपनः। तद्भीत्या चौरैः स्वोदरभरमात्रमप्यन्धो नासाद्यते। तदायान्तु, एतमेतस्यैव तरोर्मूले वध्नीमः, स्थानाच्चास्मात् गच्छामः। विचारोऽयं सर्वेषामपि तेषां तस्कराणां हृदयङ्गमः समजायत। अतोऽनन्तमिश्रस्य करौ चरणौ मुखञ्च तस्यैव वस्त्रेण बद्ध्वा एकेन निकटस्थेन क्षोदीयसा वृक्षेण तं ववन्धुः। नीत्वा च पत्राभूषणादीनि तानि समीपस्थयैव लघीयस्या सरण्या मध्येपर्वतकं तिरोदधुः। समये तस्मिन् विहिताश्वारोहणः पुरुष एकः शिलोच्चयकूटस्थितो घटनामेतां समीक्षमाण आसीत्, परं न धावन् अन्यमनस्कैस्तैरपारि समवलोकयितुम्। तेन तदयनं परिहाय च वनसरणिः समाश्रिता येन कश्चिदपि नेक्षेत। किञ्चिदेव दूरं गत्वा च कस्यांचन शून्यायां गुहायामन्तरधायि। एतद्गुहान्तरे शयनाशनपाकनिर्म्माणादीनां सकलानामपि सौविध्यमासीत्,

दर्शनादेव हि विदितं भवतिस्म यदेते कदाप्यत्र वासमारचयन्ति, यतो हि तत्र पयःपूरितो घटोऽप्यविद्यत । पाटच्चरा हि स्थानमेतत् समासाद्य ताम्रकूधूमं पपुः । तेष्वेकश्च भोजननिर्मितिसम्भारराशीकरणे समभूत् संनद्धः । तदा ह्येकः समभिहितवान्–माणिक्यलाल ! भोजननिर्माणन्तु पश्चादेव भविष्यति पूर्वमायाहि, वित्तस्य प्रबन्धादि कुर्याव । माणिक्यलालेन निगदितम्–प्रथममेतेनैव भवितव्यम् । अतो दीनाराणां चत्वारि शकलानि सम्पादितानि मिथो विभाजितानि च ।

रत्नकटकार्थं चादो निश्चिक्युः-विक्रीय मूल्यं भविष्यति विभक्तम् । किन्तु पत्राणां किं करणीयमिति निर्धारयितुं प्रावर्तिषत । दलपतिना भणितम्—कर्गजस्य किं विधास्यामः, संदह्य च निक्षिपन्तु । एतदर्थमेव माणिक्यलालाय पत्राणि तानि दत्तानि दलाध्यक्षेण । माणिक्यलालो हि किमपि लेखनं पठनमपि जानातिस्म । अतस्तानि पठित्वा नितान्तसन्तुष्टस्वान्तो निजगाद-पत्राण्यमूनि न दहनीयानि,अमीभिस्तु वाणिज्यं संचालयितुं शक्यते । निशम्यैतत्ते त्रयो मलिम्लुचाः किं किमिति समभिदधुः। माणिक्यलालेन-चञ्चलकुमार्या वृत्तान्तः संश्रावितः । तदामोषकनिचयोऽमन्दानन्दसन्दोहमध्यगच्छत् । माणिक्यलालेन पुनरपि न्यगादि-यदिमानि पत्राणि राणा-राजसिंहाय यदि दीयेरन् तर्हि परिप्राप्येरन् पारितोषिकाणि । अध्यक्षेण प्रत्युत्तरितम्—उन्मत्तोऽसि ? जिज्ञासां यदि कदाचन समनुतिष्ठेत् राणामहोदयो यदेतानि कुह समासादितानि, तदा किमुत्तरिष्यसि किमु समभिधास्यसि तम्, यत्पथिकहननं विहितमिति, तदा पुरस्कारस्थाने दण्डमेव प्रचण्डं लप्स्यसे ! अतः पादशाहाय देयानीमानि, यतो हीदृशवार्तागवेषणसंवेदनेन प्रचुरा धनसम्पल्लब्धुं शक्या । ततः—वार्तेयं समाप्तापि नाभूत्, तस्मिन्नवसर एव गदितुः शिरः शिरोधेः पृथग्भूत्वा मेदिन्यां नर्तनमारेभे । यस्य सैन्धवारोहिणो वृत्तान्तः पूर्वं विलिखितस्तेनैव धराधरोपरिभागतो ददृशे-चत्वारो मनुतनुजा मनुष्यमेकं सम्बध्य धावन्ति स्मेति । इतःपरं किमजनीति न तद्दूरस्थस्य तस्य बुद्धिगोचरमभवत् । अतस्तूष्णीं भूत्वा समीक्षाम्बभूव यदेते व्रजन्ति कुतः ? ततो यदा ते कुम्भीलकाः पयस्विनीतः परावृत्य गिरिगह्वरेष्वन्तर्हिता बभूविरे, तदाऽयं वीरवरोऽश्वतोऽवरुह्य समुवाद—विजय ! मया सम्प्रत्येव समागम्यते, त्वयात्रैव स्थातव्यम्, न च हेषितं विधातव्यम् । तुरगो हि स्थैर्येण स्थितिमकलत्, तुरङ्गवाहश्च महीयसा रंहसा महीधरावतरणया प्रचचाल, तुरङ्गमारोढा हि मिश्रमहाशयस्य निकटमाजगाम, तस्य बन्धनमुत्कृत्य च पर्यपृच्छत्-निगदतु किम्वृत्तमिति । मिश्रवरो हि न्यगादीत्—यदहं चतुर्भिर्जनैः सार्धं समागच्छन्नासम्,

तैर्वर्त्मन्यहं प्रोथेस्म यद्वयमर्या इति। अतो मया विनैव संस्तवं विश्वस्तम्, किन्त्वत्र सम्प्राप्तं मां तेऽर्धमृतं विधाय यत्किमपि मत्सन्निधाने आसीत्तन्निखिलं नीत्वा दुद्रुवुः।

अश्वारोहकः—भवतां सन्निधाने किम्,—किमासित्? मिश्रवरः–महाराज! एकं मुक्तावलयम्, द्वौ दीनारौ द्वे पत्रिके च आसन्। अश्वारोहकः—साधु, भवानत्रैव तिष्ठतु, जङ्गम्यतेऽयं जनस्तानन्वेष्टुम्। मिश्रवरः—भवन्तः कथङ्कारं तानन्वेष्टुं शक्ष्यन्ति, ते चत्वारः, भवांश्चैककः। अश्वारोही—(साभिमानम्) अस्या नास्ति काचन चिन्ता वार्तायाः, वयं राजपुत्राःस्मः। अनन्तमिश्रेण हि विवेचितं यत् निःसंशयमयं कोऽपि योद्धा वरीवर्ति, यतोह्यस्य कटौ कृपाकृपणः कृपाणः, पाणौ च विलसति परप्रतर्दनः प्रासः।

राजतनयो हि येन पथा ऐकागारिकान् धावतो ददर्श तस्मिन्नेव मार्गे अतिसावधानतया गन्तुमारब्धवान्, किन्तु अटव्या मध्यभागं समासाद्य कुहचन गमनीयमिति न निश्चिकाय न च परास्कन्दिनामेव चरणान्यलब्ध। अतो भूयः शैलशिखराध्वानमूरीचकार। प्रचलंश्च कियदनेहसोऽनन्तरम्-इतस्ततो यदा प्रससार नयने तदा निभालयामास-यत् किञ्चिद्दूरे चत्वारो जना वने तिरोभूय-गच्छन्तः सन्तीति। अतस्तत्रैव स्थित्वा न्यभाल्यत वीरवरेण-यदेते कुतो यन्तीति। ततोऽबोधि तेन-यत्ते एकस्य पर्वतकस्य नीचैर्गत्वा लुप्ताः समभवन्। तदा व्यचारयत् राजतनयो "यदेते तत्रैव तिष्ठन्ति निभृताः द्रुमैश्छन्नाश्च न नयन-विषयीभवन्ति, किञ्च तत्र काचन दरी भवेत्, यस्यामन्तर्हिता वर्तन्ते।" राजपुत्रोहि मानुष-वसतिपरिचायिकान् वृक्षादीन् चिल्लादिपक्षिणश्च लक्ष्यीकृत्य पन्थानं समवाबुध्यत्। अतो भूयो निम्नभागे गमनमारभत। ईदृग्विधेन चातुर्येण संलभ्य तन्निर्दिष्टस्थानं सम्भालयाञ्चक्रे-काचन गुहा विद्यते यस्यां मानवानामपि कल-कलः कर्णगोचरीभवति। तेन अस्मिन् समये चेतसि व्यचिन्ति-यदेते चत्वारो जनाः, अहञ्च निःसहायः, गुहान्तः प्रवेशः समुचितो न वा, यदिते गुहाद्वारमवरुध्य युद्धमाकलयिष्यन्ति तदा रक्षायाः को वा प्रयासः संभविता! किन्तु, वास्तविकस्य राजपुत्रस्य हृदये एतादृशा विचाराः कियन्तं कालं स्थातुमर्हन्ति? मृतिमात्रमेव तु भयम्, तद्धि वीरवरं तं कथमवरोद्धुमीष्टे, अतस्तद्विचारसमकालमेव एतेऽपि विचाराङ्कुरा मानस-क्षेत्रे तस्य प्रादुरभूवन्—द्वौ तु गमनानुपदमेव व्यापादयिष्यामि पश्चाद्भविष्यति यत्तद्द्रक्ष्यामि, परं यदि ते न भवेयुः पाटच्चरास्तदा निरपराधानां हत्यापि नौचित्यमालम्बते।

ते लुण्ठितधनविभाजनस्य मीमांसां कुर्वाणाः—समासन्। अतो राजपुत्रेण गुहाभ्यन्तरगमनमेव समुचितममन्यत। कुठारस्तु तूष्णीं संस्थापितः, कौक्षेयकं निष्काश्य दक्षिणेन शयेन जगृहे, वामहस्ते च भुशुण्डिका सन्धारिता। यस्मिन् समये राजकुमारी-पत्रोपरि धनलाभाशया सर्वे मग्नाः समास्थिरे आनन्दाम्बुधौ तदैव सोऽश्वारोहश्चरणध्वनिवर्जनपुरस्सरं गुहाभ्यन्तरं समाजगाम, ददर्श च यद्दलाध्यक्षो गुहाद्वारि कृतपृष्ठः स्वैरं व्याहरतीति। अतस्तस्य मुण्डन्तु झटिति राजपुत्रेण खण्डितम्। बाहुबलमेतत् कथ्यते-यदेकवारप्रहारेणैव-शिरो द्विधाकृतम्। ततो हि निकटस्थो द्वितीयो दस्युरपि यदा मुखं तदभिमुख-मकरोत्, तदा राजतनयेन तन्मस्तकोपरि अपि ईदृशः पादप्रहारो व्यधीयत येन मूर्च्छितः स भूमौ निपपात। अवशिष्टयोर्द्वयोरेको जनो यदा मारयितुमेकं शिलाशकलमुत्तोलयितुं समुदयंसीत् तदा तमपि धराशायिनं व्यधत्त सः। अवसरेऽस्मिन् माणिक्यलालः अवशिनष्टिस्म। तेन हि कमप्युपायं नावेद्य गुहातो वहिरागम्य नितान्तं परिश्रान्तेन काननमार्गः समालम्ब्यत। राजपुत्रेणापि कथङ्कारं क्षम्यतेस्म, तत्क्षणमेव माणिक्यलालः अनुयये। अस्मिन्नेव काले यस्मिन् स्थाने राजपुत्रेण पूर्वं कुठारस्संस्थापित आसीत्, तदुपर्येव माणिक्यलालस्य सम्पतितौ चरणौ। कुठारं तं स सत्वरमुत्तोल्य पृष्ठतोयायिनोऽभिमुखं चक्रे व्याजह्रे च—वरं महाराज! वरं परिचिनोम्यहं भवन्तमतः शान्तेन भवितव्यम्, अन्यथानेनैव परशुना शिरश्छेत्स्यामि। राजपुत्रेण विहस्य प्रोचे छेदनन्तु किं कर्तुं शक्यते, प्रहरणमेव त्वया तु न पार्यते समनुष्ठातुम्। अस्तु—अस्माकमेव विक्रमं निरीक्षस्व-कथयित्वैतत् लौहनलिकया प्रहारस्तस्य वामेतर-हस्तोपरि समन्वष्ठीयत। यस्याघातेन झटिति हस्तच्युतो बभूव कुठारः। कुठारं राजपुत्रः संगृह्य माणिक्यलालस्य शिखां विधृतवान्, कृपाणं निष्काश्य च तस्य शिरश्छेदं विधातुमुद्यतवान् तदा दस्युना कातरस्वरेण समवादि—महाराजाधिराज! ममप्राणरक्षणं विधानीयम्, अहमत्रभवतां शरण्यः संवृत्तोऽस्मि। राजपुत्रो हि शिखां परिमुच्य न्यगदत्—मरणात् कथमेवं बिभेषि। माणिक्यलाल उदतरयत् न हि मरणादहं भयमाकलयामि, किन्तु एका सप्तवर्षदेशीया कन्या विद्यते जनन्यपि तस्याः नास्ति ततो मयैव पाल्यते पोष्यते च सा, प्रातः भोजयित्वा पाययित्वा च पानीयं समागतोऽस्मि। सायं भूयो गमिष्यामि भोजयिष्यामि च, तस्या अवनं हि मदायत्तम्। मयि सति कीनाशनिकेतनप्राघुणिके तस्या जीवनमतिकाठिन्यमावहति। अतः पूर्वं सा मारणीया, तदनु च मे मरण-स्वीकारः, इति निगदत एव वर्षन्ति स्माश्रूणि नय-

नानि । तानि प्रोञ्छ्य भूयो बभाषे-भूमि-भूषण ! भवतश्चरणौ संस्पृश्य शपामि-यदतः परं चौर्यं न कदाप्याचरिष्यामि यदवधि च जीविष्यामि तदवधि भवतश्चरणपरिचर्य्यायामेव स्थास्यामि, करुणाकरस्य भगवतः कृपया च कदाचिदुपकृतिः काचन मत्तोऽपि संभविष्यत्येव । क्षत्रियकुमारः—त्वमस्मान् जानासि किं भोः ! दस्युः—क एतादृशः—यो महाराजाधिराजं वीरवरं सर्वतो दोधूयमानध्वजं राजसिंहं न वेत्ति वराकः । राजसिंहः—अस्तु–तुभ्यं दीयते जीवनदानम्, किन्तु ब्राह्मणधनमपहृतं त्वयेति दण्डं विनापि मोचनं राजधर्म-विरुद्धम् । माणिक्यलालः—धरणीनाथ ! दुष्कृतमिदं प्रथममेव कृतं मयेति प्रचण्डो दण्डो न देयः—एवमभिदधान एव स्वीयकटिप्रदेशाच्छुरिकामेकां निष्काश्य तर्जन्युपरि प्राहरत् । परं न तयासिधेनुकया अस्थि छिन्नमिति प्रस्तरे एकस्मिन् निजाङ्गुलिं विन्यस्य तस्याञ्च छुरिकां निधाय द्वितीयपाणिना पाषाणखण्डमेकमुत्तोल्य तामकुट्टत । तेन छिन्नाङ्गुली पपात । ततश्च दस्युना प्रोचे-महाराज ! दण्डः सम्भूतः । राजसिंहः-(सविस्मयमात्मगतम्) अहो अनेन स्वहस्तेन निजाङ्गभङ्गो व्यधायि, किन्तु न किमपि कातर्यमवालम्बि । (प्रकाशम् । साधु, एष एव दण्डो बहुः, सम्प्रति स्वीयं नामधेयन्तु गदनीयम् । दस्युः—महाराज ! महापातकिनोऽस्य जनस्य नाम "माणिक्याल" इत्यस्ति, यो हि क्षत्रिय-कुलकलङ्को विद्यते । राजसिंहः—साधु, माणिक्यलाल ! अद्यप्रभृति भवान् मदीयः सेवकः समभवत् । अश्वारोही अश्वारोहि-सैनिकेषु गणनीयो भूतः । स्वीयां कन्यामादायमानीय उदयपुरं गच्छतु-तत्र भवता निवासाय भूमिः संप्राप्स्यते । माणिक्यलालेन राजसिंहचरण-रजः स्वमस्तकोपरि विन्यस्तम् । तं तत्रैव स्थितं विधाय गुहां गत्वा मुक्तावलयं, स्वर्णमुद्राः—द्वे ते पत्रे च समानीय तेषां पुरतो न्यधायिषत विनयपुरस्सरं न्यवेदि च यदस्माभिर्ब्राह्मणसकाशात् यद्धनमासादितं तच्छ्रीचरणेभ्यः समर्प्यते । पत्रे एते भवते एव लिखिते परं मया संवाचित इत्यपराधो मर्षणीयो मामकीनः । राजसिंहेन नीत्वा यदापाठिषातां, तदावेदि यत्स्वीयमेव नाम पत्रशिरसि समुल्लसतीति । प्रत्यवादि नास्ति पठनोचितं स्थानमिदमिति पुनः पठिष्येते, साम्प्रतं मया साकं समायातु भवान् । यतो मार्गमत्रत्यं सम्यग्भवान् वेद । माणिक्यलालेन हि याहीत्यभिधायि धुरि चेले च । राजसिंहेन मनसि विचिन्तितम्—अयन्तु भग्नकरेऽवधानमपि न ददाति न च तद्विषयस्य चर्चामेव करोति किमन्यत्-मुख-विकृतिमेव न करोति, पुनः-कथं न व्याहरणीयं साहसिकोऽयं जन इति । अस्तु जनत्रयी सा वनमार्गेण तीव्रवाहिन्या धुन्या रोधसि परमरमणीयं किञ्चन स्थानमध्यगच्छत् ।

—:०*०:—

## प्राप्तपत्रप्रतिध्वनिः ।

—:※:—

### विदुषां समक्षे इदं निवेदनम् ।

१—जन्माष्टमीप्रभृत्यवसरेषु, इदं वैष्णवानाञ्च इति पृथक् पृथग् निर्णयो दृश्यते । तत् प्रथमतः के स्मार्ताः के वा वैष्णवा अस्य सम्यग् निर्विवादनिर्णयाय जिज्ञासे । २—विगतश्रीकृष्णजन्माष्टमी पूर्वदिने परदिने वा स्मार्तानामुपालनीयासीत् सपारणम् निर्णयः कार्य्यः । ३—विगतजीवत्पुत्रिका-व्रतं पूर्वदिनेपरदिने वा उपासनीयमासीत्? अत्र "यत्रोदयं वै कुरुते दिनेशः" तथा "प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः" एतयोर्वाक्ययोः ससामञ्जस्यं सपारणम् सप्रमाणञ्च निर्णयः कार्य्यः । ४—कलशस्थापनावसरे बहवः पुरोधसः कर्मकाण्डिनो विद्वांसो वा कलशोपर्य्येव दीपं स्थापयन्ति । कलशोपर्य्येव दीपस्थापनं वा अन्यप्रदेशे दीपस्थापनं चेति कस्यां पद्धतौ लिखितमस्ति । इयं विवेचना सम्यग्रूपेण सप्रमाणं कार्य्या । ५—कस्मिन् स्मृतिग्रन्थे आचार्य्याणां संगृहीतवाक्यावसाने ग्रन्थकारमतेन निर्विवादो निर्णयो निर्दिष्टः ?

उपर्युक्तानां प्रश्नानामुत्तराणि कृपया 'सूर्योदये' प्रकाशनीयानि ।

विदुषां दासः—ओझोपाह्वः श्रीरामजीशर्मा ।

———

### पञ्चाङ्गवैमत्याद्धानिः ।

विदाङ्कुर्वन्तु संस्कृतभाषाहितैषिणो विद्वांसो विशेषतो दैवज्ञाः यत् किल वर्तमान १९८८ सम्वत्सरीयपञ्चाङ्गेषु व्रतादिनिर्णयवैमत्यात् पञ्चाङ्गमनुसरतां दैवज्ञानां समाजे कियान् कोलाहलः समुपस्थितः, बहुत्र दण्डादण्डि-युद्धमपि संजातम् ।

एतेनावशिष्टापि दैवज्ञानां प्रतिष्ठा विलयं याति । फलाफलकथने यादृशी मर्य्यादा एतेषां जनैर्विधीयते सा कैश्चिदप्यविदिता नास्ति । यदि व्रतादिनिर्णयविधावपि एवं स्यात्तदैतेषां कुत्र निर्वाहसम्भवः ? एतदपि नाविदितमास्ते विदुषां यत् सर्वत्र एवंविधाः पण्डिता न सन्ति ये धर्म्मशास्त्रादिकं निरीक्ष्य व्रतादिनिर्णये तथ्यातथ्यविचारं कर्तुं प्रभवेयुरतस्ते पञ्चाङ्गलिखितमेवानुसरन्ति । परन्तु पञ्चाङ्गकारैस्तु स्वपञ्चाङ्गे स्वस्वपाण्डित्यं द्वैविध्येन जल्पितम् । यथा विश्वपञ्चाङ्गे जीवित्पुत्रिका आश्विनकृष्णाष्टम्यां सोमे निर्णीतास्ति, गणेशादिपञ्चाङ्गे तु

( अवशिष्टमावरणस्य ९९ पृष्ठे द्रष्टव्यम् )

इदमेवेह जगति मृत्युशब्दवाच्यं जन्मान्तर-शब्दवाच्यं वोच्यते। एतस्य प्रधानं कारणं भोग एवोच्यते। एषां त्रयाणामपि फलानामुपादानं श्रीमता महर्षिपतञ्जलिनाऽपि योगशास्त्रे कृतम्—तथा हि—

'सति मूले तद्विपाको जात्यायुर्भोगः' ॥ इति ॥

एषु सर्वेष्वपि भोगस्यैव मुख्यत्वम्। यतो हि भोगसमाप्तिनिमित्तादेव जीवो जन्मान्तरं पिण्डान्तरं वा गृह्णातीति सुनिर्णीतः पन्थाः।

प्रकृति-वैभवानामनन्तवैचित्र्यपरिपूर्णवत् भोगवैचित्र्यस्याऽपि नास्ति सीमा। तथापि शास्त्रकृद्भिः महर्षिभिः गुणविचारणया सात्त्विक-राजस-तामस-भेदेन त्रिधा विभागो भोगानां परिदर्शितः। अन्यतोऽपि सुख-दुःख-मिश्ररूपेणापि त्रिविधो विभागो विहित एवास्ते ॥ १७३ ॥

जन्मान्तरगतिं विस्पष्टयितुमिदमुच्यते—

**आतिवाहिकवैलक्षण्यं संस्कारवैलक्षण्यात् ॥ १७४ ॥**

ननु जन्मान्तरगतिसम्बन्धतो जायमानो जीवानाम् आतिवाहिको देहः समानो भवति, आहोस्वित् विभिन्नो भवतीति शङ्कायामुत्तरयति—आतिवाहिकेति—संस्काराणां वैलक्षण्यात् वैचित्र्यात् आतिवाहिकानां शरीराणामपि वैलक्षण्यं सिध्यत्येवेति सूत्रार्थः। तथा हि—

तमोभावापन्नानां चतुर्विधानां भूतसङ्घानां ये जीवाः सन्ति तेषामातिवाहिका देहा जडत्वविशिष्टा एव भवन्ति। मनुष्यत्वमधिगतेष्वेव जीवेषु तेषामातिवाहिकदेहानां तज्जाड्यमपसरति। परन्तु अस्यामुन्नतावस्थायामपि आतिवाहिकदेहानां बहवो भेदा भवितुमर्हन्ति। तथा हि—यमदूता यदा जीवान् मृत्युलोकतो नयन्ति प्रेतलोकं, तदाऽन्यविधैवातिवाहिकदेहावस्था भवति। यदा च ताञ्जीवान्नरकलोके प्रापयन्ति तदाऽन्यथैवातिवाहिकानां तद्दीयदेहानामवस्था भवति। इत्थमेव देवदूतै र्देवलोके समुपस्थापितानां जीवानामातिवाहिकदेहावस्था भिन्नप्रकारिकैव सञ्जायते। अतश्च स्वाभाविकास्वाभाविकशुभाशुभसंस्कारेषु वैलक्षण्यदर्शनात् तत्सम्बन्धत आतिवाहिकदेहेष्वपि वैलक्षण्यसमुद्रेकः सुनिश्चित एव ॥ १७४ ॥

प्रसङ्गादभिधत्ते—

**संसरणमातिवाहिकेन ॥ १७५ ॥**

भोगार्थं जन्मान्तरावाप्तिं लोकान्तरप्राप्तिं वा सूक्ष्मशरीरमेव विदधाति, स्थूलशरीरन्तु यस्य लोकस्य भवति तस्मिन्नेव लोके स्वप्रधानोपादानकारणे

विलीनं भवतीति पूर्वमेवोक्तम् । इदानीमनेन सूत्रेणेदमेव विवृणोति यद् आतिवाहिकं शरीरं स्वसूक्ष्मशरीरेण धृत्वा जीवो लोकाल्लोकान्तरं व्रजति । यथोक्तं श्रीमद्भागवते—

यातनादेहमावृत्य पाशैर्बध्वा गले बलात् ।
नयते दीर्घमध्वानं दण्ड्यं राजभटो यथा ॥इति ।

तात्पर्य्यतो जीवानां केभ्यश्चिदपि लोकेभ्योऽस्मिन्मृत्युलोके समागमने, आहोस्विदितो मृत्युलोकात् परस्मिन् कस्मिंश्चिदपि लोके समुपस्थितौ, अथवाऽन्यत्रैवैकस्माल्लोकाल्लोकान्तरगतौ, इत्थंविधे संसरणादिकार्य्ये आतिवाहिकदेहं विना सौविध्यमेव न सम्भवति । अतश्च जीव आतिवाहिकं देहं स्वसूक्ष्मशरीरोपरि समाच्छाद्य सर्वत्र लोकेषु गतागतं करोतीति सर्वसम्मतः सिद्धान्तः ॥१७५॥

लोकान्तरगतिं सुस्पष्टयितुं ब्रवीति—

**प्रेतत्वं मूर्च्छया ॥ १७६ ॥**

ननु शुभाशुभपुण्यपाप-परिणामरूपतः स्वर्गनरकलोकावाप्तिस्तु सर्वथा बुद्धावारोहत्येव । परन्तु तृतीयदशारूपं प्रेतत्वं कथं सिध्यति, कथञ्च तदुत्पद्यते इति शङ्कां समाधातुमिदमाह—मूर्च्छया प्रेतत्वं प्रेततामाश्रयति जीव इति ।

चतुर्दशसु भुवनेषु दैवासुरभोगविचारणया चतुर्दशापि लोकाः शुभभोगसम्पादनायैव निर्मिताः सन्ति । तत्र भूर्भुवःस्वरादय ऊर्ध्वलोकाः सप्त दैवसुखभोगसम्पत्तये अतलवितलसुतलादयः सप्ताधोलोका आसुरसुखभोगार्थं निर्मिता इति विवेकः । तेषु भूलोकान्तर्गतोऽयमस्माकं मृत्युलोकोऽस्ति । ननु अनेन सह साक्षात्सम्बन्धभाक् सुखभोगक्षम इहत्यो लोकः पितृलोक उच्यते । दुःखभोगायापि अनेनैव सम्बन्धभाग् एतदन्तर्गत एव नरकलोको विद्यते । इत्थञ्चाभ्यां पितृलोकनरकलोकाभ्यामेव सुख-दुःखभोगनिर्वाहे सिद्धे प्रेतलोकस्य तु किमपि प्रयोजनमेव न सिध्यतीति शङ्कायाः समाधानं कृत्वा जन्मान्तररहस्यं स्फुटं प्रतिपादयितुमाह—

सुखदुःखमयात्मिकाया द्विविधाया अपि गतेर्भिन्ना एका तृतीया गतिरपि विद्यते, यद्गतिभोगाश्रयो लोकः प्रेतलोको निगद्यते यां प्रेतत्वगतिं माहुर्महर्षयः । मूर्च्छातस्तस्या उत्पत्तिर्भवति । स च मृत्युलोकसान्निध्यभाग् इति श्रुतिरेव प्रमाणयति । तथा हि—

"ये सूर्य्यन्नतितिक्षन्त आतपन्तममुं दिवः ।
अरायान् वस्तवासिनो दुर्गन्धीं लोहितास्यान् ।
मककान् नाशयामसि" इति ॥

वेदोक्तोऽयं मन्त्रः प्रेतावेशं मोचयितुं प्रयुज्यते। गीतोपनिषद्यपि प्रेतत्व-साधकं प्रमाणमुपलभ्यते। तथा हि—

"प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः"

इत्यादिवाक्यकदम्बैः प्रेतयोनिः प्रमाणिता विद्यते। यदा जीवः स्थूल-शरीरं विजहाति तदा स चरमं प्रबलतमं संस्कारं स्वान्तःकरणे संगृह्यैव मानव-पिण्डं त्यजति। यथा सप्तस्वपि धातुषु पतितेनायस्कान्तमणिना केवलं लौहमेवा-कृष्यते, तथैव तेन चरमसंस्कारेण प्रबलतमेनाकृष्टा बहवः संस्काराः कर्माशया-दाकृष्टाः प्रारब्धशब्दवाच्या भवन्ति। तैरेव च भविष्यज्जीवनार्थं जात्यायु-र्भोगा निर्मीयन्ते। परन्तु जीवानां मृत्युवेलायां यदीयं सरला गतिर्न लब्धा स्यात्, तस्य पञ्चत्वमासादयिष्यतो जीवस्यान्तःकरणं चरमं प्रबलसंस्कारं संग्रहीतुं च न समर्थं स्यात्। केनाऽपि कारणविशेषेण मूर्च्छया समाक्रान्तः स मूर्च्छितो भवेच्चेत्तदा या गतिस्तेनासाद्यते सैव प्रेतत्वशब्दवाच्या गीयते।

प्रेतलोकोऽपि दुःखपूर्ण एव; किन्तु तत्रैतादृशी मूढावस्थाऽपि काचित्स-ञ्जायते यस्यां दुःखानुभवो नानुभूयते। इत्यत एवाऽयं लोकः स्वर्गनरकाभ्यां विल-क्षण एवेति ज्ञातुं शक्यते। प्रेतत्वं हि, अल्पीयसाऽपि समयेन भोक्तुम्पार्य्यते बहुना दीर्घेणाऽपि कालेन भोक्तुं शक्यते। अन्तत इदन्तु सर्ववादिसम्मतमस्ति यत् स्थूल-शरीरत्यागवेलायां जीवे केनापि विशेषकारणेनैव प्रेतत्वदशा संक्रा-मति ॥१७६॥

प्रकृतविषयं पुनरपि स्पष्टयति—

**असाधारण्यं तस्य ॥१७७॥**

दुःखमयस्य नरकलोकस्य, सुखमयस्य च बहुविधस्य स्वर्गलोकस्य गतिभ्यां प्रेतलोकस्य काऽपि विलक्षणैव गतिः श्रूयते। प्रथमतस्तु गतिरियं सर्वतोभावेन तमोगुणाश्रितत्वात् मूढगतिर्जेगीयते। द्वितीयतश्च मृत्युलोकसान्निध्यभागेव प्रेतलोक इति तत्र गतौ न दूरगमनापेक्षा, तृतीयतश्च स्वर्गलोके नरकलोके वा गमने जीवोऽन्यसंस्कारयुक्तमेव शरीरमधिगच्छति, इह प्रेतलोके तु न तथा। यतो हि प्रेतदेहः प्राक्तनमृत्युलोकस्थदेहानुरूप एव भवति। चतुर्थतश्च प्रेतशरीरे प्राक्तनः सर्वोऽपि संस्कारो जाग्रदेव तिष्ठति। अन्यस्मिंस्तु शरीरे नैवं भवति। इत्यादिकारणकलापैरिदमवश्यमभ्युपगमनीयं यत् प्रेतलोको हि सर्वेभ्योऽन्येभ्यो लोकेभ्यो विलक्षण एवेति ॥१७७॥

प्रसङ्गतः प्रेतश्राद्धस्य वैशिष्ट्यं ब्रूते—

**तस्माद्वैशिष्ट्यं प्रेतश्राद्धस्य ॥१७८॥**

को हि जीवः प्रेतो भवति, को न भवतीत्यस्य ज्ञानाभावात् सर्वेषामेव कृते प्रेतश्राद्धकल्पो विधीयते । उक्तञ्च महर्षिणा मरीचिना—

"प्रेतान् पितॄंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः ।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ॥"

इदं हि सर्वस्यापि श्राद्धस्य शास्त्रीयं लक्षणं विज्ञेयम् । एतद्धि श्राद्धस्य वैशिष्ट्यम् । विषयिणां मानवानां मरणानन्तरं प्रेतत्वं सुस्थिरमेवेत्यत एव प्रेतश्राद्धस्य विधिः श्राद्ध-प्रणाल्यामवश्यकरणीयत्वेनाङ्गीकृतोऽस्ति । को हि प्रेतो जातः कश्च न जात इत्यस्य ज्ञानं यदा साधारणबुद्धिधारिभि र्न कर्तुं पार्य्यते, तदा प्रेतश्राद्धं विधाय प्रेतत्वमुक्तिकरणोपायश्चावश्यं विधेय इति धर्माचार्य्याणां सिद्धान्तः । वस्तुतः प्रेतत्वप्राप्तिश्च मृत्युलोकतः प्रस्थानवेलायामेव भवति । अन्यै र्भोगलोकैः सह तस्य न कोऽपि सम्बन्धो ज्ञेयः । मानवः प्रेतत्वान्मुक्तो भूत्वा नरके स्वर्गे वा समुपसर्पति । ततश्च परावर्तनवेलायां प्रेतलोकस्य कोऽपि सम्बन्धो न भवति । अन्यच्च प्रेतत्वप्राप्ति र्हि अन्यलोकप्राप्तौ बाधिकैव गीयते । यतो हि मूर्च्छातस्तस्योत्पत्तिर्भवति । अतश्च प्रेतत्वनिवृत्तये यावन्त उपाया निर्णीतास्तेषां वैशिष्ट्यमवश्यमङ्गीकरणीयम् ॥ १७८ ॥

प्रसङ्गतः श्राद्धस्य विज्ञानं निर्वक्ति—

**श्रद्धामूलकं श्राद्धम् ॥१७९॥**

प्रेतश्राद्धस्यावश्यकत्वे सिद्धे तत्र श्राद्धविज्ञाने स्वत एव जिज्ञासोदेति इत्यतोऽभिधत्ते । श्रद्धा विश्वासो मूलं निदानं यत्र तद्धि श्राद्धं कथ्यते । फलतः श्राद्धक्रियाया अनुष्ठाने श्रद्धैव प्रधानं कारणम् । या हि मनोमये कोशे श्रद्धाजन्या क्रियोत्पत्ति र्भवति, तयैव क्रियया लोकान्तरगस्यान्यस्य जीवस्य तृप्तिर्भवति । सूक्ष्मं हि जगत् प्राणमय-मनोमयकोशाभ्यां परिव्याप्तम् । केवलम् अन्नमयकोश एव सर्वस्मिन्नपि लोके सर्वास्वपि अवस्थासु पृथग् विभिन्न एव तिष्ठति । वस्तुतस्तु अन्नमयकोश एव पिण्डशब्देनाभिधीयते । इदञ्च प्रागेवाभ्यधायि यदिह मृत्युभूमावन्नमयकोश एवावशिष्यते, अपरे तु चत्वारोऽपि कोशा लोकान्तरेऽपि गतागतमातन्वन्ति । क्रियाविचारतश्च मनसः सर्वेन्द्रियाऽऽधिपत्येन सर्वेन्द्रियसंचालकत्वेन च मनोमयकोशस्य प्राधान्यमूहनीयम् । इत्थञ्चैकपिण्डस्थमनोमयकोशेनान्यपिण्डग-मनोमयकोशस्य स्वजातिमूलकोऽतितरां घनिष्ठः सम्बन्धोऽप्यवसेयः । इत्यस्मादेव हेतो र्यदि कश्चित्सम्बन्धविशिष्टः

पुमान् पितृलोकगतं प्रेतलोकगतं वा स्वसम्बन्धिनं श्रद्धया स्मरति चेत्तदा सा तदीया स्मृतिस्तस्य स्वसम्बन्धिनो मनोमयकोशं शीघ्रमेव स्पृशति। ध्यातृध्येययो र्मनोमयकोशगतमावरणं दूरत्वं वा सा श्रद्धैवामूलमपसारयति। येन न तयोरन्तराले आवरणलेशोऽपि तिष्ठति। श्रद्धाबलेन मृत्युलोकस्थाऽपि मनोमयकोशशक्तिरन्यलोकीयमनोमयकोशं यावदुपतिष्ठति। तत्रोपेत्य च तृप्तिं सम्पादयति। श्रद्धायाश्च त्रयो भेदाः विज्ञेयाः। तथा हि—

प्रथमा तामसी प्रोक्ता द्वितीया राजसी मता।
तृतीया सात्त्विकी ज्ञेया श्रद्धैवं त्रिविधा स्मृता॥

तत्र विश्वासप्रधाना तामसी, जिज्ञासाप्रधाना राजसी, ज्ञानप्रधाना सात्त्विकी चेति विश्वास-जिज्ञासा-ज्ञान-प्राधान्येनैव ताः स्वकार्य्याणि सम्पादयन्ति। इत्थञ्च श्राद्धेऽन्धविश्वासबहुला तामसी श्रद्धैव बहूनि कार्य्याणि संसाधयति। यतो हि विश्वाससहचरी सा द्रुतमेव लोकान्तरेऽन्तःकरणस्य सूक्ष्मसूक्ष्मां गतिं प्रापयति। श्राद्धक्रिया विशेषतः साधारणगृहस्थानां कृते एव विहितास्ति। उन्नतानां तत्त्वज्ञानिनां कृते तु कृतायामकृतायां वा श्राद्धक्रियायां न विशेषतो हानि र्लाभो वा प्रत्यक्षतः समुपलभ्यते। यतो हि ते तत्त्वज्ञानिनो महात्मान आत्मारामा भवन्ति। इत्यस्मादेव हेतोः सन्यासिनां कृते श्राद्धस्य विधिर्नावलोक्यते। आत्मज्ञानिना पुंसा च स्मृता एव परलोकान्तरिता जीवा यथेच्छं शान्तिभाजः सन्तृप्ता भवन्तीत्यपि गीयते।

योगदृष्टिसम्पन्ना योगिनस्तु प्रत्यक्षं कुर्वते यच्छ्राद्धे समाहूताः प्रेतत्वभाजो जीवाः पितृलोकगामिनो वा जीवाः श्राद्धकर्त्रा श्रद्धयोपेतेन मनसा प्रतिपादितानि सर्वाणि वस्तुजातानि यथावद् गृह्णन्तीति। श्राद्धकल्पे च मनःशुद्धि-वाक्यशुद्धिद्रव्यशुद्धीनां तिसृणामपि समानमस्ति प्रयोजनम्। आसामेकस्या अपि वैगुण्ये श्राद्धे वैगुण्याशङ्का सम्भाव्यते। यथायोग्यं शास्त्रप्रतिपादितैः पदार्थजातै र्द्रव्यशुद्धिर्भवति। यथार्थमुच्चारितैश्च शास्त्रीयमन्त्रैर्वाक्यशुद्धिरवसेया। श्रद्धया च मनःशुद्धिः सम्पाद्यते। तत्रापि श्राद्धक्रियाया अलौकिकत्वविचारणया मनःशुद्धिप्रधानैव श्रद्धाऽभ्यर्हितेति सिद्धान्तः। केचन तु श्राद्धकल्पे वाक्यशुद्धिप्रधानां श्रद्धामभ्यर्हितामामनन्ति। तथा हि—

"पितरो वाक्यमिच्छन्ति, भावमिच्छन्ति देवताः। इति ॥ १७९ ॥

सिद्धान्तमिमं पुनर्द्रढयति।—

**तत्रातो मनःक्रियाप्राधान्यम् ॥ १८० ॥**

श्रद्धायाः मनोधर्मत्वात् सर्वप्राधान्याच्च श्राद्धक्रियायां मानसिक्या एव

क्रियायाः प्राधान्यमित्यभ्युपगमनीयमेव। मनसि जायमानायां शुद्धश्रद्धायां तस्य त्रिविधा शुद्धिः स्वयमुदेति। तया श्रद्धया तदाकारतामापन्नं मनः पवित्रं भवति। श्रद्धा भक्तिश्च श्रीमतो भगवतश्चरणारविन्दस्थानीये गण्येते। इत्यत एव श्रद्धाभक्तियुक्तमन्तःकरणं श्रीमद्भगवच्चरणारविन्दसन्निहितं भवति। इत्थञ्च स्वत एव श्रद्धया मनसोऽप्याधिभौतिकी शुद्धिर्भवति। श्रद्धायुक्तञ्च मनः कर्मनियामकानां देवानां कृपामाश्रयति, यतो हि तस्य दैवराज्येन सम्बन्धो जायते। ततश्चैकं पिण्डगं मनो द्वितीयपिण्डकार्य्यकृत् भूत्वाधिदैविकशुद्धिभाग् भवति। श्रद्धाबलेन च मनो यदा ऐकाग्र्यं भजते, तस्य विक्षेपसङ्घाः स्वयमेव विलयमृच्छन्ति, तदैव स जीवः शिवसायुज्यं प्राप्नोति, एषैव मनस आध्यात्मिकी शुद्धिरिष्यते। या च श्रद्धाबलेन स्वत एवासाद्यते। श्रद्धया त्रिविधशुद्धिविशिष्टे मनसि श्राद्धयज्ञे नियुक्ते सति तत्र यज्ञे मनःक्रियाप्राधान्यमेव भविष्यति अत्र कः सन्देहः।

श्राद्धयज्ञे मनोविज्ञानस्य प्राधान्यमिति अन्तर्दृष्टिसम्पन्नाः पुरुषास्तु प्रत्यक्षतो जानन्त्येव। परन्तु परलोकगामिभिरात्मभिः सम्बन्धस्थापनाभिलाषिणः परलोकतत्त्ववेत्तारोऽपि स्वल्पपरिश्रमेणैव तत्तत्त्ववेदिनो भवन्तीत्यपि विभाव्यमेव। प्रेतगणाश्च दूरवर्तिनोऽपि स्मरणमात्रेणैव नैकट्यभाजो भवन्ति। श्राद्धतत्त्वं हि मानसक्रियामूलकमिति, ये चात्मानो नैव प्रेतत्वमाश्रयन्ति तेषां कृतेऽपि कृतं श्राद्धं निष्फलं न भवति। यस्य श्राद्धो भवति स कस्मिन्नपि लोके कस्यामपि योनौ गतः स्यात्तदा तच्छ्राद्धीयं द्रव्यं तस्य तल्लोकयोनियोग्यभोगोपयोगिनः पदार्था भूत्वा तस्मिन्नेव लोके तस्यामेव योनौ तं श्राद्धोद्देश्यजीवं प्रीणयतीति शास्त्रीयःसिद्धान्तः। यथा तडित्प्रवाहमाश्रित्य एकदेशीयं रूपं शब्दं वा देशान्तरे गत्वा तत्तद्रूपशब्दस्वरूपेण परिणमते। तथैव श्राद्धान्नमेकस्माल्लोकाल्लोकान्तरे गत्वा मनसो व्यापकशक्तिप्रभावेण तत्तल्लोकीयभोग्यपदार्थरूपेण परिणमते। यथोक्तं स्मृतिशास्त्रे—

देवो यदि पिता जातः शुभकर्मानुयोगतः।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गान्धर्वे भोगरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति ॥
पानं भवति यक्षत्वे राक्षसत्वे तथामिषम्।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ॥
मानुषत्वेऽन्नपानादि नाना भोगरसो भवेत् ॥ १८० ॥

भूयोऽपीदं विज्ञानं द्रढयति—

**तस्माद्विशिष्यते तर्पणम् ॥ १८१ ॥**

तस्मात् श्राद्धतत्त्वे मनसः प्राधान्यात् तर्पणं मनोयोग-मूलक-जल-प्रदान-मात्र-साध्यं कर्म विशिष्यते विशिष्टं भवतीति सूत्रार्थः। श्रुतिसम्मतशास्त्रेषु तर्पणमहिमा बाहुल्येन गीयते। यथा शातातपस्मृतौ—

तर्पणं तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥

योगियाज्ञवल्क्येनाप्युक्तम्—

नास्तिक्यभावात् यश्चापि न तर्पयति वै सुतः।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः ॥

अनेन पितृभ्यः स्वदेहनिस्राव-प्रदानेन स घोरां पापयोनिमृच्छति। धर्म्माचार्य्याः तत्त्वदर्शिनो महर्षयोऽसमर्थानां साधकानां कृते तर्पणयज्ञविधानेन सुमहत् सारल्यं व्यदधुरिति महाकारुण्यं तेषाम्। तथा हि—दैवराज्येन सम्बन्धभाग्ब्रह्मयज्ञो दैवयज्ञः पितृयज्ञो भूतयज्ञश्चेति चत्वारोऽपि महायज्ञाः केवलमेकेन तर्पणानुष्ठानेनापि पूर्णतामधिगच्छन्ति। तत्र च तर्पणयज्ञे केवलस्य मनसो जलस्य चेत्युभयस्यैवापेक्षा विद्यते, नान्यस्य द्रव्यस्य तादृगावश्यकत्वम्। एतेन सिध्यतीदं यत्तर्पणयज्ञेन कीदृगलौकिकं कार्य्यं सिध्यतीति। इह तर्पणयज्ञे श्रद्धालुः साधकः केवलं श्रद्धाबहुलो भूत्वा जलमात्रावलम्बनेन स्वमनोमयकोशं चालयति, तदा तस्य मनःशक्तिः पितृलोके समुपेत्य पितृगणान्, देवलोके समुपस्थाय देवान्, ऋषींश्च तर्पयति। ततश्च तद्द्वारैव आब्रह्मस्तम्बपर्य्यन्तं जगत् तर्पयतीति समुदीरितं स्मृतिशास्त्रे—

आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः।
ते सर्वे तृप्तिमायान्ति पुंसा दत्तैस्तिलोदकैः। इति ॥ १८१ ॥

पुनरपि प्रकृतमेव विज्ञानं पुष्णाति—

**सिकतापिण्डमापदि ॥ १८२ ॥**

मनःशक्तेः श्रद्धायाश्च माहात्म्यमीदृक् प्रबलं विद्यते, यदापत्काले बालुकापिण्डेनाऽपि श्राद्धयज्ञः पूर्णतामासादयति। तत्प्रदानेनैव तत्तल्लोके पितृगणाः स्वभोग्यान्नमासाद्य तृप्तिमृच्छन्ति। एतदपि श्राद्धतत्त्वस्य श्रद्धामूलकत्वे प्रत्यक्षं प्रमाणमवसेयम्। तथा हि शास्त्रम्—

निर्धनो दुर्गतौ मग्नः पितृश्राद्धे समागते।
रुदन् सरित्तटे गत्वा बालुकापिण्डमन्ततः।

निर्वपेच्छ्रद्धयाविष्टः पितॄनुद्दिश्य भक्तितः ।
तेनैव पितरस्तस्य तृप्तिमायान्ति नैष्ठिकीम् । इति ।

वस्तुतः श्रद्धाशालिना मनसैव श्राद्धस्य सर्वमपि कृत्यं सिध्यति । तेनैव च साधु देवर्षिपितरस्तृप्तिमायान्तीति विज्ञानमिदं पूर्वसूत्रे साधु समर्थितम् ।

साधारणशक्तिमतां मानवानां केवले मानसयागे श्रद्धामूलके च श्राद्धतत्त्वविज्ञाने नैव विश्वासो दार्ढ्यमुपैति, नापि तेषां मनःशक्तिः केवलमनायाससाध्या, साधारणोपायसाध्या वेति तेषामेव श्रद्धामनःशक्त्युत्पत्त्यै श्राद्धयज्ञे बहूनां साधनानां विधानं, प्रयाससाध्या बहुवित्तव्ययकराश्चोपायाः सामर्थ्यवतां कृते समुपन्यस्ताः । इत्यत एव सर्वसाधनविरहितः पुमान् सत्यश्रद्धाविशिष्टः श्राद्धयज्ञमनुतिष्ठन् स्वासामर्थ्यमयोग्यताञ्च परिदर्शयन् दीनमानसस्तीव्रश्रद्धया मानसं बालुकापिण्डमेव निर्वपति चेत्, तस्यापि सम्पूर्णमेव श्राद्धयज्ञफलमुपतिष्ठते । अयं हि श्रद्धामहिमा मानसयज्ञस्य शक्तेरेवाविर्भावक इति सुतरां विमर्शनीयम् । उक्तञ्च शास्त्रेषु—

"उत्तमो मानसो यागो बाह्यपूजाऽधमाऽधमा" । इति ।

वस्तुतो बाह्यपूजायां समर्पिताः फलपुष्पनैवेद्यादयः पदार्थाः साक्षाद् दैवादिलोकान्तरे नैव गच्छन्ति । किन्तु केवलं तेषां पदार्थानां धारणायुक्तं मनः श्रद्धाबलेन संस्कृतं सत् रूपान्तरं कृत्वा तानेव पदार्थान् सूक्ष्मलोकान्तरं प्रापयतीति बाह्यपूजायामीदृशी प्रणाली कार्य्यसम्पादिका निगद्यते । मानसयागेन तु सर्वमपीदं द्रुतमेव साधितं भवतीति सरलः पन्थाः । परन्तु तत्र मानसिकयोग्यतायाः ध्रुवमावश्यकताऽपेक्षिता भवतीत्यपि विभावनीयम् ।

ननु मानस-यागस्याभ्यर्हितत्वेन बालुकापिण्डार्पणेनापि सिद्धे क्वापि श्राद्धे बालुकापिण्डार्पणतया समर्पयितुः पितृभ्यो बालुकैवोपतिष्ठते उतान्यत्, बालुकोपस्थितौ च कथं तेषां पितॄणां तृप्तिरित्यादिशङ्कायाः समाहितिमाह–यत् श्राद्धकर्ता हि विपन्निमग्नो बालुकापिण्डदानबुद्ध्या तु श्राद्धं न करोति । किन्तु श्रद्धालुः सोऽतिदारिद्र्यात् श्राद्धार्थं किमपि वस्तु स्वशक्त्या अलभमानो बालुकावलम्बनेन पिण्डं निर्माय मानसपूजया स्वपितॄन् तर्पयति । अपरतश्च पितृतृप्तिक्षमं पदार्थजातञ्च मनसैव समर्पयतीति नासामञ्जस्यम् । तात्पर्य्यत एवंविधे श्राद्धयागे मनःसंकल्पितानामेव पदार्थानां समर्पणं विधीयते ।

ननु शास्त्रादिषु यत् समुपलभ्यते—

"पितरो वाक्यमिच्छन्ति भावमिच्छन्ति देवताः"

इत्यस्य वाक्यस्यानेन विज्ञानेन सह कीदृक् सम्बन्धः स्यादिति प्रश्ने-

उत्तरयंति—यदस्य विज्ञानस्यावगतये प्रथमतः श्रद्धाभक्त्योर्लक्षणमवगमनीयम्। तथा हि श्रद्धा विश्वासमूलिका भक्तिश्चानुरागमूलिका; कुत्रचन क्रियायां क्वचन देशे काले पात्रे वा दृढविश्वाससत्त्वे श्रद्धोत्पद्यते। भक्तेर्मधुरः प्रवाहस्तु साधकस्यान्तःकरणतले तावन्न प्रवहति यावत्तस्य तदन्तःकरणं क्वचनेष्टविशेषे अनुरागप्रवणं न जायते। यतो हि शास्त्रेषु भक्तिविषये श्रूयते—

"सा पराऽनुरक्तिरीश्वरे"।

इत्यत इदं सिध्यति यद् देवताभिधे इष्टदेवे पूर्णानुरागे समुत्पन्ने सत्येव भक्तिरुदेति, भक्त्यैव च स इष्टदेवः प्रसीदति। उपासनायज्ञस्येदमेव रहस्यम्। पितृयज्ञस्य श्राद्धादिकल्पस्य तु किमप्यन्यदेव रहस्यमस्ति। तथा हि श्राद्धकल्पे साधारणतया श्रद्धोत्पत्तये वाक्यरूपमन्त्रोपरि विश्वासस्थापनमेव प्रधानम्। तर्पणश्राद्धरूपयज्ञेषु मानसयागस्य रहस्यानभिज्ञः साधारणो यज्ञकर्त्ता यावन्मन्त्रोपरि दृढं विश्वासं न प्रतिष्ठापयति तावत्तस्यान्तःकरणं श्रद्धासाहाय्येन त्रिविधां शुद्धिं नैवासादयतुमर्हति। अतश्च साधारणतया पितृयज्ञेषु वाक्यात्मकमन्त्राणामावश्यकत्वं स्वीकृतमास्ते ॥ १८२ ॥

पुनरपि प्रकृतमेव विषयं द्रढयति—

**संस्कारवैचित्र्यं कार्य्यकारणभेदात् ॥ १८३ ॥**

कार्य्यञ्च कारणञ्च ते तथोक्ते, तयोर्भेदात् संस्काराणां वैचित्र्यं वैलक्षण्यम् इति सूत्रार्थः। स्वाभाविकस्य संस्कारस्यैकविधत्वेऽपि अस्वाभाविकस्य तस्यानन्तं वैचित्र्यपूर्णं नानात्वं दुर्वारमेव। एतस्य तात्पर्य्यमस्ति यद् कारण-कार्य्ययोर्भेदस्तिष्ठति। संस्कारः कर्मणः कारणं भवति, कर्म च संस्कारस्य कारणं भवति। यथा बीजं वृक्षस्य कारणं, वृक्षश्च बीजस्य कारणमिति। इत्थञ्चास्वाभाविकसंस्कारेषु क्रमशः शनैःशनैर्भेदप्रसङ्गेन वैचित्र्यपूर्णतामाश्रितेषु कतिभिरेव संस्कारैर्नियमिता जात्यायुर्भोगा उत्पद्यन्ते। तैश्च जात्यायुर्भोगैरनन्तानां जात्यायुर्भोगानामुपयोगीनि कर्म्माणि निर्मीयन्ते, तैश्च वैचित्र्यपूर्णाः संस्काराः संगृह्यन्ते। अनेनैव प्रकारेण संस्काराणां विचित्रता वर्द्धते ॥ १८३ ॥

इदानीं शङ्कासमाधाने अभिधत्ते—

**अन्योन्याश्रयित्वं समस्य ॥ १८४ ॥**

ननु एवं वैचित्र्यपूर्णेभ्यः संस्कारेभ्यः कथं नियमिता जात्याभोगा उद्भवन्तीति शङ्कायाः समाधानार्थमेवास्य सूत्रस्यावतारः। यदा संस्काराः समभावापन्ना एकश्रेणिगा भवन्ति, तदा ते परस्पराश्रिता भवन्ति। यथा हि

वकश्रेणयो हंसश्रेणयश्च परस्पराश्रिता भवन्ति तथैवैकश्रेणिगाः संस्काराः परस्पर-सान्निध्यभाजः । इत्यत एव ते सर्वे मिलित्वा नियमितान् जात्यायुर्भोगान् निर्माय नूतनं जन्म ग्राहयन्ति । एकस्य स्थूलशरीरस्य पातानन्तरं द्वितीयस्य स्थूल-शरीरस्योत्पत्तितः पूर्वम् एकविधो हि प्रबलः संस्कारः स्वश्रेणिगान् कियतः संस्कारान् समभावापन्नतया स्वत एवाकृषति, तदा ते बीजस्य वृक्षात्मना परिण-तेरिव नूतनं पिण्डं निर्माय नवीनं भोगजीवनं सम्पादयन्ति ॥ १८४ ॥

प्रसङ्गतः संस्कारशुद्धिं प्रमाणयति—

**तच्छुद्धौ वेदाः प्रमाणम् ॥ १८५ ॥**

कथं च संस्कारशुद्धिर्भवति स च शुद्धः संस्कारः कथं क्रियाशुद्धिं विदधाति तथा च क्रियाशुद्ध्या कथम् अभ्युदयनिःश्रेयसौ सम्पादयति । इत्यत्र वेद एव प्रमाणम् । संस्कारशुद्ध्या हि प्रथमं क्रियाशुद्धिश्च भवति ततश्चाभ्युदय-निःश्रेयसौ भवतः । अस्वाभाविको हि संस्कारः शुद्धो भूत्वा स्वाभावि-केन संस्कारेण संगत्य कथं निःश्रेयसं प्रापयति, कथं च परिशुद्धः संस्कारो गता-गतचक्रं विलङ्घय्य कैवल्यं लम्भयतीति पूर्वमेव साधु समर्थितम् ।

ननु कर्मगतेः संस्कारगतेश्चातिदुर्ज्ञेयतया कीदृशात् कर्मणः कीदृशस्य संस्कारस्य, कीदृशाच्च संस्कारात् कीदृशस्य कर्मणः समुत्पत्तिरिति, तथा कीदृशस्य च संस्कारस्योत्पत्त्याग्रेऽभ्युदयनिःश्रेयसयोः पन्थाः सरलः सम्पद्यते, इत्यादीनां प्रश्नानां किमुत्तरमिति जिज्ञासायां लौकिकबुद्धेरगम्यतया ज्ञानमय-वेदस्यैवेह प्रामाण्यमिति निर्णीतः पन्थाः ।

स्मृतावप्युक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता । इति ।

वेदानां तत्सम्मतशास्त्राणाञ्चाभ्रान्ततया तदनुसारेण संस्कारसंग्रहणेऽ-वश्यं प्राप्तिः कल्याणस्येति निश्चितम् ॥ १८५ ॥

प्रकृतविषयं पुनर्द्रढयति—

**अज्ञानपिहितस्य तदाश्रयाच्छ्रेयः ॥ १८६ ॥**

अधिकारिणामुत्तममध्यमाधमभेदेन तिस्रः खलु श्रेणयो भवन्ति । उत्त-मोऽधिकारी स्वत एव योगानुशासनाधीनो भवति । अतश्च स सदात्म-निरत इति तस्य संस्काराः शुद्धा एवोद्भवन्ति, अपरतश्च तस्य बाह्य-परामर्शापेक्षैव न भवति । परन्तु मध्यमराजसिकाधिकारिणि सन्देहसत्त्वात्

अधर्माधिकारिणि च प्रमादसत्वात् वेदाश्चैव तयोः प्रधानमालम्बनम् । इत्यस्मादेव हेतोराचारकर्मणो युक्तिविचारविरहितो भूत्वा श्रुतिस्मृतिसमुदिताज्ञा-प्रतिपालनमेव समुचितम् ।

उक्तश्च मनुना—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥

अन्यत्रापि—

श्रुतिस्मृती ममैवाज्ञे उल्लङ्घ्ये नैव कर्हिचित् ।
आज्ञालङ्घी मम द्वेषी मद्भक्तोऽपि ह्यवैष्णवः ॥ १८६ ॥

सम्प्रति संस्कारपरिणामरहस्यं ब्रूते—

**संस्कारपरिणामो बीजपरिणामवत् ॥ १८७ ॥**

संस्काराणां परिणामः परिणतिः बीजानां परिणामवत् परिणतिवज्ज्ञेय इति सूत्रार्थः । यथा बीजादङ्कुरोद्गमोऽङ्कुराच्च वृक्षविस्तारः तस्मात्फलोद्भवो भवति, पुनश्च फलाद्बीजं बीजादङ्कुरक्रमेण वृक्षोत्पत्तिरिति बीजवृक्षचक्रं सदा परिवर्तते, तथैव संस्करात् कर्म, कर्मणः शुभाशुभफलं पुनः कर्म पुनश्च संस्कार इति संस्कार-कर्म-चक्रं सदैव विवर्तते । फलत एकस्मात् संस्कारात् कर्मोत्पत्त्या तदुपभोगेन तद्विमुक्तिसत्वेऽपि बीजवृक्षवत् क्रमचक्रं प्रचलत्येव । येन जीवस्य गतागतचक्रं न परिसमाप्यते यतश्च जीवो न विमुक्तिमृच्छति ॥ १८७ ॥

इदानीं संस्काराद्विमुक्तिरहस्यमभिधत्ते—

**अकामे भृष्टबीजवत् ॥१८८॥**

संस्कारस्येदृशीं दुर्दमनीयां प्रबलां शक्तिं निरीक्ष्य ततः पृथक्भवनाय स्वत एवेच्छोदेति । तदुच्यते यद्यपि संस्कारस्येदृशी प्रबला बन्धनकारिणी शक्ति विद्यते, तथापि तत्रैवम्भूतस्तस्योपायोऽप्यस्ति यस्यानुष्ठानेन संस्कारः सृष्टिसमुत्पादनेऽसमर्थः क्लीववद्भवति । यथोक्तं भागवते—

"भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते" इति ।

कामनानाशविषये श्रीमता भगवता श्रीगीतोपनिषदि समीरितम् ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः, स्थितप्रज्ञस्तदोच्यते ॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन्स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ।
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥

अस्वाभाविकस्य संस्कारस्य मूलकारणं वासनोच्यते । जीवो यदा पञ्चकोशपूर्णतामधिगत्य मानवयोनावुपेत्य स्वाधीनो भवति, तदैव पूर्णशक्ति-विशिष्टः स नवां नवां वासनां संग्रहीतुं समर्थो भवति । या च वासनाप्रति-च्छाया तस्यान्तःकरणे प्रतिफलति तयैवास्वाभाविकः संस्कारः समुज्जृम्भते । यदि च तत्त्वज्ञानोदयप्रभावतो वासनासमुच्छेद एकपद एव सम्भाव्येत, तदा जीवकृतकर्म्मभिः संस्कारसंग्रहो न जायेत वासनाभावात् । यतो हि वासनैव कर्मणां बन्धकत्वे निदानम् । तस्य वासना तु ज्ञानोदयेनोन्मूलितैवास्तीति निष्कण्टकस्तस्य मोक्षमार्गः । अथवेदमपि वक्तुं शक्यते यत् उन्मूलितवासनानां जीवानां कर्मभिर्यावन्तः संस्कारास्तदन्तःकरणे संगृह्यन्ते ते सर्वेऽपि भृष्टबीज-वदङ्कुरोत्पादनशक्तिशून्या भवन्ति । यथा च भृष्टाश्चणका भक्षणोपयोगिनः सन्तोऽपि अङ्कुरोत्पादनकर्मणि त्वसमर्था एव भवन्ति । तथैव वासनाविरहितैः पुम्भिरुपार्जिता अपि संस्काराः फलोत्पादनशक्तिविरहिता एव भवन्तीति सुनि-र्णीतः पन्थाः ॥ १८८ ॥

कथमिह भवति संस्कारविमुक्तिरित्युच्यते—

**क्रियामुक्तेस्तद्विमुक्तिः ॥ १८९ ॥**

क्रियाणां मुक्त्या निवृत्त्या तेषां संस्काराणां विमुक्तिरपगतिर्भवतीति सूत्रार्थः। यथा हि—आम्रबीजमुप्तं सदङ्कुरोत्पत्त्या वृक्षरूपेण परिणमति चेत्तदा तस्य विमुक्तिरुच्यते, तथैव संस्काररूपकारणतः कर्मरूपकार्य्योत्पत्तौ जायमा-नायां सत्यां तस्य संस्कारस्य विमुक्तिर्भवतीत्यभ्युपगन्तव्यम् । वासनाभावे संस्कारस्य संस्कारत्वमेव न तिष्ठति । केवलं नाममात्रतः स्मृतिजननायैव संस्कार-शब्दवाच्यतया स तिष्ठति । वस्तुतस्तु स भृष्टबीजवदसमर्थस्तिष्ठतीति पूर्वमेवोक्तम् ।

परन्तु वासनायां विद्यमानायां, फलतः संस्कारस्य स्वपूर्णस्वरूपसत्वे तु कार्य्योत्पत्त्या फलोपलब्धिजननमन्तरा स न विलयमृच्छतीति निश्चप्रचम् ॥१८९॥

तदभावे किं भवतीत्युच्यते—

**तदभावे बीजस्थितिवत् ॥१९०॥**

यदि पूर्वोक्तविज्ञानानुसारं बीजाद् वृक्षोत्पत्तिर्न स्यात्, फलतः संस्कारात क्रियारूपस्य भोगस्य सिद्धिर्न जायेत चेत्तदा स बीजगुप्तिवद्गोपनीय एव भवति। यथा कृषका अन्नबीजं रक्षन्ति देशकालप्राप्तौ च तद्बीजं वपन्ति, तथैव यदाऽस्वाभाविकात् संस्काररराशेः क्रियात्मकस्य भोगस्योपलब्धिर्न भवेच्चेत्तदा ते सर्वेऽपि संस्काराः कर्माशये सुरक्षितास्तिष्ठन्ति ॥ १९० ॥

तेषां स्थायित्वरहस्यमभिधत्ते—

**सत्त्वतमसोर्हेतुत्वं संस्कारस्थितौ ॥ १९१ ॥**

सत्त्वगुणावस्थायां तमोगुणावस्थायाञ्चेत्यवस्थयोर्द्वयोः संस्कारा न क्रियाशीला भवन्ति। तमोभावश्च प्रकृत्याश्रितः, सत्त्वभावश्च स्वरूपप्रवणो भवति। परन्तु द्वावपि अद्वैतभावमयावेवोच्येते । उदाहरणतो यथा उद्भिद आरभ्य मानवं यावद्याऽद्वैतभावमयी क्रमोन्नतिर्भवति सैव तमोमय्याः प्रकृतेः समाश्रिता गति र्निगद्यते । जीवन्मुक्ते महापुरुषे सप्तमं लोकमधिगतवति च महर्षौ शुद्धा सत्त्वभावमयी अलौकिकी स्वरूपप्रवणा गतिर्विद्यते ।' सहजपिण्डेन मुक्तात्मना चाऽनयोर्द्वयोर्यथाक्रमः सम्बन्धो विद्यते । द्वयोरप्यनयोरवस्थयोः कृते द्विविधे उदाहरणे प्रत्ते स्तः । तत्र एका पूर्णा तमोगुणमयी द्वितीया च पूर्णा सत्त्वगुणात्मिका ज्ञेया ।

इमे एव द्विविधे अप्यवस्थे ज्ञानिष्वपि रूपान्तरत उपलभ्येते । तत्र मुक्तात्मसु ये कर्मयोगिनो भवन्ति ते स्वात्मानं कर्मप्रवाहे जडवत् प्रवाहयन्ति । ये च ज्ञानयोगिनो भवन्ति ते हि सचेष्टाः सन्त आत्मानात्मविचारं कुर्वन्तोऽग्रे संसर्पन्ति। श्रीगीतोपनिषदुक्ताः कर्मयोगिनस्तु चतुर्विधभूतग्रामवदग्रे संसरन्ति । इमौ द्वावपि प्रकृतिप्रवाहं नातिक्रामतः । सांख्यमार्गाश्रितो योगी तु सप्तमलोकाश्रितमहात्मजनसदृशो ज्ञानाश्रयेणैवाग्रे गच्छति । उक्तञ्च श्रीगीतोपनिषदि—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयो र्विन्दते फलम् ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति ॥

संस्कारात् कथं क्रियोत्पत्तिः, कति च प्रधानभेदाः संस्काराणाम्, संस्कारेण

सह गतागतचक्रस्य जन्मान्तरस्य च कीदृक् सम्बन्धः, संस्कारो विद्यमानोऽपि भृष्टबीजवत् निष्फलं कथं तिष्ठति, यदि भृष्टबीजवन्न स्यात्; तथा फलदोऽपि न भवेत्तदा कथं स राशीभूय एकस्मिन्नाशये तिष्ठति, इत्यादीनां सर्वेषामपि विज्ञानानां विस्तृतं विवेचनमत्र पूर्वसन्दर्भेण सम्पादितमेवेति तत्र न किमपि वक्तव्यं विद्यते ।

सम्प्रति तत्त्वज्ञानिनो महापुरुषस्य कर्माशयस्थसंस्कारसमुदया अविनश्यन्त एव क्रियाविरहिता भूत्वा एकत्र राशीभूय तिष्ठन्ति । तस्य तत्त्वज्ञानिनश्च मुक्तिमार्गे नान्तरायमाचरन्तीति विवक्षया सूत्रकृन्महर्षिरिदमुक्तवान् । उपरि उदाहरणरूपेण जीवानां द्वे स्वतन्त्रदशे दर्शिते यत्रोभयत्रापि संस्काराः निष्फला एव भवन्ति । तेनैवोदाहरणेनोहनीयम् यज्ज्ञानिनो महापुरुषा द्विविधा भवन्ति । यत्र संस्कारसमुदया राशीभूता अपि निष्फला भवन्ति तयोर्द्वयोरपि अवस्थयोरुदाहरणं श्रीगीतोपनिषदि समासाद्यते । तथा हि—

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

स्वस्वरूपास्थानयोग्यताशालिनां महात्मनामिमे उभे अप्यवस्थे स्वतस्तिष्ठतः । तत्र प्रथमा सांख्यावस्था द्वितीया च योगावस्था । प्राक्तनकर्मानुसारेणैव कश्चन पुमांस सांख्यप्रधाना कश्चन योगप्रधाना इत्थमिमे उभे अप्युपसरतः। तत्र प्रथमा सत्त्वाश्रिता द्वितीया च तामसाधिष्ठिता । प्रथमावस्थायां केवलमात्मज्ञानमेवैकमवलम्बनं भवति, द्वितीयस्याञ्च तस्यां योगी स्वीयां वासनां विहाय केवलं प्रकृति-प्रवाहमात्रमेवावलम्बते । अनयोरुभयोरप्यवस्थयोः संस्कारबीजं सुरक्षितमेव तिष्ठति, न देहिनमाश्रयितुमर्हति, यतश्च देही संस्कारजालतो दूरमेव तिष्ठतीति ॥ १६१ ॥

अधुना विपरीतामवस्थां वर्णयति—

**न रजसस्तद्धेतुत्वाद् ॥ १६२ ॥**

तस्याङ्कुरस्य हेतुस्तस्य भावस्तत्त्वात् रजसि रजोगुणे न तस्य सिद्धिरिति सूत्रार्थः । सत्त्वगुण-तमोगुणौ यथा परिधिं यावदुपसर्पतः न तथा रजोगुणगतिः । रजोगुणश्च चतसृभिः शक्तिभिर्विशिष्टः कथ्यते । स एव सत्त्वतमसी सक्रिये करोति, इत्यस्मादेव हेतोस्तत्राङ्कुरोत्पत्तिरपि भवति । संस्कारात्मके बीजे

रजोगुणात्मकस्य जलस्य यदा सेको जायते तदावश्यमेवाङ्कुरोद्गमो भवति। इत्यत एव रजोगुणावस्थायां संस्कारसमूहाः सदा क्रियाशीलाः फलोन्मुखाश्च भवन्ति। जीवानां सर्वापि साधारणावस्था रजोगुणकोटिगैव मन्यते। यस्य परिणति र्गतागतचक्रस्थितिरुच्यते। अनयैव दशया मनुष्यपिण्डदेवपिण्डयोरामुक्तेः सदा सम्बन्धस्तिष्ठति ॥ १९२ ॥

ततश्च किं सिध्यतीत्याह—

**ततः शुभं वाऽशुभं वा ॥ १९३ ॥**

क्रियोपप्लुताद्रजोगुणान्मुख्यतो द्वे अवस्थे प्रजायेते। तत्रैका जीवानां कृते शुभदाऽपरा चाऽशुभदेति। यथा एक एव भगवान् कालो द्विधाऽत्मानं विभज्य दिनं रजनीश्च निर्माति। तथैव रजोगुणः शुभमशुभं वा फलं प्रयच्छति। यद्विध जीवानां क्रमोन्नतिं विदधाति तच्छुभं निगद्यते, यच्च तदीयक्रमोन्नतौ बाधां जनयति तद्विध अशुभं फलमुच्यते। लोकान्तरे इदमेव शुभाशुभं फलं जनयति, गतागतचक्रञ्च चालयतीति ॥ १९३ ॥

सम्प्रति सृष्टिहेतुभूतां ब्रह्मशक्तिं निर्वक्ति—

**ब्रह्मशक्तिरचिन्त्या दाहशक्तिवदनलस्य ॥ १९४ ॥**

ब्रह्माण्ड-पिण्डसृष्ट्योरतिशयसान्निध्यभाजः कारणसंस्कारस्य रहस्यमुक्त्वा सम्प्रति मौलिकं रहस्यं जिज्ञापयिषुः सर्वप्रथमम् अचिन्त्याया ब्रह्मशक्तेर्विषयमेवोत्थापयति–यथाऽग्निस्तद्दाहिका शक्ति र्नस्वतन्त्रा किन्तु अग्निस्तद्दाहिका शक्तिश्चोभावपि तौ परस्परमभिन्नौ, यथा च दहनादिकृत्यम् अग्नेर्दाहिकया शक्त्यैव सम्पाद्यते तस्याश्च दाहिकाशक्तेः पार्थक्यमग्नितोऽचिन्त्यमेव। तथैव ब्रह्मणस्तच्छक्तेरपि सर्वथाऽचिन्त्यः सर्वविधोऽपि सम्बन्ध ऊहनीयः ॥ १९४ ॥

सम्प्रति सृष्टिप्रादुर्भावप्रकारमाह—

**पुरुष-सम्बन्धोऽव्यक्तेन ॥ १९५ ॥**

यथा हि वह्निस्तदीया शक्तिश्च परस्परमभिन्नौ तथैव यावत्कालं यत्र वाऽद्वैतभावस्तिष्ठति तत्र सर्वथा सृष्टेरभाव एव भवति। सर्ग-प्रादुर्भाव-वेलायान्तु प्रकृतेः स्वातन्त्र्यं प्रथमं प्रकाशते सैव निर्गुणावस्थाविमोकतः सगुणावस्थोपलब्धिरुच्यते। सैवावस्था अव्यक्तपुरुषसम्बन्धो निगद्यते। तदानीमव्यक्त-प्रकृत्या सच्चिदानन्दात्मकस्य पुरुषस्य सम्बन्धो निरूढो भवति। यथोक्तमुपनिषदि—

'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्'।

इयं हि सृष्टेर्मूलावस्था प्रथमं कारणमुच्यते। अस्यामेवावस्थायां प्रकृति-

परिणामः प्रारभ्यते । अयं हि प्रकृत्यालिङ्गितः पुरुषः सगुण-ब्रह्मत्वेन गीयते ॥ १९५ ॥

अपरं परिणाममाह—

**ततः कालो व्यक्तश्च ॥ १९६ ॥**

प्रकृतेर्द्वितीय-परिणामे तु कालो व्यक्तश्चाविर्भवतः । यदा हि प्रकृतौ सत्त्व-रजस्तमांसि त्रयोऽपि गुणाः प्रकटिता भवन्ति, फलतः प्रकृतिस्त्रिगुणात्मिका सती स्वतन्त्रसत्तावती जायते सैव प्रकृतेः व्यक्तशब्दवाच्या व्यक्तावस्थोच्यते । अत्रैवावस्थायां कालस्यापि प्रादुर्भावो गुणत्रयाभिव्यक्त्या सहैव जायते । यतो हि कालाभिव्यक्तिं विना प्रकृतेर्व्यक्तावस्था नानुभूयते । अस्यामेवावस्थायां प्रकृतिः स्वीयां स्वतन्त्रसत्तां दर्शयित्वा निर्गुणमपि ब्रह्म सगुणं सोपाधिकं वा विदधाति । अस्यामेव द्वितीयावस्थायां सा स्वाव्यक्तदशातो व्यक्तं कालमपि प्रसूते । कालनिर्वचनञ्च स्मृतिष्वेवमुपलभ्यते ।

तदेतत् सर्वमेवासीद् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥
परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
व्यक्ताऽव्यक्ते तथैवान्ये रूपे कालस्तथा परम् ॥
प्रधानपुरुषो व्यक्तः कालानां परमं हि यत् ।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् इति ॥ १९६ ॥

अधुना देशरहस्यमभिधत्ते—

**व्यक्तदेशयोस्तादात्म्यम् ॥ १९७ ॥**

द्वैतोत्पत्तिदशायामेव प्रथमं कालः प्रकाशते, ततश्च तेनैव सार्धं देशोऽपि प्रादुर्भवति । ब्रह्मशक्तिरूपिणी प्रकृतिर्यावदद्वैतरूपेण तत्र ब्रह्मणि लीना विराजते, तस्याः स्वतन्त्रतया स्थितिर्यावन्नाभूयते सैवावस्था केवलब्रह्मपदवाच्या भवति । तस्यां ह्यवस्थायां प्रकृतिः सम्पूर्णतया विलीना तिष्ठति ।

यदा हि प्रकृतिः स्वीयस्वतन्त्रसत्तया सम्वलिता भवति तदानीं प्रकृति-पुरुष-संयोगेन याऽनुभूतिः प्रथमा बुद्धावारोहति सैव कालपरिचायिकाऽनुभूतिरुच्यते । कालश्च तत्र चित्सत्ताव्यञ्जको निगद्यते । द्वैतभावाभिव्यक्तौ सर्वप्राथम्येन कालज्ञानं स्वभावसिद्धम् । 'भाति' 'अस्ति' इत्यनयोः स्वरूपयोर्मध्ये प्रथमं भातीत्यस्यानन्तरञ्च अस्तीत्यस्य स्वरूपं प्रकटीभवति । इत्यत एव प्रथमं कालस्योत्पत्तौ सत्यां तदनन्तरं व्यक्तभावापन्नायाः प्रकृते र्विलासक्षेत्रा-

श्रीविश्वनाथो जयति ।

सर्कुलर नम्बर २६६

# श्रीभारतधर्ममहामण्डल प्रधानकार्यालय,

जगत्‌गंज, बनारस ।

ता० १५ नवम्बर १९३१.

श्रीकाशीपुरीके आयुर्वेदके ज्ञाता विद्वज्जन तथा आयुर्वेदके व्यवसायी सज्जनोंसे सविनय निवेदन—

विषय—आयुर्वेदसम्मिलनीका सुसंघटन और आयुर्वेदका भारतवर्षमें बहुल प्रचार ।

१—ऊपर लिखित उद्देश्यके अनुसार काशीपुरीके कई एक उत्साही और स्वदेशहितैषी वैद्योंने आयुर्वेदसम्मिलनी नामक एक सभा स्थापित करके बहुत दिनोंसे बहुतसे शुभकार्य करना प्रारम्भ किया है, जो सहायता करने योग्य हैं ।

२—जबसे काशीमें अखिलभारतवर्षीय संस्कृतविश्वविद्यालयका बीजारोपण हुआ है, तबसे यह आयुर्वेदसम्मिलनी उक्त संस्कृतविश्वविद्यालयका अङ्ग बनकर काम कर रही है । जिससे वह सम्मिलनी सर्वाङ्गसुन्दर हो और सर्ववादिसम्मत होकर और भी दृढ़तासे कार्य कर सके । इस कारण उसको शृंखलाबद्ध करनेके अभिप्रायसे जो उसकी नियमावलीका मसविदा बना है, वह उचित परामर्शके निमित्त इस निवेदनपत्रके साथ प्रकाशित किया जाता है।

३—यह निवेदनपत्र आप सज्जनोंके पास भेजा जाता है । इन उद्देश्य और नियमोंमें यदि कुछ न्यूनाधिक करना आप उचित समझें, तो पत्रद्वारा दो तीन दिनके अन्दर विदित करनेकी कृपा करें ।

४—तदनन्तर सुविधेका समय देखकर एक सभा बुलायी जायगी और सम्मिलनीको नियमबद्ध और सुसंघटित करनेका प्रयत्न किया जायगा ।

निवेदक—

**कवीन्द्रनारायणसिंह**

[ धर्मविनोद, रायबहादुर ]

जनरल सेक्रेटरी ।

॥ श्रीः ॥

# श्रीआयुर्वेदसम्मिलनी

के

## उद्देश्य और नियमावली ।

१—इस संस्थाका नाम "काशी आयुर्वेदसम्मिलनी" होगा ।

२—इस अखिलभारतवर्षीय संस्थाके उद्देश्य निम्नलिखित होंगे :—

(क) आयुर्वेदशास्त्रकी उन्नति करना ।

(ख) एक अखिलभारतवर्षीय आयुर्वेदकी शिक्षाप्रणालीको चलानेके लिये अखिलभारतवर्षीय संस्कृतविश्वविद्यालयके सहयोगी बनकर आयुर्वेदकी परिक्षाएं जारी रखना ।

(ग) काशीमें अथवा अन्यत्र आयुर्वेदविद्यालय और पाठशालाएं अधिक संख्यामें स्थापित हों, और वे नियमबद्ध हों, इसके लिये प्रयत्न करना ।

(घ) तुलनात्मक गवेषणाविभाग और अनुसन्धानविभाग स्थापन करके आयुर्वेदशास्त्रकी पुष्टि करना ।

(ङ) बिना व्ययके वैद्योंकी मदद ग़रीबोंको पहुंचाने और विनामूल्य औषधि पहुंचानेका यथाशक्ति प्रबन्ध करना ।

(च) आयुर्वेदशास्त्रके पढ़ने-पढ़ानेके लिये शिक्षकों और छात्र-छात्रियोंको यथासम्भव उत्साह देना ।

(छ) आयुर्वेदशास्त्रके प्रचार और पुष्टिके विचारसे संस्कृतग्रन्थ, अनुवादग्रन्थ और भाषाग्रन्थोंका सम्पादन और प्रकाशन करना और कराना ।

(ज) वैद्यशास्त्रके व्यवसायी और आयुर्वेदशास्त्रके अनुशीलनकारी सज्जनोंमें परस्पर प्रेम, सहानुभूति और ऐक्यके बढ़ानेमें यथासम्भव प्रयत्न करना ।

( झ ) औषधालय और रसशाला स्थापन करने और करानेका यथासम्भव उद्योग करना ।

( ञ ) श्रीभारतधर्ममहामण्डल और अखिलभारतवर्षीय संस्कृतविश्वविद्यालयकी सहायतासे परीक्षोत्तीर्ण विद्यार्थियों और कृतविद्य वैद्योंको यथायोग्य मानपत्र, उपाधि आदि द्वारा उत्साहित करना और देशी स्वाधीनराज्यों और देशी रियासतों तथा म्युनिसिपल्टी आदिके द्वारा उनकी वृत्तिके लिये यथासम्भव चेष्टा करना ।

( ट ) ऊपर लिखित उद्देश्यों तथा इनमेंसे किसी एककी पूर्त्तिके लिये यथावश्यक उद्योग करना ।

३—इस संस्थाके सभ्य निम्नलिखित श्रेणियोंके होंगे :—

( क ) जो राजा महाराजा या धनी व्यक्ति इस संस्थाके स्थायी कोषके लिये कमसे कम १०००) दान करेंगे, वे संरक्षक समझे जायंगे ।

(ख) जो सज्जन स्थायी कोषके लिये कमसे कम १००) दान करेंगे, वे आजीवन सभ्य समझे जायंगे ।

( ग ) जो व्यक्ति सालाना ३) चन्दा देंगे, वे विशेष सभ्य समझे जायंगे ।

( घ ) मन्त्रिसभाको अधिकार होगा कि, ऐसे सज्जन, जिनके द्वारा

संस्थाको साक्षात् अथवा परोक्षरूपसे लाभ पहुंचे, ऐसे व्यक्तियोंको वह सहायक-सभ्य रूपसे चुनले।

(ङ) जो व्यक्ति केवल ।) साल देंगे अथवा आयुर्वेदसम्मिलनीके उपाधिपरीक्षोत्तीर्ण होंगे, वे साधारण सभ्य समझे जायंगे ।

४—ऊपर लिखित पांच प्रकारके सभ्योंमेंसे प्रथम चार श्रेणीके सभ्योंका अखिलभारतवर्षीय संस्कृतविश्वविद्यालयका मुखपत्र "सूर्योदय" विना मूल्य दिया जायगा और पांचों श्रेणीके सभ्योंको वार्षिक रिपोर्ट आदि विना मूल्य दी जायगी। "सूर्योदय" संस्कृतविश्वविद्यालयका मुखपत्र होनेसे इस समितिके मुखपत्रका भी काम करेगा।

५—प्रथम चार श्रेणीके सभ्योंका अधिवेशन सालमें कमसे कम एकबार होगा। इस अधिवेशनकी योजना मन्त्रिसभाके सम्पादक करेंगे अथवा संस्कृत विश्वविद्यालयके सञ्चालकोंकी इच्छाके अनुसार भी आवश्यक होनेपर इस बड़ी सभाका अधिवेशन हो सकेगा। उपस्थित सभ्योंमेंसे बहुमतसे सभाका सामयिक सभापति चुनलिया जायगा। इस सभाका कोरम कमसे कम ११ का होगा। विशेष सभ्योंको वोट देनेका अधिकार तभी होगा, जब उनका नाम तीन माससे रजिस्टरदर्ज होगया होगा और जिनका नियमित चन्दा आता होगा। साधारण सभ्योंको वोट देनेका अधिकार न होनेपर भी प्रस्ताव करनेका अधिकार होगा।

६—यह वार्षिक बड़ी सभा प्रतिवर्ष वार्षिकपरीक्षाके अन्तमें मन्त्रिसभाका और पदधारियोंका चुनाव करेगी।

७—इस वार्षिक सभामें श्रीभारतधर्ममहामण्डल और अखिलभारतवर्षीय संस्कृतविश्वविद्यालयके दो प्रतिनिधियोंका रहना आवश्यक होगा और उन्हें वोट देनेका अधिकार रहेगा।

८—इस सम्मिलनीकी शृंखलाको ठीक रखने और सब विभागोंके कार्योंको चलानेका सम्पूर्ण भार मन्त्रिसभापर रहेगा। जिसमें कमसे कम ७ और अधिकसे अधिक २१ मेम्बर होंगे। कोरम ३ का होगा। यदि संस्कृतविश्वविद्यालयके संचालक चाहें, तो अपना एक प्रतिनिधि भी मंत्रिसभाकी बैठकमें भेज सकेंगे और उसको वोट देनेका भी अधिकार होगा। मन्त्रिसभाकी बैठक जब कार्यसम्पादक चाहेंगे, सभापति चाहेंगे या कमसे कम ५ मेम्बर हस्ताक्षर करके इच्छा प्रकट करेंगे, उस समय होगी।

९—मन्त्रिसभाके पदधारी निम्नलिखित होंगे और वोटिंग पेपर सबके पास भेजकर मताधिक्यसे पदधारियोंका निर्वाचन होगा। जो पदोंपर नियुक्त होंगे, उनसे एक लेख लिखा लिया जायगा कि, वे निश्चित समयतक सम्मिलनीका कार्य उत्साहसे करेंगे। एक व्यक्ति अनेक बार भी मताधिक्यसे पदधारी चुने जा सकेंगे।

(क) सभापति (एक)
(ख) उपसभापति (कमसे कम दो)
(ग) कोषाध्यक्ष (एक)
(घ) प्रधान सम्पादक (एक)
(ङ) कार्यविभागोंके सम्पादक (यथावश्यक)

( च ) सहकारी सम्पादक ( यथावश्यक )

( छ ) स्थानीय संस्थाओंके लिये निरीक्षक ( एक )

( ज ) हिसाबपरीक्षक ( एक )

१०—विभिन्न कार्यविभागोंके चलानेके लिये निम्नलिखित सब-कमेटियां मन्त्रिसभा नियुक्त करेगी। जिनमें कमसे कम ५ सभ्य होंगे और कोरम ३ का होगा। यदि संस्कृतविश्वविद्यालय चाहे, तो इन सब-कमेटियोंमें एक एक प्रतिनिधि भेज सकेगा, जिसको सभ्यके पूर्ण अधिकार रहेंगे।

( क ) परीक्षा विभाग। जिसकी कमेटीके सभ्योंमेंसे एक सज्जन नियामक निर्वाचित होंगे।

( ख ) पाठशाला विभाग।

( ग ) विनामूल्य चिकित्सा और विनामूल्य औषधिवितरण विभाग।

( घ ) गवेषणा और अनुसन्धान विभाग।

११—मन्त्रिसभाके इच्छा करनेपर इन विभागोंकी संख्या वह बढ़ा सकेगी और उनके लिये स्वतन्त्र उपनियमावली भी बना सकेगी।

१२—चूंकि आयुर्वेदपरिक्षाके साथ अखिलभारतवर्षीय संस्कृतविश्वविद्यालयका साक्षात् सम्बन्ध है, इस कारण परीक्षाके सुप्रबन्धके लिये परीक्षा-सब-कमेटीको विश्वविद्यालयसे सलाह लेनी होगी और तदनुसार काम करना होगा।

१३—प्रथम दो श्रेणीके सभ्योंका रुपया खर्च नहीं होगा और मूलकोषमें जमा होगा। मूलकोषका रुपया गवर्नमेण्ट बाण्ड अथवा विश्वस्त बैंकमें कोषाध्यक्षके मार्फत जमा होगा और उसका सूद ख़र्च किया जायगा।

१४—तीसरी और पाँचवी श्रेणीके सभ्योंके चन्देकी आमदनी और संस्कृतविश्वविद्यालयकी सहायता आदिसे नियमित ख़र्च चलाया जायगा।

१५—अखिलभारतवर्षीय संस्कृतविश्वविद्यालय विनामूल्य "सूर्योदय" सभ्योंको देगा। उसकी केवल लागतमात्र संस्थाको संस्कृतविश्वविद्यालयके प्रधानकार्यालयमें जमा कर देनी होगी।

१६—सम्मिलनीका कार्यालय जो सभापति होंगे या सम्पादक होंगे, उनके स्थानमें होगा और जिनके यहां कार्यालय होगा, वे ही काग़ज-पत्रके लिये जिम्मेदार होंगे।

१७—चूंकि परीक्षाकेन्द्र भारतवर्षके सब प्रान्तोंमें ही होंगे और अखिलभारतवर्षीय संस्कृतविश्वविद्यालयके अन्यान्य विषयोंकी भी परीक्षाएं होंगी, इस कारण परीक्षाका ठीक समय प्रतिवर्ष नियत करते समय अखिलभारतवर्षीय संस्कृतविश्वविद्यालयसे परामर्श करके तब समय नियत करना होगा।

१८—स्थायीफण्डकी आमदनी केवल छात्रवृत्ति और मानद्रव्यवितरणमें व्यय होगी।

१९—परीक्षोत्तीर्ण विद्यार्थियोंको जो प्रमाणपत्र दिये जायंगे, उनपर संस्कृतविश्वविद्यालयके प्रधान पदधारीके भी हस्ताक्षर होंगे।

२०—परीक्षोत्तीर्ण विद्यार्थियोंकी नामावली उनके मानादिके विवरणके साथ प्रतिवर्ष सूर्योदयमें प्रकाशित होगी।

२१—इस नियमावलीमें न्यूनाधिक करनेका अधिकार बड़ी सभाको होगा।

——:०:——

# सूर्योदयः ।

सप्तमे वर्षे } मार्गशीर्षस्य पूर्णिमा सं० १९८८ । { षष्ठ संख्या


## सम्पादकीया अभिप्रायाः ।



### पुराणपरीक्षणम् ।



बहवो मानवा भारतीयानि पुराणानि इतिहासाश्च साधारणदृष्ट्या पश्यन्ति, अत एवं तेषां मानसेषु नोत्पद्यते श्रद्धा । वेदा बीजानि, पुराणेतिहासाश्च फलानि। बीजापेक्षया फलानि निरतिशयस्वादवन्ति भवन्ति, तानि बीजानुकूलानिच । फलानामास्वादेषु पृथ्वीजलवाय्वादीनां वैचित्र्येण विचित्रतापि समुत्पद्यते पुराणेतिहासेषु वैदिकसिद्धान्ता देशकालपात्रभेदेन विभिन्ना इव प्रतीयन्ते । परन्तु तेषां पुराणेतिहासानां वैदिकरूपाणि विचारवतां ना नो बुद्धिगोचरीभवन्ति । वेदे लिखितमस्ति यत् प्रजापति निजां दुहितरमनुसृतवानिति । कामातुरो ब्रह्मा स्वकीयां तनयां कामयाञ्चकारेति पुराणमपि समर्थयति । वेदे प्रजापतिशब्दार्थः सूर्यः, दुहितृशब्दाभिप्राय उषेति । पुराणानामपि स एवाभिप्रायः । सूर्यो हि स्वीयकिरणसमूहै र्बहुविधवस्तूत्पादकत्वाद् ब्रह्मेत्यभिधातुं शक्यते ।

× × × × ×

पुराणानामश्लीलतायाः सर्वत्रैव महती चर्चा प्रचरन्ती श्रूयते । भगवता भवानीपतिना शतशो वेश्या रक्षिता आसन् । कारणेनैतेन पार्वती रोषरुष्टा जाता । श्रीः, धृतिः, दया, क्षमा, इत्यादीनि नामानि तेषां वेश्यानामुल्लिखितानि सन्ति । विद्वांसो जानन्ति यदेते परमात्मनो गुणा आलङ्कारिकरूपेण शिवपुराणे समुट्टङ्किताः । भागवतसमुल्लसिता रासलीलावती रसवती कथाऽपि गोपीनामात्मारामजीवन्मुक्तिनिदर्शिकैव विज्ञेया ।

× × × × ×

इदानीन्तनीय—तन्त्रीसंवाद—( टेलीफोन ) शब्दसंग्राह—( ग्रामोफोन ) दूरवीक्षण—( दूरवीन ) विद्युद्दीप—( विजली ) प्रभृतीनाविष्कारान् निभाल्य को वक्तुं शक्यति यत् प्रियव्रतस्य नृपते रथचक्रं सूर्यकार्यं नाऽकरोदिति ? तत्रापि काऽपि वैद्युतिकी शक्तिरनुमीयते ।

× × × × ×

संजयेन महाभारतयुद्धस्थलीषु शब्दश्रवणयन्त्रं नियोजितमभवत्, दूरवीक्षणेन तत्रत्यं दृश्यं ददृशे च । परिस्थितावस्यां संग्रामभूमिषु वीरवरमर्जुनमुद्दिश्य श्रीकृष्णप्रतिपादिता गीतोपदेशाः संजयेन धृतराष्ट्राय निवेदिताश्चेदत्र न चित्रम् । इदानींकाले अन्येषां देशानां संगीतयो यन्त्रद्वारा तद्भिन्नप्रदेशेषु श्रूयन्ते । प्रकारेणैतेन पुराणप्रतिपादिता बहुविधाश्चर्यजननी घटनावली सत्यतामाश्रयति ।

× × × × ×

भूकम्पैः खण्डप्रलयैश्च भौगोलिकस्थितयः परिवर्तन्ते । अत एव पुराणप्रतिपादितानां भूमिभागानां सप्तद्वीपानां परिमाणादीनि विरुद्धानि प्रतीयन्ते । परन्तु पुराणरचनाकाले तानि तथैव पौराणिकरूपाण्यभूवन् ।

× × × × ×

मनुष्याणां दीर्घजीवनचर्चा साम्प्रतिकेष्वपि सभ्यदेशेषु श्रूयते । त्रिविष्टप-( तिब्बत ) स्थाने सहस्रं वर्षाणि यावत् स्वीयान् असून् धारयन्तः संयमपरायणा योगिनः साम्प्रतमपि समुपलभ्यन्ते । पुराणैर्यदि योगविभूतयो वर्णितास्तर्हि न ताः सत्यशून्याः । पुरुषाणां योषिद्रूपे योषिताञ्च पुरुषरूपे परिणतिः कैश्चिदाधुनिकैः पौराणिकं कपोलकल्पितं गल्पमामन्यते । नातिचिरमभूद् यत् कुस्तुन्तुनिया—स्थाने कस्यचन पुंसः स्त्रीस्वरूपधारणम् अमेरिकायाञ्च कस्याश्चन स्त्रियश्च पुंस्वरूपपरिणमनं समाचारपत्रै रुट्टङ्कितम् । नारीणामिव नराणामपि स्तनचिन्हानि भवन्ति । बह्व्यो नार्यः कूर्चवत्यो दृश्यन्ते । अघटनघटनापटीयसी भगवतः परमेश्वरस्य महाप्रकृतिः कर्त्तुमकर्त्तुमन्यथा कर्त्तुं वा समर्था ।

× × × × ×

गङ्गाजल-तुलसी-विल्वपत्र-रुद्राक्ष-भस्म-प्रभृतिषु पदार्थेषु सन्ति रोगनाशिन्यः शक्तय इति पाश्चात्यचिकित्सकाः स्थूलदृष्ट्योऽपि सुपरीक्ष्य स्वीकुर्वन्ति । पदार्थैरेतैः बहूनां बहुविधविपद्ग्रस्तानां नराणां महोपकारः साधितः । अतः पुराणै र्नाऽपराद्धं यदि तैः पदार्था एते मुक्तिदाः स्वीकृताः ।

× × × × ×

शब्दग्राह-(ग्रामोफोन) यन्त्रे सूक्ष्मरूपेण शब्दा उपस्थिताः तिष्ठन्ति, ते

सूचीसंयोगेनैव कर्णगोचरीभवन्ति। तीर्थस्थानेषु ऋषिमहर्षीणां ब्रह्मध्यानानि ब्रह्मध्वनयश्च सर्वदैव विराजन्ते, श्रद्धावतामधिमानसं शुद्धभावमुत्पादयन्ति च। पुनः केन वक्तुं शक्यते यत् तीर्थस्थानानि निरर्थकानि, चर्चा वा तेषां निष्फलेति। सम्प्रति हि तीर्थेषु पापान्यपि प्रचरन्ति तेषामपि सूक्ष्मरूपं तत्र तिष्ठति। अतः पुराणमहिमा दैनन्दिनं तिरोदधाति।

× × × × ×

विभिन्नभाषात्मकत्वात् पुराणान्यखिलानि नैकेन व्यासेन विरचितानीति बहूनां सन्देहः। महामुनिना व्यासेन साररूपेण पौराणिक्यः कथाः समुद्गीरिताः। अनन्तरं सूतशिष्यैः सुमन्तुप्रभृतिभिः श्लोकरूपेण सुनिबद्धाः। वार्तेयमग्निपुराणे दृश्यते। व्यासस्य महर्षेः प्रागपि पुराणसत्ता सिध्यति। अत एव पुराणमिति तदीयं नाम। स्वीयस्मरणशक्तेरतितीव्रत्वात् प्राचीनानि पुराणानि महर्षिणा तेन न विस्मृतानि, तानि च स्वीयया गवेषणयाऽमूल्यसम्मत्या च सम्वर्द्धितान्यपि। अतः कारणादेव पुराणानि व्यासविरचितानीति विश्रुतम्। यथासमयमन्ये महर्षयोऽपि मुनयोऽपि व्यासनोदितान्तःकरणाः स्वकीयानि लोकोपकारकमतान्यभिनिवेशितानि, तान्यपि लोकहिताधायकत्वान्नूनं समादरणीयानि। तेषाञ्च पृथक्करणमनावश्यकमतिशयकठिनं च। स्वार्थलोलुपानां कृपया पुराणेषु क्षेपकाभासवाक्यानि क्षेपकवचनान्यपि वा बहूनि दृश्यन्ते तेषां समाधानं बहिष्करणं च नितान्तमावश्यकम्।

× × × × ×

पण्डितम्मन्यानां पुराणवाचकानां कथया पुराणमहिमा दिनानुदिनं ह्रसमानः समुपलभ्यते। यदि महान्तो विपश्चितोऽपि पुराणकथाकार्येषु प्रवर्त्तेरन् तर्हि नैवं भवेत्, लोकैश्च श्रुतेरपेक्षया समधिक आनन्दोऽनुभूयेत, विधेयविधानेनैतेन पुराणानां वेदस्य हिन्दुधर्मस्य वा कीदृशं लोकहितसाधकं माहात्म्यम् इत्यपि सर्वैरवगतं स्यात्। पुराणानां यथार्थतत्त्वावबोधकृते वेद-स्मृति-दर्शनादिशास्त्राणां विशिष्टं ज्ञानं नितरामावश्यकम्।

---

## नाटककालीना सभ्यता।

—०:*:०—

महाकवि-कालिदास-प्रणीत-शकुन्तला-नाटकेन विज्ञायते यत् वनवासिन्योऽपि स्त्रियः पत्रलेखनं चित्रनिर्माणं च जानन्तिस्म। यतो हि वनवासिनी

शकुन्तला पत्रलेखनं चित्रनिर्माणं चाकरोत् । तदानीं काले स्त्रीणां कृते अनिवार्यशिक्षा आसीत् ।

× × × × ×

मृच्छकटिकं नाटकं सूचयति यत् द्विसहस्रवर्षात् पूर्वं वेश्यालयेषु द्यूतप्रचारबाहुल्यमभूत् । चौर्यऽसहायकानि बहुविधानि वस्तूनि पुस्तकानि च समुपलभ्यन्तेस्म । तदानीमपि मानवा दीपयन्त्रमादाय रात्रौ मार्गेषु प्राचलन् । न्यायालयेषु तदध्यक्षाणां साहाय्यविधानार्थं रत्नपरीक्षका अपि नियुज्यन्तेस्म, यै र्नातिप्रयासेनाभियोगानां निर्णयो भवतिस्म ।

× × × × ×

कर्पूरमञ्जरी निर्दिशति यत् तदानींकालीना जनता इन्द्रजालमायां बहुमन्यतेस्म । एतादृशी रङ्गमञ्चरचनाऽक्रियत, यत्र नदीपर्वतादीनामपि दृश्यानि दर्शकानां नयनगोचरतामगच्छन् । वियत्सु प्रचलतां विमानानां दृश्यानि सौदामिनीनां चञ्चलाभासश्च जवनिकाभ्यन्तरे प्रेक्षकाः प्रेक्षन्तेस्म । विद्युद्भासां प्रदर्शनार्थं ज्योतिर्लिङ्ग–( सर्चलाइट ) समानानां पदार्थानां समुपयोगोऽक्रियत । रणक्षेत्रदृश्यप्रदर्शनार्थमस्मिन् समये यः किलोपाय उपादीयते, तेन कदा कदाचन पावकः प्रज्वलति । प्राचीना भारतीयास्तादृशं दृश्यं संवादेनैव प्रादर्शयन् । दृश्यानां सूक्ष्मगवेषणायां कथाभागमनोहरतासम्पादने च प्राचीन-भारतीयरङ्गमञ्चानां साधीयसी समुन्नतिरालोक्यते । न तदानीं काले मानसोद्वेजकघटनावल्यः अश्लीलदृश्यानि च परिदर्शितानि अक्रियन्त ।

× × × × ×

उत्तररामचरित-नाटकाध्ययनेन ज्ञायते यत् प्राचीने काले प्रक्षिप्तैर्नाराचैः शत्रुसेना निस्तब्धा अभूवन् । केचन मन्यन्ते यत् वाणेषु सम्मोहकाः पदार्थाः प्रयुज्यन्ते स्म, अन्यथा निस्तब्धतासम्पादनं न सम्भवेत् । बहवो मन्त्रप्रभावविजृम्भितमामनन्ति ।

× × × × ×

महाकविविशाखदत्तरचित—मुद्राराक्षसनामक-नाटकपरिशीलनेन ज्ञायते यत् तदानीं स्त्रीणाम् अवरोध—( पर्दा ) प्रथा अविद्यत । यतो हि चन्दनदासस्य पत्नी बहिःक्रीडन्तं निजपुत्रकं स्वीयसन्निधाने समानेतुं बहिरवरोधात् स्वकीयं करमकरोत् । तेन च तस्याः करात् तदङ्गुलीयकं निरगच्छत् । तच्च नामाङ्कितमभूत् । एतदपि विज्ञायते यत् तदानीं काले किल मुद्रणप्रथा प्राचरत् । लोकाः पत्रेषु निजनामाङ्कितेनाङ्गुलीयकेन स्वकीयानि अभिधानानि अमु-

द्रयन्। संग्रामसमये च यातायातपदार्थेषु मुद्रायाः (मुहर) चिन्हानि दीयन्ते स्म। तस्मिन् काले गुप्तचराणामपि प्रचाराधिक्यमवगम्यते। एकदा एकस्मिन् नवे सद्मनि भक्तावयवं नयन्तीं पिपीलिकां दृष्ट्वा तद्भवनं हि भस्मसात् सम्पादितम्, येन तदीयसुरङ्गे निलीनःशत्रुसमूहो भस्मीबभूव। नृपतयश्च शत्रुभूतान् नरपतीन् हन्तुं विषदिग्धाः रूपयौवनसम्पन्ना वारवनिताः प्राहिण्वन्। पण्यस्त्रीभिराभिः कृतसम्बन्धा राजानो गतायुषो व्यधायिषत। पाटलिपुत्रनगरे महानन्द-वंशधरस्य पर्वतकस्य मृत्युः समभूद् विषकन्ययैवेति।

---

## काश्मीरस्था हिन्दवः।

काश्मीरस्थानमिदमेकं हिन्दुराज्यम्। परमत्रत्यायां जनसंख्यायां प्रतिशतं ९५ माहम्मदाः, ५ हिन्दवश्च सन्ति! स्थानेऽत्र ४०० वर्षेभ्यः पूर्वं माहम्मदानां लेशोऽपि नासीत्। परञ्चैतेषु वर्षेषु परिवर्त्तनमिदमाश्चर्यकरं नूनं हि हैन्दवं दुर्भाग्यं सूचयति। साम्प्रतमत्रत्यानां हिन्दूनां दुःखमयीं परिस्थितिं पर्यवेक्ष्य विदीर्यतेऽन्तःकरणम्। अत्रस्था हिन्दवोऽन्यप्रान्तस्था इव न सन्ति बहुविधोपवर्णोपजातिविभक्ताः। काश्मीरस्था हिन्दवः सर्वे ब्राह्मणाः पण्डितोपाधिविभूषिताश्च। ब्राह्मणवर्जं वर्णत्रयमत्रत्यं ४०० वर्षाभ्यन्तरे यवनतामभ्युपेतमिति नूनं ब्राह्मणानां कृपापरम्पराऽत्र निदानम्।

यदि कश्चनात्रत्यो ब्राह्मणः शौनिकदासेरकतामप्यङ्गीकुर्यात्तर्हि न कोऽपि दोषः, परन्तु यद्यसौ शिल्पकलाशिक्षामधिगन्तुं समीहामपि विदध्यात् तदाऽत्रत्यै र्ब्राह्मणपुङ्गवैर्बहिष्क्रियते। एकदाऽत्रत्यौ द्वौ नवयुवकब्राह्मणौ इहत्य-"टेकनिकलकालेज" परीक्षामुत्तीर्णौ जातिच्युतिमासादितवन्तौ। अश्वयानचालक एको ब्राह्मण एकदा मया दृष्टः। तन्मुखात् ज्ञातं यदस्योद्वाहोऽत एव न भवति यदयमश्वयानं चालयति! युवकोऽयं रूपेण रमणीयः, वपुषा पुष्टः, विचारेण उदारः वयसा विंशतिवर्षदेशीयश्चासीत्। भिक्षाटनापेक्षया परिश्रमद्वारा स्वोदरपूर्त्तिर्नितरां समुचितेति तस्योक्तिः। अत्रत्या बहवः पण्डिता दासतयैव जीवनयापनमनुतिष्ठन्ति स्वकीयम्। पण्डितपुङ्गवानां पाण्डित्येनैव त्रिचतुर्वर्षदेशीया अनेका अत्र बालविधवा दृश्यन्ते वैधव्यदुःखदग्धाः। इहत्याः पण्डिताः प्रायोऽन्य-प्रान्तीय-ब्राह्मण-स्पर्शं न सहन्ते! बहवोऽन्यप्रान्तीयब्राह्मणस्पृष्टजलं न पिबन्ति। परन्तु तादृश-पण्डितानां निलयेषु परिचारका माहम्मदा

एव विलसन्ति, पात्रप्रक्षालन-जलाकर्षणादिकमाचरन्ति । अगाधे विपत्पयोधौ निमज्जतो हिन्दुधर्मस्य कीदृशमिदमुदाहरणम् । स्वधर्मावलम्बितो घृणा अस्पृश्यता च; स्वधर्मप्रतिकूलैः सह सम्बन्धः, प्रेम, सहानुभूतिः, भ्रातृभावश्चेति किमतःपरमधःपतनं सम्भवेत् ।

काश्मीरस्थानां माहम्मदानां जागर्त्तिं निभाल्य पर्यटकाश्चकितचकिता भवन्ति । अत्रत्या यावना हिन्दुस्पृष्टं जलं नेच्छन्ति । पण्डितानां निलयेषु दासतामाचरन्तोऽपि तत्स्पृष्टं किमपि वस्तु नाङ्गीकुर्वते ।

यत्र स्थाने ब्राह्मणानां तादृशं शयनं, यवनानामीदृशं जागरणं च विद्यते तत्र विद्यमानतायामपि हिन्दुराज्यस्य, हिन्दुधर्मास्तित्वं कथमिव स्थास्यतीति भगवानेव जानाति ।

खिद्यते चेतो यत् अनेकेऽन्यप्रान्तीया हिन्दवो बान्धवाः काश्मीरभ्रमणं कर्त्तुकामाः प्रतिवर्षं काश्मीरमायान्ति, परन्तु तत्रत्यहिन्दूनां दीनदीनां दशां न निभालयन्ति, ते किल काश्मीरस्य स्वाभाविकं सौन्दर्यमेव पर्यवेक्ष्य मुह्यन्ति । ये खलु पर्यटकाः काश्मीरसम्बन्धिनं निबन्धमपि निबध्नन्ति, तेऽपि तत्रत्यं प्राकृतिकं दृश्यमेव स्ववर्णनविषयं विदधते । यो हि देशः स्वर्गैकखण्डः, यत्र प्राचीनकाले हिन्दुधर्मध्वजा समुड्डीयतेस्म, तत्रैव हिन्दुधर्मस्याभासमात्रमितिं नूनं हिन्दूनां दुर्भाग्यविलसितम् । अत्रत्यानां यवनानां रीतिरपि हैन्दवी, इहत्यानां माहम्मदानां नाम्ना सह 'पण्डित' इत्युपाधिः साम्प्रतमपि विराजते । यतोऽहि प्राचीने समये देशोऽयं केवलं ब्राह्मणानामेवाश्रयीभूतोऽभूत् ।

भारतीया हिन्दवः! भवन्तः स्वीयानि चक्षूंसि प्रसार्य्य काश्मीरहिन्दूनां दशां प्रेक्षन्ताम् यत् ते कथमिवावनतिकूपे दैनन्दिनं निपतन्ति । हिन्दुमहासभा आर्या बन्धवश्च यदि विषयेऽत्र समुचितं ध्यानं न दास्यन्ति, तदा काश्मीरहिन्दुदशा नितरां जटिलतामासादयिष्यति । अवशिष्टेष्वपि तत्रत्येषु हिन्दुषु माहम्मदतामुपयातेषु पुनः पश्चात्तापो निरर्थक एवेति । ❀

---

❀ पञ्चषवर्षाणि व्यतिगच्छन्ति यदेतन्निबन्धनिबन्धकः पर्यटनार्थं काश्मीरप्रदेशमगात् । महोदयेनैतेन प्रबन्धोऽयं तदानीमेव प्रबद्धः, किन्तु साम्प्रतं मयोपलब्धः प्रकाशितश्च । सम्प्रति भूस्वर्गस्य काश्मीरस्य निवासिनां हिन्दूनां कीदृशी दशेति समाचारपत्रपाठकाः सम्यग् जानन्ति । यदि साम्प्रतमपि हिन्दवो विशेषतो ब्राह्मणाश्च सावधाना न भविष्यन्ति तदा हिन्दुजातिरियमगाधे विपज्जलधौ नातिचिरायैव निमङ्क्ष्यति । —सम्पादकः ।

## संसारस्य पुस्तकानि ।

संसारस्य तेषु तेषु प्रसिद्धपुस्तकालयेषु संगृहीतपुस्तकानां संख्या निम्न-निर्द्धारिताः सन्ति—

( १ ) पेरिसदेशस्य "बिबलियोथिकनेशनल" नामके पुस्तकालये ४०००००० संख्यकानि पुस्तकानि सन्ति ।

( २ ) वाशिंगटननगरस्य "कांगरेस लाइब्रेरी" संज्ञके ग्रन्थागारे ३२५०००० संख्याकानि पुस्तकानि विलसन्ति ।

( ३ ) लन्दननगरस्य "ब्रिटिशम्यूजियम" नामनि पुस्तकसंग्रहालये ३०००००० संख्यामितानि पुस्तकानि वर्त्तन्ते ।

( ४ ) फ्रांसदेशस्य सुप्रसिद्धेषु १११ सार्वजनिक पुस्तकसदनेषु २०००००० संख्यायुतानि पुस्तकानि विद्यन्ते ।

( ५ ) शार्मण्य-( जर्मनी ) प्रदेशस्य तेषु तेषु १६० संख्यातेषु पुस्तक-मन्दिरेषु ३०००००००० पुस्तकानि संख्यातानि श्रूयन्ते ।

( ६ ) 'ग्रेटब्रिटेन' नामकस्य विश्रुतेषु सार्वजनिकेषु पुस्तकसद्मसु १८०००००० संख्यावन्तो ग्रन्थाः प्रेद्यन्ते ।

× × × × ×

समस्तेऽपि संसारेऽत्र प्रतिवर्षं प्रायो २ लक्षं ८३ सहस्रं च पुस्तकानि प्रकाशतामाप्नुवन्ति । इदानीं पर्यन्तं निखिलेऽपि भूमण्डले प्रायशः एककोटि-सप्ततिलक्ष-विधा ग्रन्थाः प्राकट्यमापन्नाः ।

षोड़शीं शताब्दी-मारभ्य ऊनविंशीं शताब्दीं यावत् यावन्ति पुस्तकानि प्रकाशितानि, तेषां क्रमो निम्ननिर्द्धारितरूपो निभालनीयः—

( १ ) षोड़श्यां शताब्द्यां ५७०००० संख्यकानि पुस्तकानि प्रकाशितानि ।

( २ ) सप्तदश्यां शताब्द्यां १२५०००० संख्याकानि पुस्तकानि प्राक-ट्यमाप्तानि ।

( ३ ) अष्टादश्यां शताब्द्यां २०००००० संख्यामिता ग्रन्थाः प्रकाशमाप्नुवन् ।

( ४ ) ऊनविंश्यां शताब्द्यां ८२५०००० संख्यावन्तो ग्रन्थाः प्रकाशिताः । उपर्युक्तया पुस्तकानां प्रकाशनतालिकया पाठकैः स्वयमनुमन्यतां यत् अस्यां विंश्यां शताब्द्यां कियन्ति पुस्तकानि प्राकट्यमवाप्तानीति ।

## ब्राह्मणानां संख्याह्रासः ।

—०—

१६११ खिस्ताब्दे १४५६५७०८ ब्राह्मणा आसन् । परन्तु १६२१ खिस्ताब्दे केवलं १४२५४६६१ संख्यामिता एव ते अवाशिष्यन्त ! एषु दशसु वर्षेषु भारतेऽत्र ३४०७१७ संख्याकानां ब्राह्मणानां ह्रासोऽभवत् । एतावतैव समयेन सार्द्ध-लक्षत्रयं ब्राह्मणा अह्रसन्त । १६३१ खिस्ताब्दीयमानवगणनावलोकनेन ज्ञायते यत् उपर्युक्तावशिष्टसंख्यायामपि शोचनीयो ह्रासो जातः ।

———

## संसारस्य जनसंख्या ।

—०—

१६२१ खिस्ता दे समस्तस्यापि भूमण्डलस्य जनसंख्या १६४६६४०१००० मिता आसीत् । अत्र आर्यापरनामानो बौद्धयुक्ता हिन्दवः ६७४४१००००, खिस्त-धर्मावलम्बिनः ५४४५१००००, माहम्मदाः २२१८२५०००, यहूदीयाः १२२०१०००, जीवोपासकाः ( ? ) १५८२६००००, अन्ये च विविधाः १५२८०००० संख्यामिताः सन्ति । तालिकयैतया अन्यधर्मावलम्बिनामपेक्षया हिन्दूनामेवाधिका संख्या । परन्तु हिन्दवो बौद्धान् स्वस्मात् पृथग्भूतान् यदि मन्येरन् तर्हि तेषां केवलं २१०५४०००० मिता संख्याऽवशिष्टा स्यात् ।

———

# उपदेशकमहाविद्यालयः ।

—०॥०—

काश्यां श्रीभारतधर्ममहामण्डलभवने अध्यापनकार्यमुपदेशकविद्या-लयस्य सञ्चलति । अत्र प्रतिसप्ताहं दिनत्रयं चन्द्रवासरे गुरुवासरे शनि-वासरे च सायं ६–७ घ० पर्यन्तमनेके विद्वांसो विद्यार्थिनो नानाशास्त्ररहस्यं धर्मव्याख्यानकौशलञ्च शिक्षयन्ति । अन्यस्मिन् विद्यालयेऽधीयाना अपि ये छात्रा अत्रागत्य घण्टाद्वयं पठिष्यन्ति ते यथायोग्यं वृत्तिमपि लप्स्यन्ते । अतः सर्वैः छात्रैरमुष्मिन् विद्यालये नूनमधीतये सम्मिलितैर्भवितव्यमिति साग्रहं निवेद्यतेऽस्माभिः । "अध्यक्ष—उपदेशक महाविद्यालय, महामण्डल भवन, जगतगंज बनारस ।" इति संकेतेन तदर्थं निश्चयः कर्त्तव्यः ।

———

# सभापतेरभिनन्दनम्* ।

—०:*:०—

गोयन्कासुरभारतीसुभवने वाराणसेये भृशम्,
येयं सम्प्रति राजते गुरुवरैः सान्तेवसद्भिः सभा ।
साभापत्यमुपेत्य तत्र किमयं विद्यातपोऽभ्यर्हित—
काशीनाथ वपुश्छलेन सहसा विश्वम्भरो दृश्यते ? ॥ १ ॥
काशीनाथ विभो ! किमद्य भवते सद्यो निवेद्यं भवेत्,
यस्मान्नास्ति मदीयवस्तु सदिह त्वत्पादयो र्दित्सितम् ।
अभ्युत्थाय करौ सुयोज्य भवतां सर्वे पुरस्ताद् वयम्,
ब्रूमः केवलमेकमत्र नमनं श्रीमत्पदे पङ्कजे ॥ २ ॥
'गौरीशङ्कर'गुप्तधर्म्यजनुषाद्भिः पाठशालेऽत्र या,
सिद्धिश्चापि चकास्ति येयमधुना 'चण्डीप्रसादो'द्भवा ।
सव्यासव्यदिशोर्हि यस्य भजतो देदीप्यमाने उभे,
हेरम्बः पुर एषकान्तिकलितो जागर्ति विद्यालयः ॥ ३ ॥
सोऽयं त्वं करुणार्द्रभाव उपतिष्ठस्वात्र दत्तासनेऽ-
प्यङ्गीकृत्य हितैषितां पुनरिहाऽयोग्येषु शिष्येषु भोः ।
अस्मास्वद्य वितीर्य्यतां हि तरसा ज्ञानामृतँल्लिप्सितम्,
काशीनाथ ! निधे ! निमील्य तपसाँ य्योगाक्षिणी योगतः ॥ ४ ॥
लसच्चन्दने शीतभावं दधानो दधानस्त्वदीयं पदं पञ्चपद्यम् ।
न शक्त्या न भक्त्या नियत्यात्वगत्या प्रणम्रोऽयमिन्द्रप्रसादो दिधेष्टि ॥५॥

—इन्द्रप्रसादनाथत्रिपाठिनः ।

---

# भोगीमलः ।

—:*:—

महास्तम्भेषु लम्बमानैर्विद्युद्दीपैरुद्दीपितः, उल्लोचैरुल्लासितः, प्रच्छद-पटैश्चास्तृतो विशालोऽयमङ्गणप्रदेशः । अत्र क्वचिन्मदिरापूरितानि काचपात्राणि मदयन्ति मानसानि मद्यव्यसनिनाम् । क्वचिन्मालती-मल्लिका-यूथिका-कुसु-

* कार्तिकशुक्लनवम्यां काशीस्थ जो० म० गोयनका सं० म० वि० वार्षिकोत्सवावसरेऽनेकैश्छात्रैः कविता अश्राव्यन्त तासु प्राथम्यमधिगतेयमिति—

मस्तवकराजिराजीवयति मस्तिष्कशक्तिं जनानाम् । परितः सुगन्धिततैल-कस्तूरिका-परिमलः स्वामोदग्रहणाय व्याकुलयति घ्राणेन्द्रियाणि सुन्दराणाम् । क्वचिन्नागवल्ली-दल-दलनपरा दन्तावली गान्धार-दाडिमबीजपङ्क्तिं परिहसति । क्वचिदरुणतरुणानां कर्बुरा वक्राश्चोष्णीषिकाः स्मारयन्ति राजपुत्रदेशीयान् । क्वचित् सप्ततन्त्रीतन्त्रीषु मृदुलाङ्गुल्यग्रसंघर्षः, क्वचिन्मधुरो वाद्यरवः, क्वचिद्गभीरो मृदङ्गध्वनिः, क्वचिच्चर्चरीणां प्रचारः । सम्प्रति समयविलम्बासहानि किञ्चिद्रक्तिम-वहानि यथोचितेष्वासनेष्वासीनानां रसिकानां नेत्राणि तृड्व्याकुलानीवेतस्ततो भ्रामं भ्रामं किमप्यनुसन्दधति ।

अयं खलु धनकुवेर-श्रीकरोडीमल-सुपुत्रस्य भोगीमलस्य शुभोद्वाहमुपलक्ष्य सर्वदेशप्रसिद्धानां वारयोषितां नर्तनोत्सवः । अत्राहूता अनाहूता आसंख्या युवानः परिणतवयसश्च सभाभवनं सभाजयन्ति । अद्य नेत्रश्रवणयोश्चिरकलहः प्रशमं यास्यति । रूपस्वरयोरेकतरस्योत्कर्षश्च सेत्स्यति ।

अथाकस्मात्करतलध्वनिरभूत् । मण्डयाम्बभूव च वारवनितामण्डली परिषन्मण्डपम् । प्रववृते सा-रे-ग-मालापः । बधिरयामास "धिन्ना-धिन्ना"—ध्वनिः । अथ क्रमशस्ता जगुः सरसानि गलज्जलानि, ननृतुश्च क्वणन्मणिमेखलम् । अवर्षंश्च परितो रसिकाः सहर्षं सोल्लासं च स्वर्णदीनारजालम् । कश्चित्ताम्बूलार्पणमिषेण तत्कर-दिव्य-स्पर्श-सुखमन्वभूत् । अपरो वक्षसि तीक्ष्णकटाक्षव्याहतोऽघूर्णत ।

अन्ते कुसुमपुर–वासिनी वारविलासिनी कालिन्दीप्रवाहमनुकुर्वत्या वेण्या, भ्रमरकभूषितेनोन्नतेन ललाटेन, कन्दर्पस्य चापकोटिभ्यामिव भ्रूभ्याम्, स्वरुचा खञ्जनगञ्जनाभ्यामञ्जनाञ्चिताभ्यां विशालाभ्यां नयनाभ्याम्, कामतूणीरेणेव नासावंशेन, विद्रुमानुकारिणाऽधरपल्लवेन, कापोत्या कन्धरया, रतिकन्दुकेनेव स्तनयुग्मकेन, प्रतिपदं भज्यमानेनेव मध्येन, मदन-स्यन्दनप्रतिमेन पृथुलगोलनितम्बयुगलेन, न्यक्कृतरम्भादम्भेनोरुद्वयेन, कूजन्मणिहंसकाभ्यामिव च पादपद्माभ्यां विराजमाना, वयसा षोडशवर्षदेशीया, नाम्ना सौदामिनी सहैव दर्शकमनोभि र्नर्तितुमारेभे ।

अचिरादेव तया विविधभावभङ्ग्या हृतानि चेतांसि, रागसुधामाधुर्याऽऽप्यायितानि श्रोत्राणि, अभिनवरूपसम्पदा चमत्कृतानि च लोचनानि लोकानाम् । किमियं रागश्री मूर्तिमती, उत शापभ्रष्टोर्वशीति व्यमृशञ्जनाः । आमोदापारकूपारनिमग्नाश्चैके नास्मरन् स्वस्यापि ।

साधनताज्ञानं कारणमामनन्ति विज्ञाः। नचात्र तल्लेशः, प्रत्युत प्रतिपदं क्लेशः। पश्य—अत्र धनव्ययः, शरीरक्षयः, धर्मध्वंसः, कीर्त्तिभ्रंशश्चेति। वेत्स्येव—"संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते" सत्कुलजस्य निन्दा शस्त्रं विना वधः। आभी राक्षसीभिराविष्टो न कदाचिन्मुच्यते मृतो वाऽमृतो वा। महान्तश्चक्रवर्तिनोऽप्यासां कृपया भिक्षवः सञ्जाताः। रूपविजितमाराः सुकुमारा अपि कुमारा गलत्कुष्ठदुर्भगाः संवृत्ताः। धनं विहाय नान्यत्र क्वाप्यासां निश्चलः प्रेमबन्धः। तज्ज्ञानाङ्कुशेन सर्वथा विनिवर्तनीयोऽयं मनोमत्तमातङ्गः कुमार्गात्। वयस्य, विषया आपातरम्या परिणामदारुणाश्च भवन्ति।

भोगी०—सखे, पात्रमार्गणं हि प्रथमकृत्यमुपदेशकस्य। न चाहं साम्प्रतं भवदुदितं पथ्यमपि श्रोतुमर्हः। तस्यास्तीक्ष्णैः कटाक्षौर्व्याविद्धे तितउप्रतिमे मद्धृदि न स्थातुं शक्नोति त्वद्वचः सलिलम्। तद् यदीहितं मज्जीवितं त... ........त......... त......हि—(इत्युदीरयन्मूर्च्छति)

चञ्चलः—(स्वगतम्) वह्निरयं जलेन दीप्यते; व्याधिरयमौषध्या वर्धते। तत्किं करोमि? भवतु, सर्वथा रक्षणीयः प्रियवयस्यः। शीतोपचारेण प्रकृतिमापादयन् (प्रकाशम्) प्रिय, त्वत्कृतेऽहं स्वप्राणानपि तृणाय मन्ये; अकार्यशतादपि न बिभेमि। तद्धैर्यमाधीयताम्।

अस्मिन्नेव व्यतिकरे श्रेष्ठिकुलरविः श्रीकरोड़ीमलोऽपुनरावृत्तयेऽस्तमगात्। तदेककः पुत्रो भोगी च विषादसागरे न्यमाङ्क्षीत्। अकार्षीच्च चञ्चलस्तं कथञ्चिद् व्यगतशोकशल्यम्।

अथ कदाचिच्चञ्चलेन सह रहसि समुपविष्टः कथयामास भोगी०—वयस्य, एकां सौदामिनीं विना अतुला सम्पद्, असंख्या अश्वरथाः, अपरिमिताः मृत्तराः, विचित्राण्युपवनानि—सर्वं प्रमोदवस्तुजातं विफलं प्रतिभाति। साम्प्रतं चाहं स्वतन्त्रः। तत्त्वरितं चक्षुश्चुम्बिनी क्रियतां धरोर्वशी गजगामिनी सौदामिनी।

चञ्चलः—मित्र, नागकुमारीं देवकुमारीं चेत्कामयसे, तामप्यानयेयम्। का नाम पण्यकामिनी सौदामिनी (इति पञ्चदशसहस्रमुद्रा गृहीत्वा गच्छति)

भोगी०—हा हा! बहूनि दिनानि व्यतीतानि, नचायातः प्रियवयस्यः। शिल्पिभिः सौदामिनीसौधमपि सम्यक् सुसज्जितम्। तावत्तारपत्रमर्पयति दौवारिकः (गृहीत्वा वाचयति) आः। फलितो मनोरथतरुः (तूर्णं बहुभिर्नागैर्मृत्तरैश्च स्वागताय याति)

अद्य सौदामिन्या विशेषनृत्यमिति स्वल्पाश्रिताश्च तत्सुहृदः सन्त्युपविष्टाः। बहिःसमवेता अप्यसंख्या मानवाः कर्कशकशास्पर्शसुखमेव लभन्ते न नृत्यानन्दम्। तावद् भोगीमलोऽपि सह चञ्चलेन प्रविशति। अद्य खलु मद्यकाचपात्राणां संहारकालः, ताम्बूलानां प्रलयवेला, धूम्रवर्त्तिकानां च चरमावधिः। सौदामिन्यप्यद्य स्वीयासीमसङ्गीतपाण्डित्यं प्रदर्शयति। करोति चाविरतं पञ्चशरशर-शरव्यान् धनिकमृगान्। तया नाद्यावधि भोगीव कोऽपि चक्षुषाऽन्धो ग्रन्थिकया च पूर्णो मानवो लब्धः। संगृह्णात्यद्य सा प्रतिपादन्यासमसंख्याः स्वर्णमुद्राः। इतरेतरस्पर्धया च प्रवाहयन्ति पानीयमिव द्रविण कोटिपतयः।

हा गृहीतमद्य तया सुशीलायाः परमासनम्। आक्रान्तं डाकिन्या पार्वतीपुण्यस्थानम्। सा साध्वीशिरोमणिः सुशीला सहात्मजेन निष्कासिता गृहात्। असंख्यनिधिस्वामिन्यद्य स्वोदरकृते क्लाम्यति। हा कष्टा दैवगतिः।

अथ दुरपास्यसौदामिनीप्रेमपाशपतितस्य तस्य क्रमशोऽश्वयानानि, मृत्तराः, (मोटर) करिणः, आभूषणानि, वसनानि, हर्म्याणि—किमधिकेन सर्वाऽपि सम्पत्तिः प्रकटविक्रयं (नीलाम) गता। हा दुर्व्यसनमाहात्म्यादद्य करोडीमलपुत्रः कौड़ीमलो जातः।

विपर्यस्तमतिरनन्यगतिर्भोगीमलो गहनं गहनं जगाहे। तत्रापि स्वप्रार्थितसुखमलभमानो मरणमेव शरणं मन्यमानो भृगुपतनमैच्छत्कर्तुम्।

तथाविधातुं व्यवसितं च तमवलोक्य कश्चित्क्षपणको निषिषेध उवाच च–'अरे किमेतदधर्म्यमाचरितुं प्रवृत्तोऽसि ? आगच्छाहं सुखं शान्तिं च दर्शयामि।

भोगी०—अहो महात्मन्, नमो नमः। सुखान्वेषणपरोऽहमिमामस्मि गतो दशाम्। तत्प्राप्तये यत्कथयसि तत्करोमि (इति वचनाण्युच्चार्य दीक्षां ग्रहीतुमिच्छति) द्वित्रा अन्येऽपि क्षपणकाः समायाताः। प्रधानक्षपणकश्च तच्छिरस्तः शिखामादातुं क्षुरः करे करोति।

तावत्तेजस्विनी काचिन्महिला तन्निकटस्थलतामण्डपान्निष्क्रम्य ससम्भ्रमं बभाण—भो भो महात्मन्, मैवं मैवम्। किमसि कर्तुमुद्यतः। परीक्षस्व प्रथमं पात्रम्, ततः प्रवर्तस्व दीक्षां दातुम्। पृच्छेनं किं यथावन्निर्व्यूढो गृहस्थाश्रमः ? किं वा निसर्गतो विरक्तो विषयेभ्यः ? अन्यतराभावे च कोऽधिकारोऽस्य दीक्षाग्रहणे। नहीदृशः कातरा जगद्गुरुपदवीमासादयितुमर्हन्ति। भवादृशैश्चानधिकारिणो दीक्षित्वा कलुषितोऽयं निखिलवन्द्यश्चरम आश्रमः। (क्षपणकः साश्चर्यं सातङ्कं सादरं च तन्मुखं पश्यति)

ततो भोगीमलमुद्दिश्य न्यवेदयत्—स्वामिन्, सैषा निस्सारिता श्रीमच्चरणयोर्दासी सुशीला । आगच्छ मया सार्धम् । पश्य धनं विनापि कीदृक् तोषः, कीदृशी च शान्तिरधिगम्यते ॥ अद्यावधि सुखमार्गणपरेण वन्ध्यतां नीतोऽमूल्यसमयः । साम्प्रतं दुःखं निपुणमन्वेषणीयम् ।

× × + × ×

अद्य भोगीमलस्य गृहे पूर्ववद्रुजा मृत्तरा दासा दास्यश्च न सन्ति; परं सुशीलायाः पातिव्रत्यप्रभावात्सुखं शान्तिश्च तद्गृहे निरन्तरं नृत्यति ॥

श्रीजगद्रामशर्म्मा—
मुख्याध्यापकः—श्रीहरिमन्दिर-संस्कृतविद्यालयस्य,
कोटजाई, जि०डेराइस्माइल खान ।

———

## सूचनायां सूचना ।

ले०—श्रीमदनमोहनशर्म्मा शास्त्रीयः ।

—:०:*:०:—

'सूर्य्योदय'स्य पाठकानां विदितम्भविष्यति, यत् तदीयषष्ठवर्षीयषष्ठ-सप्तमसङ्ख्ययोः 'टिप्पणे टिप्पणम्' इति मद्गुरुवराणां श्रीदीनानाथशास्त्रिमहोदयानां लेखः प्राकाश्यत; यस्य सप्तस्वंशेषु 'कौमुदी' विषये किञ्चिद्व्यचारि । तस्यैव षष्ठांशस्य कञ्चिदंशमादाय ७मवर्षीय 'सूर्य्योदय' स्य तुरीयसङ्ख्यायां महेन्द्रगढीयैस्साहित्याचार्य्यश्रीरामनारायणशास्त्रिमहाऽनुभावैः स्वाऽभिप्रेतप्रकाशनमक्रियत । एते हि परमयोग्याः सुधीवराः प्रतीयन्ते ! साहित्याचार्य्यत्वेऽपि एभिः श्रीछज्जूरामशास्त्रिप्रणीतन्यायमुक्तावलीटीकाऽपि कृपया चिरात् 'सुप्रभाते' दिङ्मात्रं समालोचिता, तथैव 'सूर्य्योदये'ऽपि स्विकामकम्पानुकम्पामूरीकृत्य श्रीनृसिंहदेवशास्त्रिणां न्यायमुक्तावलीटीकाऽपि साधारण्येन आलोचिता । एतर्हि तैर्व्याकृतिविषयेऽपि श्रीदीनानाथशास्त्रिलेखांशसमालोचने क्लिश्चिदुदयमि, अन्यदन्यदाऽपि ते कष्टमूरीकरिष्यन्तीति तेभ्यः परश्शता धन्यवादाः । तत्र प्राप्ताऽधिकारत्वाद् वयमपि किञ्चित् स्वाऽभिसंहितं प्रचिकाशयिषामः ।

साहित्याचार्य्यमहाभागैः 'ह्रयष्टन' इति सूत्रे आत्वप्रकरणस्य व्यवस्थिततत्वेऽपि तत्र 'आद्' इति योगविभागं प्रदर्श्य एकादशशब्दनिष्पत्त्युपन्यासेन

सङ्ख्याक्रमभङ्ग उपात्तः। अत एव तैरिदमुपन्यस्तम्—"यदि 'द्व्यष्टन' इति सूत्रे तत्प्रदर्शनं कृतं स्यात्तदा संख्याक्रमभंगो (?) भवति कुतस्तत्र निर्देशे पूर्वं तत्सूत्रोदाहरणानि प्रदर्शनीयानि स्युः तदनन्तरञ्च एकादशसम्बन्धिलेख इति एकादशशब्दोल्लेखः द्वादशशब्दतः परतो जनिष्यते। इष्यते तु संख्याक्रमाऽनुरोधेन ततः पूर्वम्" इति। तत्र कथयितुं शक्यते—'द्व्यष्टन' इति सूत्रस्योपन्यासं कृत्वा तद्वृत्तिञ्च लिखित्वा तत्रैव प्राग् 'आद्' इति योगविभागप्रदर्शनेन 'एकादश' शब्दं निष्पाद्य ततस्तत्सूत्रस्य 'द्वादश' इत्याद्युदाहरणानां प्रदर्शनेऽपि भवदभिमतसङ्ख्याक्रमभङ्गो नाऽभविष्यत्। "प्राक् तत्सूत्रस्योदाहरणप्रदर्शनं पश्चादेव योगविभागस्तदुदाहरणदानञ्च दीक्षितशैलीत्यपि" न वाच्यम्, 'सुपि स्थ' इति सूत्रे प्रकृतसूत्रस्य* 'समस्थ' इति प्रकृतोदाहरणं प्राङ् न प्रदाय, प्राक् 'सुपी'ति योगविभागं कृत्वा तदुदाहरणं 'द्विप' इति प्रदर्श्य तत उत्तरमेव 'विषमस्थ' इति प्रकृतसूत्रोदाहरणम्प्रादर्शि, तथैव 'द्व्यष्टन' इति सूत्रेऽपि भवितव्यमासीत्। तत् कथमन्यत्र व्यवधाने एकादशशब्दोल्लेखः? यतः पूर्वसूत्र एकादशशब्द-प्रदर्शनेन सङ्ख्याक्रमे महाव्यवधानं प्राप्तम्। तत्र हि 'एकादश' शब्दानन्तरं महाजातीयः, महाघासः, महाकरः, महाविशिष्टः, अष्टाकपालः, अष्टागवं शकटम् इति षट् सङ्ख्यातो भिन्नान्युदाहरणानि विलसन्ति। परस्ताद् 'द्व्यष्टन' इति सूत्रम्, ततस्तदुदाहरणं 'द्वादश' इत्यादि। यदि हि दीक्षितस्य सङ्ख्याक्रमप्रदर्शनायैवाऽयमुपक्रमः, तदा कथं मध्ये 'महाजातीय' इत्यादिसङ्ख्याभिन्नोदाहरणानि निवेशितानि, येन एकादशद्वादशेतिसङ्ख्याशब्दयोर्मिथो महदन्तरं समुपस्थितम्। कथं वा 'अष्टागवम्' इत्यन्तानामुदाहरणानामन्त एव योगविभागं प्रदर्श्य तत्र एकादशशब्दोल्लेखो न व्यधायि। व्याकरणे सजातीयानामप्यन्तरं पातकावहं मन्यते, किमुवक्तव्यं तर्हि विजातीयान्तरकृते। द्वितीयाह्निके महाभाष्ये 'अप्रधानत्वाद्' इतिवार्त्तिकभाष्ये आचार्य्यपाणिनेस्तुल्यजातीयानामेकत्र पठनं शैली प्रादर्शि, तदनुसरणं तदनुगामिभिरपि विधेलिमम्। अथ च सङ्ख्याक्रमे एवाऽत्राऽभीष्टे एकद्वयादिशब्दानां क्रमशो निष्पादना कुतो न व्यधायि? आत्त्वप्रकरणं नासीदिति चेत्? सङ्ख्याक्रमभङ्गस्तावत् कथङ्कारणत्वेनोपात्तः। तस्माद् यत्किञ्चिदेतत्। व्याजमात्रादधिकं मूल्यं नाऽस्य भवितुमर्हति।

किञ्च—द्वादशशब्दं प्राङ् निर्दिश्य पश्चाद् योगविभागप्रदर्शनादेकादशशब्दनिष्पादनेन यदि सङ्ख्याक्रमभङ्गमज्ञास्यत दीक्षितमहोदयः, तर्हि कौमुद्या-

* एवं 'सह सुपा' इत्यादिसूत्राणामपि सोदाहरणो योगविभागः प्राक् कृतो द्रष्टव्यः।

मस्मिन्नेव प्रकरणे द्वादश, द्वाविंशतिः, अष्टादश, अष्टाविंशतिः, त्रयोदश, त्रयोविंशतिः, द्वि (द्वा) चत्वारिंशद्, एकान्नविंशतिः, षोडश इति सङ्ख्योदाहरणाऽऽनुपूर्व्यां कथं क्रमभङ्गमादरिष्यत ? षोडशशब्दस्य च निष्पत्तिं कथमेकान्नविंशशब्दात् पूर्व्वं न निरदेक्ष्यत् ? "तस्मिन्नेव सूत्रे तद्वार्त्तिकपठनं दीक्षितशैली; तदर्थं 'षष उत्व' मिति वार्त्तिकनिष्पन्नः षोडशशब्दः सूत्रनिष्पन्नैकान्नविंशतिशब्दात्परत उपात्त" इति चेत्–संख्याक्रमस्तावत् कूपे पात्यः। अन्यत्रत्यन्तु वार्त्तिकमन्यत्राऽपि पठ्यते दीक्षितेन। 'वर्णो वर्णेन' इति सूत्रभाष्ये पठितं 'शाकपार्थिवादि' वार्त्तिकं कौमुद्यां 'क्तेन नञ्' इति सूत्रे निवेशितं दीक्षितेन। न चाऽपि 'षष उत्व' मिति वार्त्तिकम् 'एकादिश्चैकस्य' इति सूत्रस्यैव, येन ततः × पश्चात् पठ्येत, काशिकादौ तथाऽदर्शनाद्। संख्याक्रमभङ्गभीरुत्वे च दीक्षितःप्राग्वार्त्तिकमुपन्यस्य 'षोडश' शब्दञ्च निष्पाद्य पश्चात् सूत्रेण 'एकान्नविंशति' शब्दं व्याकरिष्यत्। अनुक्तपूरकवार्त्तिकस्य सूत्रात्परतो नियमितत्वे यद्येकान्नविंशषोडशशब्दक्रमभेदेऽदोष उच्येत, तर्हि किमपराद्धं योगविभागेन, असावपि वार्त्तिकवत्पाणिन्यनुक्तत्वाद् 'द्व्यष्टन' इति सूत्रोदाहरणात् परतःप्रदर्शनीयः; तथैव च दिशा 'द्वादशैकादश' शब्दक्रमभेदेऽप्यदोषो भविष्यति।

तस्मिन्नेव सूत्रे तद्योगविभागप्रदर्शनं दीक्षितशैलीत्यतःपूर्व्वएव 'आन्महत' इति सूत्रे 'एकादश' शब्द आत्त इति चेत्—तर्हि सङ्ख्याक्रमव्याजो दूरेऽपास्यताम्। स्वपक्षञ्च निराकृत्य श्रीभाण्डारिमहोदयमतमूरीक्रियताम्। परमेतदप्यनैकान्तिकपराहतम्। प्रकरणवशाद्दीक्षितस्तत्तत्सूत्रीययोगविभागमन्यत्राऽपि प्रदर्शयतीत्यस्मद्गुरुचरणैः 'टिप्पणे टिप्पणम्' इति निबन्धस्य तस्मिन्नेवांशे सम्यगुपोद्बलितम्; यच्च 'साहित्याचार्य्यैः' स्पृष्टमेव न। द्रष्टव्यम्—'गवि च युक्ते' इति वार्त्तिकस्य 'अष्टागवम्' इत्युदाहरणे 'अच् प्रत्यन्वये' त्यग्रिमस्याऽपि सूत्रस्य योगविभागमत्र कृत्वाऽच् साधितः। एवम् 'एकादिश्चैकस्य' इति सूत्रे 'एकान्नविंशति' शब्दनिष्पत्तौ, पूर्वमागतस्याऽपि 'तृतीया तत्कृतार्थेन' इति सूत्रस्य तत्र योगविभागमप्रदर्श्य, अत्रैव 'तृतीया'इति योगविभागं कृत्वा समासः साधितः ❀ एवमन्यत्र। (शिष्टमावरणस्य तृतीयपृष्ठे द्रष्टव्यम्)

× भाष्यप्रयोगादत्र पञ्चमी अन्यथा 'षष्ठ्यतसर्थ प्रत्ययेन' इति सूत्रं प्राप्तम्।

❀ अनयोः सूत्रवार्त्तिकयोः 'तृतीया' 'अच्' इत्यस्याऽननुवृत्तावपि अन्यत्रत्यो योगविभागो दर्शितः। 'द्व्यष्टन' इति सूत्रे तु 'आद्' इत्यस्याऽप्यनुवृत्तिरागच्छति; तदाऽत्र योगविभागप्रदर्शनेन किमपराद्धं भवेत्।

त्मकस्य देशस्यानुभवो द्वितीयक्षणे प्रजायते। अतश्च व्यक्तभावो देशश्चेतीमौ परस्परं तादात्म्याश्रिताविव प्रतिभातः ॥ १९७ ॥

अधुनाऽपरः परिणामो निगद्यते—

**गुणसाम्याद्गुणव्यञ्जकं महत् ॥ १९८ ॥**

अत्र तु गुणानां कार्य्योत्पत्तिवेलायां प्रथमं महदुत्पद्यते। यथोक्तं विष्णुपुराणे—

> गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने !
> गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम ॥
> प्रधानतत्त्वमुद्भूतं महान्तं तत् समावृणोत् ।

सांख्य-दर्शने प्रकृतेर्महान् इत्यादिपरिणामक्रमोऽभिहितो दृश्यते। इतश्च पूर्वावस्थायां गुणानां साम्यमेव तिष्ठति। तदानीन्तु भावातीतयो बुद्ध्या अग्राह्ययो र्देशकालयो रेवानुभवो भवतीत्यभ्युपगन्तव्यम्। तदनन्तरं हि स्वतन्त्रतया परिणामोन्मुखे गुणत्रये प्रथमं महत्तत्त्वमेवोत्पद्यते।

इदं सर्वमपि पूर्वोक्तं विज्ञानं स्पष्टप्रतिपत्तयेऽन्यथापि विव्रियते। तथा हि—यदा प्रकृतिः स्वातन्त्र्यमाश्रित्य ब्रह्मतः पार्थक्येन न तिष्ठति; किन्तु ब्रह्मण्येव विलीना तिष्ठति। सैवाऽद्वैतावस्थोपेता ब्रह्मसत्ता निगद्यते। यदा च प्रकृति र्ब्रह्मणः सकाशात् पृथग्भूय स्वातन्त्र्यसत्ताशालिनी प्रभवति, सैव सगुणावस्था कालदेशयोः परिचायिका। इमे अद्वैत-द्वैतात्मके द्वे अप्यवस्थे पूर्वापरीभावेन परस्परं सन्निदधाते। एतावत्कालावधि प्रकृतिरेव स्वस्वरूपेणाविर्भवति। गुणास्तु नाधुनापि स्वतन्त्रसत्ताशालिनो भवन्ति। यदा हि गुणेषु सर्वप्रथमं व्यञ्जकावस्था समुदेति तदैव महत्तत्त्वमाविर्भवति। तत्र च महत्तत्त्वे सत्त्वस्यैव पूर्णावस्था सन्तिष्ठते। इतो हि गुणानां कार्य्यावस्थाप्रारब्धिः प्रचलति। वस्तुतोऽवस्थायामस्यामेव ब्रह्माण्डपिण्डात्मिका सृष्टिः प्रारभ्यते। अस्यामेवावस्थायां शुद्धसत्त्वमय्यां प्रकृतौ द्रष्टृदृश्यभावसम्बन्धस्थितिरुदेति। "यो बुद्धेः परतस्तु सः" इत्यादिशास्त्रै र्या शुद्धा बुद्धि र्निर्दिश्यते, तयैव परिशुद्धया बुद्ध्या महत्तत्त्वस्यास्य सम्बन्धोऽवसेयः ॥ १९८ ॥

पुनश्चेदं विज्ञानं विस्पष्टयति—

**त्रिगुणं तत् ॥ १९९ ॥**

महत्तत्त्वस्य त्रिगुणात्मकप्रकृतिव्यङ्ग्यत्वात् तदाविर्भावेन सह प्रकृतेः सत्त्वरजस्तमोरूपाणां त्रयाणां गुणानामप्याविर्भाव सुनिश्चित इत्यभ्युपगन्त-

व्यम् । गुणपरिणामेऽयमकम्प्यो नियमो वर्तते यत् तमोगुणविकाशे सत्त्वरजसो-रप्रकाशः, रजोगुणप्राकट्ये सत्त्वतमसोरनुद्रेकः, सत्त्वसमुद्रेके च तमोरजसो-स्तिरोधानम् । महत्तत्त्वस्य त्रिगुणात्मकत्वेऽपि शुद्ध सत्त्वस्यैव प्राधान्यं तत्रोह्यम् । अत एव तत्र सत्त्वमेवं प्रद्युत्य प्रभवति स्ववृत्तिविकाशे । इतरे च तमोरजसी निगूढे निभृतं तिष्ठत इति न तयोः कार्य्यसद्भावः ॥ १६६ ॥

भूयोऽपि स्पष्टयितुमेवाह—

**अव्यक्तमावृतं महता त्वग्बीजवत् ॥ २०० ॥**

अव्यक्तभावापन्ना प्रकृतिर्हि दृश्यप्रपञ्चस्य निदानम् । पुरुषस्तु निर्लिप्त-स्तद्द्रष्ट्टमात्रः । अनयोरेव द्रष्टृदृश्ययोः प्रथमं कार्य्यं महत्तत्वम् । तच्च मह-त्तत्वं प्रादुर्भवदेव अव्यक्तं त्वक्कर्तृकबीजाच्छादनवत्सर्वत आच्छादयति । यथा हि त्वचि सत्यां यथार्थबीजं तत्र निगूढं तिष्ठति तथैव महत्तत्त्वप्रकाशे तत्रा-व्यक्तभावो निगूढस्तिष्ठति । इत्यत एव प्रकृतिपुरुषात्मकसृष्टिलीलायां महत्त-त्वमेव सूक्ष्मातिसूक्ष्मं प्रधानं तत्त्वमुच्यते ।

अस्य विज्ञानस्यावगत्यै ब्रह्मप्रकृत्योरुभयोरेवावस्थायाः परिज्ञानमाव श्यकम् । प्रकृतिर्यदा ब्रह्मणि लीना तिष्ठति । सैवाद्वैतावस्था प्रकृतेस्तुरीयाव-स्थोच्यते । त्रिगुणसाम्यावस्थापन्ना सा यदा परिणामोन्मुखी भवति तदा ब्रह्म-विष्णु-महेशजननी हिरण्यगर्भकालादिप्रसवित्रीति कारणप्रकृति र्गीयते । प्रकृते स्तृतीयावस्था व्यक्तावस्था निगद्यते । सैव सूक्ष्मा प्रकृतिरुच्यते । इयमेव प्रकृतिर्जगत्प्रपञ्चस्य साक्षान्निदानम् । स्थूलञ्च प्रकृतिमयं जगत्तस्याः कार्य्यं जेगीयते । इत्थमेव ब्रह्मप्रकृतिं स्थूलसूक्ष्मकारण-तुरीयात्मकरूपेण ज्ञात्वा वाङ्मनोबुद्धिवैभवातीतं सृष्टिविज्ञानं प्रत्येतुमर्हति पुमानिति ॥ २०० ॥

तदनन्तरभवं परिणाममाख्याति—

**तस्मात् त्रिविधोऽहङ्कारः ॥ २०१ ॥**

स्वभावादेव परिणामिनी प्रकृतिर्महत्तत्त्वानन्तरं द्वितीयं परिणाममहङ्कार-तत्त्वं प्रसूते । तच्चाहङ्कारतत्त्वं त्रिगुणानुसारेण त्रिविधं भवति । अहंतत्त्वत एव जीवभावस्योदयो भवति । अहंतत्त्वबलेनैव देही स्वात्मानं स्वतन्त्रतया विराट् शरीरतो भिन्नत्वेनाध्यवस्यति । 'भाति' 'अस्ति' चेत्युभयोऽपि भावः परस्परं मिलितः स्वतन्त्रामेवान्यामेकां सत्तां जनयति, या हि अहंतत्त्व-शब्दवाच्या भवति । त्रिविधाहङ्कारविषये स्मृतय इत्थमभिदधति । तथा हि—

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत ।

प्रकृतिर्हि ब्रह्मणः सकाशात् पृथग् भवन्ती निर्गुणमपि ब्रह्म सगुणं सम्पादयति । अपरञ्च तदानीं ब्रह्मणः ब्रह्मप्रकृतेश्च सत्ता पार्थक्येन प्रतीयते । यदा प्रकृतिपुरुषात्मक-शृङ्गारेणानन्दमयकोषस्योदयो भवति, तदानीमेव चानन्दमयकोशेनात्मा संच्छन्नो भवतीति कथ्यते । ततश्च आत्मप्रतिविम्बिता शुद्धसत्त्वमयी प्रकृति र्महत्तत्त्वशब्दभाग् भवति । अस्यामेवावस्थायामुच्यते यदानन्दमयकोशसहित आत्मा विज्ञानमयकोशेनाच्छन्नो भवतीति । एतदनन्तरञ्च यदा जीवस्य स्वतन्त्रसत्ताऽस्मितया स्थिरीकृता भवति,तदैव त्रिगुणात्मकस्य त्रिविधाऽहङ्काररूपस्याहन्तत्त्वस्योदयो जायते । अस्यामेवावस्थायां कथ्यते यन्मनोमयकोशेन कोशद्वयावृत आत्मा आच्छादितो विद्यत इति । पूर्वदशायां यथा बुद्ध्युदयो भवति तथैव अस्यां दशायां मनसोऽप्युदयो भवतीति ।

केषुचिच्छास्त्रेषु आत्मनः क्रमश आनन्दमयकोशेन विज्ञानमयकोशेन मनोमयकोशेन चावृतत्वस्योपाख्यानमासाद्यते । कुत्रचन शास्त्रेषु च प्रधानेन महतस्तत्त्वस्य तेन च त्रिविधाहङ्कारस्याच्छादनं क्रियत इत्यासाद्यते । इत्थं परस्परं विरुद्धयोः सिद्धान्तयोः शास्त्रादिषु सत्त्वे केन सत्येन भाव्यमिति शङ्कायाः समाधानमाह—

पञ्चभिः कोशैरात्मन आवरणं स्वाभाविकमेव । अपरञ्चानन्दमयकोशतो विज्ञानमयकोशस्य ततश्च मनोमयकोशस्य स्थौल्यं विज्ञानसिद्धम् । अतश्च सूक्ष्मस्य स्थूलेनावरणमपि विज्ञानसिद्धम्, तथा तद्विरुद्धदिशा प्रथमेन प्रधानेन द्वितीयस्य महतस्तेन चाहंकारस्याच्छादनमपि द्वितीयं दार्शनिकविज्ञानं नैव युक्तिविहीनम् । यतो हि यथा आकाशे वायुरोतप्रोतो वायौ च जगदित्येवंविधया तस्य समाधानमूह्यम् ॥ २०१ ॥

तदनन्तरं जायमानं परिणाममाह—

ततः सूक्ष्म-प्रपञ्चः ॥ २०२ ॥

त्रिविधेनाहङ्कारेण कथं सूक्ष्मस्य प्रपञ्चस्योदय इति विषयस्य वेदशास्त्रयोरनेकधा वर्णनमासाद्यते । तस्य सारांशोऽयमवसेयः । तामसाहङ्कारो हि विकारमासाद्य शब्दतन्मात्रं ससर्ज । शब्दतन्मात्रं हि शब्दविशिष्टमाकाशं ससर्ज । आकाशो हि विकृतिमासाद्य स्पर्शतन्मात्रं ससर्ज, तस्माच्च स्पर्शगुणविशिष्टो वायुरुदपद्यत । तदनन्तरं विकृताद्वायो रूपतन्मात्रा ज्योतिश्च समुदपद्येताम् । ज्योतिषि च विकृतायां रसतन्मात्रोत्पत्तिः, ततश्च तद्विशिष्टं जलं समुदपद्यत, जले

च विकृते गन्धतन्मात्रोत्पत्तिः, ततश्च तद्विशिष्टा पृथिवी समुत्पद्यते । यदीयो गुणो गन्ध उच्यते । सूक्ष्मभूतानामेव तन्मात्रशब्दवाच्यत्वमूहनीयम् ।

राजसादहङ्काराद् दशानामिन्द्रियाणामुत्पत्तिरभिहिता। सात्त्विकाच्च तस्मात्तदधिष्ठातृदेवानामिति केषाञ्चनाभिधानम् । केऽपि तु सात्त्विकाहङ्काराज्ज्ञानेन्द्रियगणो राजसाच्च कर्मेन्द्रियाणि उभयात्मकमत्र मन इत्याहुरिति ।

चेतनसाहाय्यमन्तरा न जडे क्रियोत्पत्तिः । यथा परमपुरुषसाहाय्यमन्तरा मूलप्रकृतिरपरिणामिनी तिष्ठति । तत्संयोगेनैव तदर्थं कार्य्यंकरोति सांख्यसिद्धान्तः । तथैव प्रकृतिपरिणामतो जायमानाः सर्वेऽपि पदार्थाः पृथक्त्वेन स्वात्मनि स्वाधिष्ठातृदेवान् स्थापयन्ति, ये च तेषामधिदैवभावा उच्यन्ते । तेष्वेव सात्त्विकाहङ्कारस्थितिः । राजसादहङ्काराद्दशानामिन्द्रियाणां समुत्पत्तिरिति पक्षसमर्थकमिदं विज्ञानमवसेयम् । यतो हि रजोगुणस्य धर्मः क्रिया सा चेन्द्रियबलेनैव प्रपञ्चेऽस्मिञ्जायते । इत्थञ्चाहङ्कारात् सूक्ष्मप्रपञ्चोत्पत्तिरिति पर्य्यवसितम् ।

विज्ञानमिदमन्यथापि अवगन्तुम्पार्य्यते । तथा हि—आनन्दमयकोशो विज्ञानमयकोशश्च कारणप्रपञ्चशब्देनोच्यते । मनोमयकोशः प्राणमयकोशश्च सूक्ष्मप्रपञ्चो निगद्यते । प्राण एवेन्द्रियादिसाधनानां सर्वा अपि क्रियाः सञ्चालयति । अतश्च सोऽपि सूक्ष्मशरीरान्तर्गत एव कथ्यते ॥२०२॥

अधुनाऽन्तिमपरिणामं ब्रवीति—

स्थूलजातमन्ते ॥ २०३ ॥

पञ्चीकृतानां महाभूतानां कार्य्यं स्थूलप्रपञ्चशब्देनोच्यते । ब्रह्माण्डं पिण्डश्च तदीयं स्वरूपमुच्यते । स्थूलशरीरस्य विस्तरशो विवेचनं पूर्वमेवानुष्ठितम् । पिण्डानां विभेदा अपि प्रागेव यथायथं निरूपिताः । इत्थञ्च पिण्डसमूहानां ब्रह्माण्डस्य स्थूलांशानाञ्च प्रकृत्या सम्बन्धो ज्ञेयः । फलतो यत्किञ्चित् सूक्ष्मप्रकृतेः कार्य्यजातं तदेव स्थूलप्रपञ्चमुच्यते ॥ २०३ ॥

सृष्टिप्रसङ्गतोऽभिधत्ते—

पिण्डवदुत्पत्तिविनाशौ ब्रह्माण्डस्य ॥ २०४ ॥

ब्रह्माण्डस्य ब्रह्माण्डगोलकस्य उत्पत्तिविनाशौ सृष्टिप्रलयौ पिण्डवद् पिण्डसदृशावेव विज्ञेयौ इति सूत्रार्थः । यथा हि—संस्कारात्मककारणतः पिण्डसृष्टिर्जायते तथैव ब्रह्माण्डोत्पत्तिरपि विभावनीया । सञ्चिता एव संस्काराः फलोन्मुखाः सन्तः प्रयाणकाले चरमवृत्तिवशाद् विपाकमारूढा अङ्कुरिता भवन्तः प्रारब्ध-

शब्दवाच्या भवन्ति, प्रारब्धपरिपाकेनैव मानवैः पिण्डरूपं स्थूलशरीरं समासाद्यते। एवमेव "यथापूर्वमकल्पयदिति" वैदिकविज्ञानानुसारतो गतब्रह्माण्डस्य पूर्वसंस्कारस्मरणपूर्वकं सगुणब्रह्मस्वरूपो ब्रह्मा ब्रह्माण्डान्तरं निर्माति। यथा हि प्रारब्धभोगानन्तरं पिण्डपातो जायते तथैव ब्रह्माण्डस्य समष्टिप्रारब्धभोगानन्तरं तद्ब्रह्माण्डमपि महाप्रलयात्मकप्रकृतिगर्भे विलीयते ॥ २०४ ॥

प्रसङ्गतो ब्रह्माण्डोत्पत्तिकारणं विस्पष्टयति—

**कारणवारि जन्महेतुः ॥ २०५ ॥**

मनुष्यपिण्डेन देवपिण्डेन च सार्धं यथा कर्माशयस्य सम्बन्धस्तदुदाहरणानुसारतो ब्रह्माण्डेन सह कारणवारिणः सम्बन्धो विज्ञेयः। जीवानां कर्माशयकोशेऽनन्तकोटिजन्मनां कर्मबीजसंस्काराः सुरक्षितास्तिष्ठन्ति तेषु। च ये संस्काराः प्रारब्धीभूय उपरितनस्तरगता भवन्ति। त एव हि नूतनं पिण्डं निर्मान्ति। तथैव ब्रह्माण्डस्यापि समष्टिसंस्कारः कारणसमुद्रः कारणवारि वोच्यते। उक्तञ्च मनुना—

"अप एव ससर्जादौ तासु बीजमवासृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥"

एकस्य ब्रह्माण्डस्योत्पत्तिवेलायां कारणसमुद्रतः संस्कारराशिः सङ्घीभूय तद्ब्रह्माण्डस्य समष्टिप्रारब्धं जनयति। अतश्च कारणवार्य्येव ब्रह्माण्डोत्पत्तिहेतुत्वेनावसेयम् ॥ २०५ ॥

प्रसङ्गतोऽभिधत्ते—

**तत्र त्रिमूर्त्तिः ॥ २०६ ॥**

एकस्य ब्रह्माण्डस्योत्पत्तिकारणं समष्टिप्रारब्धबीजमङ्कुरितं सत् यदा ब्रह्माण्डं निर्मातुमुन्मुखं भवति, तदा पूर्वोक्तविज्ञानानुसारतः प्रकृति-परिणामः समष्टिरूपतो भवति। तत्र त्रिगुणात्मक-परिणामानुसारेण त्रयाणामपि गुणानामधिष्ठातारो ब्रह्मा विष्णु र्महेशश्चेति त्रयो देवा आविर्भवन्ति। यथोक्तं मनुना—

"तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥"

इम एव त्रयो ब्रह्माण्डस्य वस्तुतो नेतारो भवन्ति। एकश्च सृष्टेरपरः स्थितेरन्यस्तु प्रलयस्याधिष्ठाता भवति। यस्य ब्रह्माण्डस्येमेऽधिष्ठातारो भवन्ति, तस्य सर्वमप्यध्यात्माधिदैवाधिभौतिकप्रपञ्चजात मेषा मेवाधीनं यथाक्रमं तिष्ठति ॥ २०६ ॥

प्रसङ्गसङ्गत्याऽन्यदप्याह—

**ततश्चतुर्दशकलं गोलकम् ॥ २०७ ॥**

अद्यावधि दृश्यप्रपञ्चजातस्य मौलिकमधिदैवस्वरूपं वर्णयित्वा सम्प्रति तस्याधिभूतस्वरूपं वक्ति। मूर्तित्रयस्याविर्भाववेलायामेव चतुर्दशसु भागेषु ब्रह्माण्डगोलकं विभक्तं तिष्ठति। कारणावस्थायां प्रकृतेस्त्रिगुणात्मिकत्वेऽपि तत्कार्य्यं सप्तसु भागेषु विभक्तं भवति। यथा हि कालः सप्ताहे, रश्मिः सप्त-ज्योतिषि, अन्धकारो हि सप्तच्छायावर्गे, ज्ञानमज्ञानञ्च सप्त-सप्तभूमिकायां विभक्तं तिष्ठति, तथैव ब्रह्माण्डमपि सप्तसु देवलोकेषु सप्तस्वेवासुरलोकेषु विभक्तं विद्यते। इमान्येव सप्त सप्त मिलित्वा चतुर्दशभुवनान्युच्यन्ते ॥ २०७ ॥

मूर्तित्रयेऽपि उत्पादिका मूर्त्तिः केत्याह—

**उत्पादको ब्रह्मा ॥ २०८ ॥**

यदा हि ब्रह्मप्रकृतिस्तुरीयावस्थायां ब्रह्मण्येव विलीना तिष्ठति तदा तद्ब्रह्म अद्वैतपदभाग् भवति। ततश्च यदा प्रकृति निजां तुरीयामवस्थां जहती सूक्ष्मा-वस्थां च गृह्णती स्वातन्त्र्येण स्ववैभवमासादयति, तदानीं प्रकृतेः सूक्ष्मावस्थायां तयाऽलिङ्गितः परमः पुरुष ईश्वरः पुरुषविशेषः प्रजापतिर्वोच्यते। तदनन्तरञ्च प्रकृतेः कारणावस्थायां यदा त्रिगुणविकारो विकाशमासादयति त्रयोऽपि गुणाः स्वस्वकार्य्ये स्वातन्त्र्येण तत्पराः भवन्ति। तदैव तेषां त्रयाणामपि गुणानाम-धीश्वराः त्रिमूर्तिशब्दवाच्या भवन्ति। तत्र तेषु ब्रह्मैव प्रथमो गण्यते। तत्र श्रुतिरपि प्रमाणयति—

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता"।

"हिरण्य-गर्भं जनयामास पूर्वम्"।

"यो वै ब्रह्माणं विदधाति पूर्वम् ॥"

रजोगुणादेव सृष्टिर्भवति। यतो हि रजोगुणः प्रवृत्तिशीलो निगद्यते। तस्य रजोगुणस्यावलम्बेन सगुणो ब्रह्मस्वरूपो यः कार्य्यसम्पादको भवति स एव श्रीभगवान् ब्रह्मेत्युच्यते। एकस्य ब्रह्माण्डस्य सर्वमपि कार्य्यजातं तस्यैवा-धिष्ठातृत्वे सम्पद्यते।

सृष्टिविज्ञानं विस्पष्टयितुं पुनराह—यदाऽद्वैतस्वरूपतो द्वैतभावमयस्य दृश्यप्रपञ्चस्योदयो भवति, सा हि सृष्टेः प्रथमावस्था स्तरद्वये विभाजितुं शक्यते। एका हि प्रजापतेः सगुणब्रह्मणः सृष्टिर्द्वितीया हि जगत्कर्त्तुर्ब्रह्मणः सृष्टिः। सर्वतः प्रथमं ब्रह्माण्डगोलकस्यादिमावस्था समुद्भवति। फलतो जीवो-त्पत्तितः पूर्वं जीवानां वासोपयोगि अण्डगोलकं सगुणब्रह्मण इच्छानिच्छारूपे-

च्छया प्रकृतिस्वभावेनेति यावदुत्पद्यते। अयं हि सृष्टेः प्रथमः स्तरः समाख्यायते। तदनन्तरञ्च तस्मिन्नेव ब्रह्माण्डे तिसृणां ब्रह्मविष्णुमहेशात्मकमूर्तीनामाविर्भाववेलासमकालमेव तद्गोलकं भागद्वये विभक्तं सत् सप्तोर्द्ध्वं सप्ताधोभागे चतुर्दशभुवनरूपेण विभक्तं भवति। तत्रैव च चतुर्दशस्वपि भुवनेषु त्रिविधा अपि जीवपिण्डराशयः प्रादुर्भवन्ति। सैव ब्राह्मी सृष्टिरुच्यते। तत्र ब्राह्मसृष्टावेव यथार्थतो जीवसृष्टिः प्रारब्धा भवति। यस्याः त्रिविधानामपि पिण्डानां पूर्वमेव विस्तरशो वर्णनं विहितमास्ते ॥ २०८ ॥

स्थितिकर्त्ता क इति दर्शयति—

**स्थितिहेतु र्विष्णुः ॥ २०९ ॥**

पूर्वमेवेदं समर्थितमस्ति यद् यत्र रजस्तमसोः साम्यमुदेति तत्रैव सत्त्वोदयः समेधत इति। रजसा सृष्टेराकर्षणस्य च सम्बन्धः। तमसा तु प्रलयस्य विकर्षणशक्तेश्चेति निराकुलः पन्थाः। उदाहरणतो यथा—सृष्टेरारम्भसमये सर्वेषामेव परमाणूनां समाकर्षणं भवति, प्रलयकाले च सर्वेषां तेषां विकर्षणं जायते। यदा हि अनयोरुभयोरपि क्रिययोः समन्वयो विराजते तदैव ब्रह्माण्डपिण्डात्मिकायाः सृष्टेः स्थितिरक्षुण्णा तिष्ठति। सत्त्वगुणस्येदं विलसितं यत् स्थितिर्निश्चला निरुपद्रवा च समेधमानैवोत्तरोत्तरं वर्द्धत इति। अस्या एव सृष्टेः सात्त्विक्याः क्रियाया अधिष्ठातृदेवो भगवान् विष्णुर्निगद्यते। तत्र सृष्टौ यावन्त्यपि सत्त्वगुणाश्रितानि कार्य्यजातानि सन्ति तानि सर्वाण्यपि श्रीमतः सत्त्वाश्रयस्य भगवतो विष्णोरधिष्ठातृत्वे सम्पद्यन्ते ॥ २०९ ॥

सम्प्रति प्रलयकर्त्तारं निर्दिशति—

**संहर्ता रुद्रः ॥ २१० ॥**

सृष्टिस्थितिप्रलयेषु त्रिष्वपि चरमा क्रिया प्रलयरूपा भवति। इत्यतश्च शास्त्रेषूपलभ्यते यद् रुद्रस्य सर्वतोऽपि समधिकमायुरिति। ब्रह्माण्डे यत्र कुत्राऽपि प्रलयक्रिया ब्रह्माण्डपिण्डात्मकसृष्टिप्रपञ्चे प्रचलति, सा सर्वाऽपि श्रीमतो भगवतो रुद्रस्याधिष्ठातृत्व एव समेधत इति। ब्रह्मविष्णुमहेशात्मकं पदत्रयमिदं गण्यते। अस्यैव पदत्रयस्याधिकारिणो ब्रह्मविष्णुमहेशाः त्रयोऽपि देवा ईश्वरशब्देनैव गृह्यन्ते। रुद्रायुःपरिमाणत एव तदीयब्रह्माण्डस्याप्यायु र्भवति। यत्र चैकस्मिन्नेव रुद्रायुःपरिमाणात्मके ब्रह्माण्डे अनेके विष्णवः परिवर्तन्ते। तत्रापि एकस्मिन्नेव विष्णुभोग्यायुष्कालमध्ये अनेके ब्रह्माणः परिवर्तमाना भवन्ति। पदानि च तेषां नित्यानि तेषु परिवर्तमानेष्वपि तानि तथैव तिष्ठन्ति न परिवर्तितानि भवन्ति।

अनाद्यनन्तेऽस्मिन् प्रकृतिराज्ये सादिसान्ते एकस्मिन् ब्रह्माण्डे सादिसान्ता इमे त्रयोऽपि पदाधिकारिणः सगुणब्रह्मापरपर्य्यायेण कार्य्यब्रह्मशब्देनाभिधीयन्ते। यथा हि प्रकृतेः परिणामकृते पुरुषस्य प्रयोजनमपेक्ष्यते, तथैव प्रत्येकगुणक्रियासम्पत्तयेऽपि एकस्याधिदैवस्यपेक्षाऽवश्यकी इति नियमत एव प्रलयकर्त्ता तमोगुणस्याधिष्ठाता श्रीभगवान् रुद्रो निगद्यते ॥ २१० ॥

प्रसङ्गतः सर्गस्य मौलिकं विभागं निर्णयति—

**स्थावरसर्गः सप्तधातुमयः ॥ २११ ॥**

स्थावरसृष्टिः पूर्वोक्तमौलिक सप्तविभागानुसारेण सप्तधातुषु विभक्ता विद्यते। तत्रादौ स्थावरजङ्गमभेदतः सृष्टिर्द्विधा, स्थावरा जडभावापन्ना जङ्गमाचेतनभावापन्नेति विवेकः। तत्र प्रस्तर–मृत्तिकाप्रभृतयः स्थावरसृष्टिकोटिमाश्रिताः, यावत्पिण्डं पिण्डसृष्ट्यो जङ्गमान्तर्गताः। स्थावरसृष्टौ सुवर्णादिसप्तधातूनां प्राधान्यम्। तत्र तेषां धातूनां तारतम्यभावेन तेषु स्थूलानां वैद्युतिकशक्तीनां तारतम्यं विद्यते। तेनैव तारतम्यभावेन तत्र गुणविकाशो भवति।

पूज्यपादानां महर्षीणामयं सिद्धान्तोऽस्ति यत् यावत्यः स्थावरसृष्टयः सन्ति तत्र सर्वत्र स्वर्णलोहादिसप्तधातूनां तारतम्यं तिष्ठति। तदनुसारत एव तेषु तडिदादिसप्तस्थूलशक्तीनामाकर्षणविकर्षणे भवतः। तदनुसारेणैव तेषु तादृशानां गुणानां विकाशो भवति। एषामेव सप्तधातूनां तारतम्यभावतः सर्वास्वपि स्थावर-सृष्टिषु फलोत्पत्तिर्भवति।

शङ्कासमाधानभावेन विस्पष्टयितुमाह—तथा हि संसारेऽस्मिन् ये धातव-उपधातवः श्रूयन्ते प्रतिदिनञ्च तेषामाविष्कारः समेधमान एवास्ते। पदार्थविज्ञानविद्यया धातूनामनेकत्वमेव संसाध्यते तत्र किं निदानमिति शङ्कायाः समाधानमाह—

सर्वदर्शिनां महर्षीणां मते जगति यावन्तो धातव उपधातवो वा सन्ति अग्रेऽपि भविष्यत्काले यावन्तोऽपि धातव आविष्कृता भविष्यन्ति, ते सर्वेऽपि शास्त्रोक्तेषु सप्तस्वेव धातुषु अन्तर्भूता भविष्यन्ति। यतो हि तेष्वपि नवीनाविष्कृतेषु धातुषु प्रधानीभूतानामेषामेव सप्तानां धातूनां रूपान्तरं तिष्ठति।

द्वितीया शङ्का तु स्थूलप्रकृतेः विभागसप्तकविषये सम्भवति। तस्याः समाधानमिदम्। यत् तुरीयाशक्तिः कारणशक्तिः सूक्ष्मशक्तिश्चेति शक्तित्रयातिरिक्ता याः स्थूलशक्तयः पञ्चीकृतेषु स्थावरजङ्गमात्मिकायाञ्च सृष्टौ व्याप्ता विद्यन्ते, ता अपि महर्षिभिः धर्म्माचार्य्यैः सप्तसु भागेषु विभाजिताः सन्ति। वैद्युतिकादिस्थूलशक्तयश्च तासामेव शक्तीनामन्तर्गता ज्ञेयाः। सम्प्रति पदार्थ-विज्ञा-

नविद्याविदोऽपि तासां शक्तीनां कियज्ज्ञानमासादयन्तो दृश्यन्ते । किन्तु लौकिकसृष्टित आसां शक्तीनां साधु ज्ञानं सुदुर्लभमेव भवति । आसामेव स्थूलशक्तीनां प्रभावेण स्थूलजगत्प्रपञ्चे सर्वेऽपि परिणामा जायमाना उपलभ्यन्ते । ते हि परिणामाः सृष्टिमूलकाः स्युः स्थितिमूलका वा भवेयुराहो प्रलयमूलकाः स्युस्ते सर्वेऽपि तासामेव शक्तीनां प्रभावतो जायन्ते इति निश्चप्रचम् । अपरञ्च स्थूलप्रपञ्चे सप्तधातूनां साहाय्येनैवेषामाकर्षणविकर्षणक्रियाः सम्पद्यन्ते ॥ २११ ॥

अधुना द्वितीयं ब्रवीति—

**तथा जङ्गमः ॥ २१२ ॥**

यथा हि स्थावरेषु सप्तानां धातूनां सम्बन्धो विद्यते तथैवेहाऽपि जङ्गमेषु रक्तमांसादि सप्तधातूनां स्वभावसिद्धा सम्बन्धसत्ताऽवसेया। आयुर्वेदशास्त्रस्याऽयमविकल्प्यः सिद्धान्तोऽस्ति यद्रसरक्तमांसमेदोऽस्थिमज्जाशुक्रस्वरूपाणां सप्तानां धातूनां साहाय्येनैव सर्वेऽपि पिण्डानि स्वस्थीभवन्ति, तथैषामेव सप्तानां धातूनां साहाय्येन जीवानां स्थूलशरीराणि निर्मीयन्ते । उपवेदात्मकस्य तस्यैव शास्त्रस्याऽयमपि सिद्धान्त उद्घुष्यते यत् शरीरेषु सत्त्वरजस्तमःस्वरूपाणां त्रयाणामपि गुणानां प्रतिनिधिरूपेण यथाक्रमं पित्त-वात-कफात्मकास्त्रयस्तत्त्वभेदा विद्यन्ते । यथा हि सत्त्वरजस्तमसां साम्ये सति प्रकृतिः साम्यावस्थामुपेता भवति, ततश्च प्रकृति-साम्यतो मुक्तिपदमभ्युदेति, तथैव स्थूलशरीरेऽपि पित्त-वातकफानां त्रयाणामपि साम्येन स्थूलशरीरं स्वस्थं तिष्ठति। अन्यच्चैषामेव साम्यं मुक्तिपदोपलब्धये समर्थं भवति । तस्यैव शास्त्रस्यायमपि सिद्धान्तो विद्यते यत् पित्त-वातकफानां साम्येनैव रसरक्तमांसादि सप्तधातूनां सामञ्जस्यं शरीरे तिष्ठति येन स्वास्थ्यस्य रक्षा समासादिता भवति ।

केचनायुर्वेदशास्त्रज्ञास्तु पुरुषेषु सप्तमं धातुं शुक्रमामनन्ति । तत्स्थाने स्त्रीषु तु रजो वीर्य्यञ्चेत्युभे अपि स्वीकुर्वन्ति। तस्मादेव हेतोः स्त्रीषु तेषां सम्मतौ अष्टौ धातवो भवन्ति। एतद्धि स्त्रीणां सृष्टिक्रियायां प्राधान्ये निदानम् । परन्तु स्त्रीजातौ केवलं रजस एव सत्तास्वीकारे तस्यैव च वीर्य्यान्तर्भावेन तदाख्ययैव समाह्वाने सप्तधातुविज्ञाने न कोऽपि विरोधो ज्ञेयः ॥ २१२ ॥

अन्यच्चाह—

**ॐकारतः शब्दसर्गः सप्तविधः ॥ २१३ ॥**

प्रकृतविज्ञानपुष्ट्यै सृष्टिप्रकरणस्था अपरेऽपि विभागाः परिदर्श्यन्ते । तथा

हि शब्दमय्याः सृष्टेर्यः प्रथमस्तरङ्ग उद्भवति तस्यापि सप्तैव निषादर्षभगान्धार-षड्जमध्यम-धैवतपञ्चमा इति विभागा भवन्ति । प्रणवस्योत्पत्तावपि शास्त्र-कृत एवं व्याहरन्ति । तथा हि—

कार्य्यं यत्र विभाव्यते किमपि तत्स्पन्देन सव्यापकम् ।
स्पन्दश्चाऽपि तथा जगत्सु विदितः शब्दान्वयी सर्वदा ॥
सृष्टिश्चापि तथादिमाकृतिविशेषत्वादभूत् स्पन्दिनी ।
शब्दश्चोदभवत् तदा प्रणव इत्योङ्काररूपः शिवः ॥

साम्यावस्थापन्नया प्रकृत्या यथा ओङ्कारात्मकस्य प्रणवस्य सम्बन्धस्तथैव वैषम्यावस्थाशालिन्या प्रकृत्या सप्तानां स्वराणां सम्बन्धः । शब्दमय्याः सृष्टे-र्मूलं कारणं निदानमिति यावत् निषादादयः सप्तस्वरा एवावसेयाः । ते च सप्तापि स्वराः प्रणवाज्जायमानास्तस्यैव सप्तध्वनिविभागत्वेन परिगणिताः सन्ति । सर्वासामपि शाब्दिकसृष्टीनां मूलं कारणं त एव सप्तस्वराः कथ्यन्ते । अत्रेदं जागरूकं प्रमाणं यद् जगति इत्थम्भूता न केऽपि शब्दाः सन्ति ये एभिः सप्तभिः स्वरग्रामैर्न प्रकटीक्रियन्ते । अतश्चदं निर्विवादं सिध्यति यद् एकेन अद्वितीयेन ॐकारेणैव सप्तानां स्वराणां प्राथमिकी सृष्टिर्भवति । ततश्च तैः सर्वाऽपि शब्दमयी-सृष्टिर्जायते ययेदं जगत् सर्वतो भावेन परिव्याप्तम् ॥ २१३ ॥

तद्वच्च—

तथेतरे ॥ २१४ ॥

रूपरसादीनां सृष्टिरपि सप्तविधैव परिलक्ष्यते । शब्दसृष्टितोऽन्या यावत्योऽपि सृष्टय इह जगति परिलक्ष्यन्ते ताः सर्वा अपि अनेनैव वैज्ञानिकनिय-मेन सप्तधैव विभावनीया । यथोक्तं शास्त्रान्तरे—

"परं यथार्थतस्त्वेका द्वितीयाऽहं न संशयः ।
अन्ये भेदाश्च भो देवाः श्रूयन्तां सप्तधा मम ॥
स्थूलसूक्ष्मप्रपञ्चेषु व्याप्तास्मि सप्तरूपतः ।
अज्ञानज्ञानयोरस्मि भूमयः सप्त सप्त च ॥
उद्र्ध्वलोकाश्च ये सप्त ह्यधोलोकाश्च सप्त ये ।
अहमेवास्मि ते सर्वे सप्त प्राणास्तथैव च ॥
सप्त व्याहृतयः सप्त समिधः सप्तदीप्तयः ।
अहमेवास्मि भो देवाः ! सप्तहोमा न संशयः ॥
वारा वै सप्त भूत्वाथ कालं हि विभजाम्यम् ।

सप्तभूम्यनुसारेण ज्ञानस्य त्रिदिवौकसः ।
सप्त ज्ञानाधिकाराश्चोपासनायास्तथैव ते ॥
सप्त कर्माधिकाराश्च सर्वे तेऽस्म्यहमेव भोः ।"

इत्थञ्च सर्वत्रैव संसारेषु स्थूलसूक्ष्मरूपात्मके प्रपञ्चे सप्तानामेव सृष्टि-भेदानां प्रत्यक्षतोऽनुभवो जायते । यथा हि पिण्डान्तर्गताः सप्त धातवः स्थावरे ब्रह्माण्डेऽपि सप्तधातवः इत्येवं सप्तधा सृष्टिः सर्वत्रैव संविभक्ता दृश्यते । स्वरसृष्टिरपि सप्तधैव विभक्तेति सम्प्रत्येव प्रमाणित । तथैवो-पर्य्युक्तेन शास्त्रीयप्रमाणेनेदमेव प्रमाणितं भवति, यत् सर्वमपि अन्तर्बहिर्जगत् सूक्ष्मस्थूलात्मकं वा जगत् सप्तविधसृष्टिविभागेनैव परिव्याप्तमिति ॥२१४॥

रूपसृष्टिरहस्यस्य वैशिष्ट्यमभिधत्ते—

**रूपसर्गश्चतुर्दशविधो ब्रह्माण्डवत् ॥ २१५ ॥**

सृष्टेर्विविधानामङ्गानां सप्तविभागाः सन्तीति सर्वथा लक्षयित्वा सम्प्रति रूपविज्ञानरहस्यं लक्षयितुकामः सूत्रकृद् ब्रूते-यथा ब्रह्माण्डं चतुर्दशसु विभागेषु विभक्तं तथैव रूपसृष्टिरपि चतुर्दशधा विभक्तोच्यते ।

ब्रह्माण्डमिदं चतुर्दशलोकमयमुच्यते, तथा हि उपरितनाः भूर्भुवः प्रभृतयः सप्तलोकाः। अधोगाश्चातलवितलादयः सप्तलोकाश्चेति मिलित्वा चतुर्दश भवन्ति । तत्रोपरिस्थाः सप्त लोका देवलोकशब्देनोच्यन्ते । अधोगाश्च सप्तासुरलोकशब्द-वाच्या भवन्ति । इम एव श्रेणिद्वयगा लोकाः चतुर्दशभुवनशब्देनाप्युच्यन्ते ।

दृश्यमयी सृष्टिः सर्वापि रूपमयीति विज्ञानसिद्धम् । अतश्च तस्या अपि चतुर्दशविभागे विभक्तत्वं नासम्भवि । तथा हि रूपसृष्टि द्विधा विभक्ता दृश्यते । सप्तधा ज्योतिषि, सप्तधैव छायायाम् , इत्थं मिलित्वा साऽपि चतुर्दश-धैव कथ्यते ।

शास्त्रेषूपलभ्यते यत् सूर्य्यदेवस्य रथे सप्ताश्वा अग्रे तिष्ठन्ति ये चाग्रे रथमाकर्षन्ति सप्त च पृष्ठे तिष्ठन्ति ये च रथेन सहैव व्रजन्ति । तत्रेदमेव विज्ञान-मवगन्तव्यम् यत् सप्ताग्रेतना ज्योतिर्मया रूपविभागाः सप्त च पृष्ठगास्तच्छाया एव नान्यत् किञ्चित् । तात्पर्य्यतः प्रकाशाः सप्त ज्योतिर्मया अन्धकाराश्च सप्त छायामया अवसेयाः । सम्प्रति चित्रकलायामपि सप्तरङ्गाणि सप्त च तदीय-च्छाया दर्शयित्वा दृश्यचित्राणि निर्मीयन्ते । अतश्च सर्वापि रूपसृष्टिश्चतुर्दश-विभागे विभक्तेति सर्वथैवोहनीयम् ॥ २१५ ॥

अन्यदप्याह—

**आधिक्यं शब्दरूपयोर्नामरूपात्मकत्वाद्विश्वस्य नामरूपात्मकत्वाद्विश्वस्य ॥ २१६ ॥**

इतिश्रीमहर्षिभरद्वाजकृत-कर्म्ममीमांसादर्शने संस्कारनामको
द्वितीयः पादः समाप्तः ।

सृष्टि-प्रपञ्चस्तद्विभागाश्च सर्वे नामरूपात्मका एव सन्ति ।; यत्रैव सृष्टिर्विद्यते येऽपि च सृष्टाः पदार्थाः सन्ति तेषां सर्वेषामपि नामरूपे स्तः । यतो हि विना नामरूपाभ्यां नैव किमपि दृश्यं सम्भवति । सुतरां जगतोऽस्य नामरूपात्मकत्वमेव स्वतः सिद्ध्यति । इत्थतश्च नामरूपयोः सर्वाधिकविस्तारे न कोऽपि सन्देहलेशः । संस्कारजन्यायाञ्च समष्टि-व्यष्टिसृष्टावपि नामरूपयोरेवातिविस्तारः ।

एतत्सूत्रोक्तविज्ञानावगतये सर्वप्रथममिदमवगन्तव्यम् यत् अवाङ्मनसगोचरेऽद्वितीये ब्रह्मणि यदा द्वैतप्रपञ्चोदयो भवति तदा तन्नामरूपात्मकमेव भवति । दृश्यमपि तत्र यत्किञ्चनोत्पद्यते तदपि पूर्वसंस्कारजन्यमेव । इत्थञ्च संस्कारजन्या सर्वाऽपि सृष्टिः नामरूपाश्रयेणैव प्रचलति । कारणे विद्यमानयोर्नामरूपयोः कार्य्येऽपि तयोराधिक्ये कः संशयः । यावद्धि सृष्टिसत्ताऽस्ति तावन्नामरूपसत्ताऽपि स्थास्यतीत्यत्र कः सन्देहः । तच्च नामरूपात्मकं विज्ञानं सत्यमूलकमित्येवावभासते । यतो हि यस्य पदार्थस्य बाह्यं स्वरूपं यथाऽवलोक्यते तस्याभ्यन्तरीणं स्वरूपमपि तादृगेव भवति । एतन्नियमानुरूपमेव मानवं रूपं दृष्ट्वा तदीयाभ्यन्तरीणां प्रकृतिमपि ज्ञातुं प्रभवन्ति सामुद्रिकविज्ञानविदो विद्वांसः । एतद्विज्ञानानुसारमेवार्य्यजातिषु नामकरणसंस्कारप्रथाऽवलोक्यते । इत्यत एव नामकरणमपि तासु आर्य्यजातिषु संस्कारत्वेन गण्यते । यस्य वर्णनं पूर्वमेव विहितम् । सूत्रेऽस्मिन् विश्वस्य नामरूपात्मकत्वविषये या द्विरुक्तिरुपलभ्यते सा हि नामरूपात्मकविज्ञानस्याधिक्यपरिपोषणाय महत्त्वप्रतिपादनायैवोपात्तेति विज्ञेयम् । पादसमाप्तिसूचनायापि द्विरुक्तिर्भवतीति दार्शनिकानां सम्प्रदायः ॥ २१६ ॥

इति श्रीमहर्षि-भरद्वाजकृत-कर्ममीमांसादर्शने सभाष्ये संस्कारपाद-
नामको द्वितीयः पादः समाप्तः ॥

———

# सूर्योदयः ।

सप्तमे वर्षे } पौषस्य पूर्णिमा सं० १९८८ । { सप्तम संख्या

## सम्पादकीया अभिप्रायाः ।



### कतिचन विमर्शाः ।



भारतेऽत्र प्रतिशतं सप्तति मानवाः कृषिमाचरन्तो जीवन्ति । यावदवधि ते शिक्षिता न विधीयन्ते न तावत् कृषिकार्यस्य कृषिप्रधानस्य भारतवर्षस्य वा साधीयसी समुन्नतिर्भवितुमर्हति । इदानीं काले शिक्षा-विभागे यावन्ति द्रव्याणि व्ययीक्रियन्ते, तेषां भागद्वयं कृषकाणां शिक्षणाय, तृतीयो भागोऽन्येषां शिक्षायै यथितव्यः ।

× × × × ×

हिन्दूनां कृते सन्ध्योपासनमत्यावश्यकं कर्त्तव्यमास्ते । सूर्योपस्थानं हि तदीयमेकमङ्गम् । बहुभिः पाश्चात्यैरपि चिकित्सकै बहुवारं स्वीयोऽभिप्राय प्रदर्शितो यत् सूर्योपस्थानविधिना नैके रोगाः समूलमुन्मूल्यन्ते । यतो हि जगदिदमस्माकं सौरमित्युच्यते । सूर्यकिरणेषु रोगनाशिन्यः शक्तयः सन्ति । ये च मानवाः सूर्यमुपस्थाय मनसा तद्ध्यानमाचरन्ति, ते दीर्घजीविनः स्वस्थाश्च भवन्ति ।

\+ + + + +

ये किल सज्जनाः शिक्षाविभागे कार्यमनुतिष्ठन्ति, ते प्रायोऽल्पजीवना भवन्ति । रक्षाविभाग-( पुलिस ) कर्मचारिणां सैनिकादीनां वा जीवनसमयो महान् भवति । सिद्धान्तोऽयं न्यायालये विश्रमवृत्त्युपभोगपराणां समवेतानां दर्शनेन प्रतीयते । शिक्षका हि स्वल्पावस्थायामेव वृद्धतामुपयान्ति, न ते बहुकालं विश्रमवृत्तिमुपभुञ्जते । अस्यामवस्थायां शिक्षकाणां वेतनेषु कार्येषु च महतः सुधारस्यावश्यकता विद्यते, येन तेषां कुटुम्बवर्गो न शीघ्रं तद्वियोगव्याकुलो भवेत् ।

आधुनिकाः संस्कृतभाषाविदः 'श्मश्रु-'कूर्च'-शब्दं परस्पर-भिन्नार्थकमामनन्ति। परन्तु प्राचीनास्तु शब्दमिमं समानार्थकं मन्यन्ते स्म। प्राञ्चो हि 'मूंछ-दाढ़ी'-इत्युभयोरेव कृते 'श्मश्रु'-शब्दं कूर्च-शब्दं वा प्रयुञ्जतेस्म। 'मूँछ-दाढी' इत्युभौ शब्दौ कदाऽन्योन्यं भिन्नतां गताविति न जानीमः।

× × × ×

वीरता-प्रदर्शनार्थमिदानीं काले जना मूँछ-मर्दनं कुर्वते। प्राचीने समये प्रथेयं नासीत्। अस्माभिस्तु वीररसप्रधानानि बहूनि नाटकानि पठितानि; परन्तु तेषु ओष्ठकच-('मूँछ') स्य नास्ति काऽपि चर्चा। संस्कृत-साहित्ये केवलं तस्य कृते कोऽपि पृथक् शब्दो न निभाल्यते। तस्य मर्दनं कृत्वा वीरताप्रदर्शनं तु दूरापास्तम्। संस्कृतनाटकेषु वीरताप्रदर्शनार्थं तर्जनं गर्जनं नेत्रविस्फारादिकं च परिदृश्यते।

× × ×

संस्कृतनाटकानामनुशीलनेनेदमपि सुविदितं भवति यत् प्राचीनभारतस्य परिच्छदादिकं कीदृशमासीदिति। प्राचीना भारतवर्षीयाः कञ्चुकम् ( जामा ) उष्णीषम् ( पगड़ी ) पटम् ( चादर ) धौतवस्त्रम् ( धोती ) चोपयुञ्जते स्म। स्त्रियस्तु धौतम् ( धोती ) कञ्चुकीं ( चोली ) च पर्यधुः। वशिष्ठस्मृतौ 'कुर्ब' शब्दः परिदृश्यते, यस्यार्थः "कुर्त्ता" इति। परन्तु संस्कृतेषु नाटकेषु काव्येषु वा नास्ति कुत्रापि कुर्बस्य चर्चा। गोरक्षपुरमण्डलान्तर्गतसलीमपुर—मझौली-ग्रामसन्निधाने कुहावग्रामो वर्त्तते। तत्रैकस्य कीर्तिस्तम्भस्यापरि पाटलिपुत्रेश्वरकुमारगुप्तमहेश्वरस्य चित्रं निर्मितमास्ते। चित्रितोऽयं महोदयः 'बुटाम'—युक्तं 'कोटं' परिदधाति, तस्य पादयोश्च 'पायजामा' परिदृश्यते। तत्र स्तम्भे वैक्रमीयं "सम्वत् १३२०" इति वर्षं समुल्लिखितं पश्यन्ति जनाः। एतेनावगम्यते यत् भारतेऽत्र सप्तशतवर्षेभ्यः पूर्वमपि 'कोट'—'पायजामा'—प्रचार आसीदिति। परन्तु संस्कृतनाटकेषु 'कोट'— 'पायजामा'—वाचकः कोऽपि शब्दो न निभाल्यते।

## आदर्शन्यासद्वयम्।

अस्मिन् घोरे कलौ काले विशेषतश्च शताब्द्या अभ्यन्तरे संस्कृतसरस्वत्याः समुन्नतये सुरभारतीसेवकानां ब्राह्मणानां गौरववृद्ध्ये च प्रातःस्मरणीय-स्वर्गीय-भूदेवमुखोपाध्यायमहोदयेन यादृशमादर्शकार्यमनुष्ठितं, न तादृशं कुत्रापि परि-

दृश्यते। स्वर्गीयमुखोपाध्यायमहाशयः कान्यकुब्जब्राह्मणकुलोद्भवो वङ्ग प्रान्तीय-हुगलीमण्डलान्तर्गत चुंचुडावास्तव्यः परमपावनजह्नुतनयातीरकृतावसथ आसीत्। स्वर्गारोहणावसरतः पूर्वं स्वोपार्जितधनानामर्धं पुत्रेभ्यो दत्वा अवशिष्ट-मर्धञ्च स्वकीय-स्वर्गस्थपितृचरणनाम्ना "विश्वनाथ ट्रष्ट" नामके न्यासे तेन न्यस्तम्। एतस्य महोदयस्य सुयोग्यपुत्रः स्वर्गीयो मुकुन्ददेवमुखोपाध्यायमहाशयोऽपि स्वकीयपितृदेवनाम्ना"भूदेवट्रस्ट"नामकम् एकम् अपरम् न्यासं संस्थापितवान्। न्यासद्वयमिदं तदीयपावनवंशमहिमानमुद्घोषयति। न्यासद्वयेऽत्र प्रायः पञ्चलक्षरूप्यकाणि न्यस्तानि सन्ति। सर्वा मुद्रा गवर्नमेंन्ट-बैंक-कोषे सुरक्षिता विद्यन्ते। द्वयोरेतयो र्न्यासयोरायेन संस्कृतविद्यासमुन्नतेः संस्कृताध्यापकानां जीविकायाश्च प्रबन्धो विधीयते। स्वगृहेष्वेव प्राचीनप्रथानुसारं संस्कृतसरस्वती-मध्यापयद्भ्यः प्रायः सार्द्धशतसंख्यकेभ्योऽध्यापकेभ्यः, संस्कृतविद्यार्थिभ्यश्च वृत्तयः प्रदीयन्ते। अनेकाभ्यः संस्कृतपाठशालाभ्यश्च साहाय्यं प्रदीयते। उपर्युक्त-स्वर्गीय-भूदेवमुखोपाध्यायानां पौत्रास्तदीयात्मीयाश्च कतिचन न्यासाध्यक्षाः संहत्य साधीयस्या योग्यतया न्यासकार्यं सञ्चालयन्ति। एतन्न्यासद्वयस्य तथाऽन्यस्यापि तद्वंशीयन्यासस्य विस्तृतं विवरणं यथासमयं प्रकाशयिष्यामः।

नितरां प्रमोदमावहति चेतो यत् उपरि निर्दिष्टन्याससभापति-श्रीबटुकदेव-मुखोपाध्याय (एम० ए०) महोदयस्य निदेशेन विश्वनाथन्यास-भूदेवन्यासयो-रपि मुखपत्ररूपेण सूर्योदयोऽयं कार्यमनुष्ठास्यति। न्यासयोर्द्वयो र्दानादि-सम्बन्धिनः समाचारान् सूर्योदयो यथावसरं सदा प्रकाशयिष्यते।

एतयो र्न्यासयोरुद्देश्यानि, निखिलभारतवर्षीय-संस्कृतविश्वविद्यालयस्य समुद्देश्येषु अन्तर्भवन्ति। अतः पारस्परिकसहयोगितया संस्कृतप्रचारकार्याणि दिनानुदिनं नूनमग्रेसरिष्यन्ति। ययोः पवित्रे नामनी उपरि निर्दिष्टे वर्त्तेते, द्वावप्येतौ महानुभावौ पिता पुत्रश्च श्रीभारतधर्म-महामण्डलस्य संरक्षकेष्वा-स्तामिति।

---

## मोक्षदायकोऽपि बद्धः!

—०※०—

सर्व एव वृत्तान्तविदो वृत्तमिदं विदन्ति यत् भारतशासकद्वारा कलि-कल्मषहारिण्या भगवत्या भागीरथ्याः परमः पावनः प्रबाहो हरद्वारे नरोरास्थाने च पूर्वं निःशेषं निरुद्ध आसीदिति। किन्तु श्रीभारतधर्ममहामण्डलस्य महीयसा समुद्योगेन भारतभाग्यविधातारः सुरङ्गेण त्रिलोकपावनं गङ्गाप्रवाहं कथंकथमप्युन्मुक्तमार्गमकार्षुरित्यपि समाचारपत्रपठनपरायणा जानन्त्येव।

एतावताऽपि कार्येण सन्तोषमनासादितवतो महामण्डलस्य परमेण परिश्रमेण समाकृष्टाः शासकाः परमपूतप्रवाहाभिवृद्धये निखिलभारतवर्षीयसनातनधर्म-प्रतिनिधिभूतायाः श्रीभारतधर्ममहामण्डलसभायाः सन्निधाने पर्वसूचीसूचनार्थं पत्रं प्रहितवन्तः । तत्र पत्रे तैः पृष्टं यत् "केषु केषु पर्वसु प्रवाहाभिवृद्धिरावश्यकीया" इति । प्रत्युत्तरं प्रददता श्रीमहामण्डलेन पर्वसूची प्रहिता । पर्वसूच्यास्तस्याः कियन्तमंशं स्वीकृत्य तेषु तेषु पर्वसु गङ्गाप्रवाहवर्द्धनं भारतशासकैः स्वीकृतम् । सर्वेषु एव प्रसिद्धपर्वसु प्रवाहवृद्धिः स्यादित्यत्र सर्वैः प्रयत्नो नूनमनुष्ठेयः श्रीमहामण्डलप्रयत्नश्च उत्तरोत्तरं सफलयितव्यः ।

---

## सम्मतिः प्रेषणीया ।

जानन्त्येव सूर्योदयपाठका यत् निखिलभारतवर्षीयस्य संस्कृतविश्वविद्यालयस्य प्रायः सप्ततिसंख्यकेषु प्रसिद्धप्रसिद्धस्थानेषु परीक्षाकेन्द्राणि संस्थापितानि । तत्सूचना च सूर्योदयगताङ्केषु प्रदत्ताऽस्माभिः । साम्प्रतं पुनरपि स्थानान्तरेषु केन्द्रसंस्थापनार्थं विद्वांसो निवेद्यन्ते । अपि च अत्रैवाङ्के संस्कृतविश्वविद्यालयस्य पुनःसंशोधितरूपा नियमावली प्रकाश्यते । अत्राऽपि कृपया विद्वद्भिः स्वीया सम्मतिः प्रेषणीया ।

---

## प्राप्तिस्वीकारः ।

१—अमरकोषः ( प्रथमकाण्डः टिप्पणी-सहितः ) पुस्तकमिदं श्रीदातरा-सेठ बुलाखीदास नारायणदास साहाय्येन सम्पादितम् । चिटिकाव्ययार्थमर्थप्रेषणेन विना मूल्यं निम्नसंकेते प्राप्यते—"शास्त्री मणिशंकर भाईशंकर संस्कृत-पाठशालामुख्यगुरु, मु॰ पेटलाद ( गुजरात )"

२—त्रिकालसन्ध्याप्रयोगः—पुस्तकमदः स्वनाम्नैव विषयं विवृणोति, मूल्यमाणकद्वयम् । प्राप्तिस्थानमस्य "पुरुषोत्तमहरिनारायणपण्डितः ।
मु॰ दोरा, पो॰ आमोर, जि॰ भरुच" ।

३—श्रुतिरत्नमाला—पुस्तकमिदं ब्रह्मनिष्ठेन मङ्गलदेवब्रह्मचारिणा संगृहीतं प्रकाशितञ्च । अत्रौपनैषद्यो नानाश्रुतयः संकलिताः । संग्राह्यमिदं ब्रह्मविवेचकैः, विना मूल्यं प्राप्यते च निम्नसंकेते—
"गौरीशंकरशर्मा, भास्कर पुस्तकालय, ठठेरीबाजार, काशी" ।

४—पूजापथप्रदर्शकः । अत्र नवग्रहाणामन्येषाञ्च देवानां समन्त्रकं पूजाविधानमुपन्यस्तम् । मूल्यमाणकद्वयम् । प्राप्तिस्थानम्—

"खेतारामशर्मा बुकसेलर, चुरू (बीकानेर)"

५—श्रीसरस्वतीस्तोत्रम् । नाम्नैव विषयविवरणमस्य पुस्तकस्य, मूल्यञ्चास्य सार्द्धमाणकद्वयम् । सम्पादकोऽस्य साहित्यरत्न—पं० सरयूप्रसादपाण्डेयः (द्विजेन्द्रः) साहित्यशास्त्री काव्यतीर्थश्च । "काश्यां कविताशिक्षालय, औरंगाबाद, बनारससिटी," इतिसंकेतेन पुस्तकं प्राप्यते ।

६—ग्रामगीताञ्जलिः । अत्र राष्ट्रभावविभूषितानां ग्राम्यगेयानां सम्पादनम् । पुस्तकमिदं समयोपयोगित्वमावहते, प्रचारोऽस्य सर्वथा देशहितकारक इत्यनुभूयतेऽस्माभिः । मूल्यमेकरूप्यकम् । प्राप्तिस्थानम्—"सेवापुस्तकालय, भैंसाबाजार, पो० ढखवा बाजार (गोरखपुर)"

७—तर्कसंग्रहः । प्रथमपरीक्षापाठ्यपुस्तकमिदम् । परीक्षार्थिभिर्नूनमेतत् संग्राह्यम् । पुस्तके मूल्यं न लिखितम् । प्राप्तिस्थानम्—

"श्रीकृष्णदासगुप्त नं० ४०-५ ठठेरीबाजार, काशी" ।

---

# वर्तमान-श्रीकाशीराज-प्रशंसा ।

विहायास्मान् दीनान् सकलगतिहीनान् प्ररुदतो—
गते काशीराजे विलपति समाजे पुनरिमम् ।
महाराजं पश्यन् श्रितगुणसमाजं नृपवरं—
श्रयन् स्थैर्य्यं लोकः कृतगलितशोकः कथमपि ॥ १ ॥
रवावस्तं याते जगति कृतपातेऽन्धतमसे-
ऽभ्युदीतोऽसौ चन्द्रो द्रुततरमतन्द्रोऽवनितले ।
इमान् सर्वान् दीनान् सकलगतिहीनान्निजजनान्
कृपादृष्ट्या पश्यन् रिपुजनमुदस्यन् विजयताम् ॥ २ ॥
अयं सौजन्यानां भुवनविदितानां किमुदधिः
कृपापारावारः सकलजनहारः किमथवा ।
उताहो शीलानां जगति विमलानां किमु गिरिः
किमाहो ख्यातायाः सहजऋजुताया लहरिका ॥ ३ ॥
अयं तेजो व्यूहः किमधिकसमूहः सुयशसाम्

किमाधारः कान्तेः सहजनिजशान्तेरुत परः ।
विचारस्यागारः किमुत भुवि सारः सुतपसाम्-
गुणानामाधारः किमु चिरमपारः सुखकरः ॥ ४ ॥
अधर्म्मस्याभावः किमयमिह भावः शुभकृतेः
स्वरूपं किं नीतेरुचितनिजरीतेरुत परम् ।
सुपात्रं किं प्रीतेरथ च किमपात्रं रिपुभियाम्
क्षमायाः किं रूपं सततमभिरूपं किमु धियाम् ॥ ५ ॥
श्रिताकारं स्थैर्य्यं श्रयति भुवि धैर्य्यं किमथवा
स्मृतिर्वा साकारा जनहृदयहारा किमु नतिः ।
रतिर्वा विश्वेशे सुविरतिरशेषेऽपि विषये
मतिर्वा कल्याणी जयति किमु वाणी जनहिता ॥ ६ ॥
विधाता किं नृणां भवति सुविधाता सुनियतेः
हरिः किंस्वाप्यद्य प्रतिहरति सद्यः कुनियतिम् ।
महेशः किं देशः कृतसदुपदेशश्च सकलः
किमाहोस्विच्छेषः श्रितनिजविशेषश्च सदसि ॥ ७ ॥
उताहो किं जीवः कृतहितमतीव स्ववचनम्.
किमाहो दिक्पालः श्रितविपुलभालः सुविदितः ।
किमाहो स्यादम्बः सततमवलम्बः सुविदुषाम्,
महात्मा वा कश्चिद्भवति परमात्मा किमथवा ॥ ८ ॥
इतीयान् सन्देहः श्रितसकलदेहस्त्रिजगता—
मयं नानाकल्पः कलयति विकल्पः किल मनः ।
अयं नानाकारो भवति च विचारो हृदि नृणाम्,
परं तत्त्वं को वा कलयतु जनो वा भुवि पुनः ॥ ९ ॥
इमे पित्रा हीना अहह वत मात्राऽपि च तथा,
रटन्तो हा शब्दं क्वचिदपि भजन्तो न च शमम् ।
श्रयन्ते श्रीमन्तं निजजनमवन्तं ननु कृपा—
कटाक्षैर्दृश्यन्तां सपदि च लभन्तां निजशमम् ॥ १० ॥
प्रजारक्षाऽऽधाने दुरितचयहानेऽनवरतम्—
सदा देवध्याने तदनु गुणगानेऽप्यविरतम् ।
यथाशक्त्यादाने-सकलजनमाने चिरतरम्,
नमस्कुर्वन् तातं सुचिरमनुकुर्वन् विजयताम् ॥ ११ ॥

—श्रीबालबोधमिश्रः मैथिलः ।

# संस्कृतभाषाया अवनतिः ।

( ले०—श्रीनोखेलालशर्म्मा, ठक्कुरः काव्यतीर्थः )

सर्वतः समुद्भासमाने प्रभाऽसमाने तरणिकिरणे, समतीतायां रजन्यां, शनैः शनैः विहग-रव-मणिनूपुरलक्ष्मायां समागतायां वासरलक्ष्म्यां, चिरोद्गते 'सुप्रभाते' विगततारके मोहान्धकारहारके हिरण्मयकिरणजालम् प्रसारयति वासरमणौ, अज्ञानतमोनुदे कोकशोकमुदे कैरवारुन्तुदे समुल्लसिते श्रीमति 'सूर्य्योदये' किमिति दैवीं वाचं संसेवमानाः वयं तन्द्रालवः फक्किकां रटन्तः, देशकालविज्ञानतो दूरम् अटन्तः, पूर्वजानां तांस्तान् गुणान् पठन्तोऽपि अकर्मठत्वेनात्मन उपहासास्पदत्वम् प्रकटयन्तः, उदुम्बरकीटम् विडम्बयन्तः, अर्द्धनिमीलितनेत्राः, स्वभाग्योपरि कुरकुरायमाणाः संतिष्ठामहे ।

ये वयं कृत्स्नमिलामण्डलमण्डलं स्वसंस्कृतिसंस्कृतम् विदधतोऽशेषजनसमर्च्यमानचरणरेणवो हि परां काष्ठामुन्नतेः परं ज्योतिर्ब्रह्मणः परं तत्त्वं सर्वविधविज्ञानस्य समधिगतवन्तः, ये च वयं षोडशवर्षवयस्येव साक्षात्कृत शब्दब्रह्माणोऽमनुष्यधर्म्माणो वर्षसहस्रैरपि सुस्थिरीकृतमशेषलोकैर्वन्द्यमानम्, श्रद्धया चानुस्त्रियमाणम् बौद्धादिनास्तिकमतमामूलात्समुत्खातयितुमलमेवाभूम, ये वा स्वोन्नतिमहसा दृष्टिप्रतिहतेनेवापरलोकेनादर्शनीयां एवास्म, त एवाधुना स्वधर्ममपि रक्षितुमाचरितुं वाऽसमर्थाः, परं गतानुगतिकाः देशकालव्यवहारज्ञानशून्या ह्यत एव सर्वैरप्युपेक्षणीयाः सम्वृत्ताः स्मः । इत्यहो दैवदुर्विलसितम् ! अहो पतनम् !!

इत्येवं विलपन्त्या लेखन्या विलिखतो मे पुरतः समुद्घाटिते सूर्योदयस्यैकपृष्ठे यदृच्छया दृष्टिर्निपतति; वाचयामि च "बाबर-नृपस्य पौत्रः अकबर-नृपतेः पुत्रः साहजहाँ महोदयः" ( संख्या ३ पृ० ५१ )। अधिगत्य च ईदृग्-इतिहास-भूगोलादिज्ञानराहित्यम् अन्यत्र कुत्रापि असम्भवमेवेति नितान्त-तान्त-स्वान्तः खिद्यमान-मानसः प्रसह्य विरक्तिमेवाश्रयितुं समीहे ।

कथयन्तु भवन्तः "तमप्ग्रहणं किम्" इतिज्ञाते किम्? यदि काशीतो मथुरा पूर्व्वस्यां पश्चिमायां वा दिशीति न ज्ञायते, "नीलो घट" इत्यत्र विवादेनाऽलम् यदि यन्त्रं विनैव समाचारः ( वायरलेस द्वारा ) कथम् दूरदेशाच्छीघ्रं प्राप्यत इति न बुध्यते । जीवनव्यापिना प्रयत्नेन यदि "अपदं न प्रयुञ्जीत" इति अस्याज्ञापालनयोग्यतामात्रं लब्धं चेत् किम्? यदि कदापि वक्तुमेवासरो न लब्धः । इत्यलमत्यधिकपर्यालोचनया । तस्मात्, अयि सरस्वतीदत्तवरप्रसादाः

लक्ष्मीपुत्राश्च भवद्भिरत्र किं विधेयम् इति तावद्भवन्त एव निश्चिन्वन्तु । सहस्रलक्षसंख्यकानि पुस्तकरत्नानि कीटैः खादितानि अहर्निशं खाद्यन्ते च । चीनादिदेशे प्रतिमठं प्रतिपुस्तकालयञ्च सहस्रशः प्राचीनग्रन्थाः एतादृशीमवस्थामापन्ना रोरुद्यमानाः भवतां हस्तदानं प्रतीक्षन्ते । तत्र भवतां कर्त्तव्यं किमप्यस्ति न वेति? यादृशी शिक्षापद्धतिः वर्त्ततेऽधुना संस्कृतच्छात्राणां सा भवतां सन्तोषदायिनी न वेति? न चेत् क इवोपायस्तत्रभवद्भिरवलम्ब्यते, कथं वा अन्यथा स्वकीयामितिकर्त्तव्यतां पूर्णां मन्यन्ते । अत्र भवन्त एवात्र प्रमाणम् । (अवधानीयोऽयं लेखोऽन्तेवासिभि र्वर्तमानशिक्षासरणिरतितैः, इति सं०)

---

# सूचना ।

## ले०—दीनानाथशर्म्मा सारस्वतशास्त्री ।

——०:*:०——

मामकीने 'क्वाचित्की परिवर्त्तना परिवर्द्धना च' इति 'सूर्य्योदय' प्रकाशिते निबन्धे ७मांशे 'धिन्वन्ति' इत्यत्र उवङं बाधित्वा यण् कथं जात, इति पङ्क्तिर्बालमनोरमाकर्त्तुर्वासुदेवदीक्षितस्य मतप्रदर्शनाय उपात्ता; नेदं मामकीनं मतमवसेयम् । तत्र तन्नामप्रकाशनं त्रुटितम् । * बालमनोरमाकर्त्रा तनादिगणे 'तन्वन्ति' 'कुर्व्वन्ती' त्यादिषु 'झोऽन्तादेशे कृते उवङं बाधित्वा 'हुश्नुवो' रितियण्' दर्शितः, 'धिन्वन्ति' इत्यत्राऽपि तदनुसारेण तादवस्थ्यम् । ततश्च 'इको यणची' त्यस्य विद्यमानतायां यणकर्तृ सूत्रान्तरप्रदर्शनेन उवङ्ऽप्राप्तिरिति तदभिप्रेतम् । परं वस्तुतस्तु तद् भ्रान्तिविलसितम् । उवर्णान्तधातोरभावेन तत्र उवङोऽप्राप्तिः, न चाऽपि तत्र श्नुः । अतः ७मांशे 'एवं क्षिप्नुरित्यत्र णत्वं कथं न जातम् इत्यपि कौमुद्यां न विचारितम्' इत्ययं पाठस्तत्र ज्ञेयः । तस्य क्षुभ्नादिगणीयत्वसाधनं विधेयमासीद्, यतः क्षुभ्नादिषु तृप्नोतेस्सत्त्वेऽपि 'क्षिप्नु' रित्यस्य साक्षात् पाठाऽभावेन विवरणमावश्यकम् । तत्र च लेखे नवमांशोऽपि त्रुटितः, स चेत्थम्—'लियः सम्मानने'ति सूत्रे 'बालमुल्लापयते' इत्युदाहरणे 'वञ्चयतीत्यर्थ' इत्यपि प्रमादगर्भितऽकौमुदीपाठः, प्रलम्भनार्थत्वाद् 'गृधिवञ्च्योर्' रिति तङ्प्रसङ्गाद् 'वञ्चयते इत्यर्थ' इतीष्यते । एवञ्च 'नन्दिग्रही'ति सूत्रे 'विशेषेण भीषयती'ति क्वाचित्कऽपाठोऽपि 'भीस्म्योर्हेतुभये' इति तङ्प्रसङ्गाच्चिन्त्यः ।

अष्टमांशप्रश्नाऽनुसारञ्च 'मांसि' इत्यत्रनुम्निषेधकः 'अचः परस्य झल एव नुम्-विधानम् अत्र च तथाऽभावान्न' इति भाष्यसिद्धान्तऽकौमुद्यां प्रदर्शनीयोऽविद्यत । शिष्टं पुनः ।

---

* अधुना मया 'बालमनोरमा' द्वितीयसंस्करणं दृष्टम्, तत्र शोधकैः शोधनं कृतम् । 'हुश्नुवो' रित्यस्य च स्थाने 'इको यणची'ति सूत्रं निवेशितम् । तच्छुद्धम् ।

# अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयस्य

संशोधितम् उद्देश्यम्, नियमावली पाठ्यक्रमश्च ।



## उद्देश्यम् ।

( १ ) सनातनधर्ममनुसृत्य धार्मिकशिक्षाविस्तारः, संस्कृतविद्याप्रचारः, आयुर्वेदादिशास्त्राणां प्रसारः, हिन्दीनामधेयाया राष्ट्रभाषायाः समुन्नतिः, पुरुषाणां स्त्रीणाञ्च धर्मज्ञानाभिवृद्धिः, पुरातनानां विद्यापीठानामुद्धारः, प्राचीनानाम् अध्यात्म-शास्त्राणामभ्युदयः, वृत्तिमन्तरेणापि प्राचीनशैलीमनुसृत्य विद्यादानं विदधतां सदाचारपरायणानां ब्राह्मणानां प्रोत्साहनम्, स्कूल-कालेजादि-विद्यामन्दिरेषु धर्मज्ञानाभिवृद्धिः, श्रौतस्मार्त्तकर्मकाण्डयोरुपासनाकाण्डस्य च प्रचाराधिक्यम्, पौराणिकं यथार्थरहस्यमवगच्छतां कथावाचकानां, मन्दिरदेवतासमुचित-सेवापरायणानां च प्रादुर्भावनम् इत्यादि जगन्मङ्गलमयं निखिलभारतवर्षीय-संस्कृतविश्वविद्यालयस्य शुभोद्देश्यमस्ति ।

## संक्षिप्ता नियमावली ।

( २ ) अस्य निखिलभारतवर्षीयस्वजातीयविश्वविद्यालयस्य प्रधान-कार्यालयः काश्यां जगत्गंजस्थे श्रीमहामण्डलभवने तावत्पर्यन्तं स्थापितः स्था-स्यति, यावदस्य नवीनं भवनं न निर्मितं भवति । भवननिर्माणार्थं तु विशाल-भूमिः क्रीता वर्त्तते ।

( ३ ) अस्य विश्वविद्यालयस्य परीक्षाकेन्द्राणि भारतवर्षस्य प्रधानेषु नगरेषु स्वदेशीयासु बहुषु राजधानीषु चापि संस्थापितानि, संस्थाप्यन्ते, संस्थापयिष्यन्ते च । परीक्षाकेन्द्रसंस्थापननियमा यथा—

( क ) परीक्षाकेन्द्रेभ्यो न किमपि शुल्कं गृह्यते, किञ्च तेभ्यो बहुविधं साहाय्यं प्रदीयते ।

( ख ) यस्य स्थानस्य परीक्षाकेन्द्रे यावन्तो विद्यार्थिनः परीक्षां दास्यन्ति तेभ्यः समधिगतस्य परीक्षाशुल्कस्य न्यूनतोऽप्यर्द्धांशस्तत्रत्याय केन्द्राय विविध-व्ययप्रबन्धादिविधानार्थं प्रदास्यते ।

( ग ) संस्कृतविश्वविद्यालयस्य आये प्रवर्द्धमाने तत्तत्केन्द्रसम्बन्ध-बद्धेभ्योऽध्यापकेभ्यो विद्यालयेभ्यश्चार्थिकं साहाय्यं दास्यते ।

( घ ) परीक्षोपयोगीनि पुस्तकानि येन परीक्षाऽर्थिभिः केन्द्राणि द्वारीकृत्य स्वल्पमूल्येनैव लभ्येरन्—इत्येतस्य यथासम्भवं सुप्रबन्धो विधास्यते।

( ङ ) केन्द्रैः संस्कृतविश्वविद्यालयस्य मुखपत्रं श्रीभारतधर्ममहामण्डलस्य च मुखपत्रं विनैव मूल्यं लब्धुं शक्यते; किन्तु तत्तत्केन्द्राणां यथासाध्यं नियमितरूपतः स्वकीयकार्यसञ्चालनं स्वस्वस्थानेषु पुस्तकालयसंस्थापनं चावश्यकमास्ते। एतदतिरिक्तान्यपि परीक्षाकेन्द्रेभ्यः प्रधानकार्यालयेन मासिकानि साप्ताहिकानि वा संवादपत्राणि, वार्षिकपुस्तकानि ( डाइरेक्टरी ) अन्यानि च प्रकाशितपुस्तकानि स्वल्पमूल्यनैव दास्यन्ते।

( ४ ) एकत्र नगरे राजधान्यां वा एकमेव परीक्षाकेन्द्रं स्थापयितुं शक्यते। केन्द्राणि स्कूलकालेज-विद्यालयादिषु, सार्वजनिकेषु पुस्तकालयेषु, महामण्डलसम्बन्धयुक्तधर्मसभासु वा संस्थापितानि भवितुमर्हन्ति। देशीयराज्येषु महामण्डलसंरक्षक-प्रतिनिधीनां स्थानेषु, च केन्द्राणि संस्थापयितुं शक्यन्ते। केन्द्रस्थापकैः स्वीय-नाम-परिचय-संकेत-सम्वलित मावेदनपत्रं काश्यां प्रधानकार्यालये प्रेष्य स्वकीयकेन्द्रनामानि पुस्तिकास्थानि नूनं कारयितव्यानि। स्वीकृतपरीक्षाकेन्द्रेषु विशिष्टपदधारिस्वाक्षरीकृतमेकं सुन्दरं प्रमाणपत्रं प्रधानकार्यालयेन प्रहेष्यते।

( ५ ) प्रतिवर्षं नियतसमये परीक्षा भविष्यति, निर्द्धारितपरीक्षासमयपरिवर्त्तनापेक्षायां परीक्षाकेन्द्राणां सम्मति र्ग्रहीष्यते।

( ६ ) परीक्षाग्रहणनियमाः, यथा—

( क ) प्रश्नपत्राणि सावरणानि मुद्राङ्कितानि विधाय प्रतिकेन्द्रस्थानं प्रधानकार्यकर्त्तुर्नाम्ना राजेष्टद्वारा यथासमयं प्रेषयिष्यन्ते। केन्द्राध्यक्षैश्च प्रातःकालं ससावधानमुद्घाट्य परीक्षार्थिभ्यस्तानि वितरणीयानि, परीक्षादातॄणामुत्तरपत्राणि च सावधानतया प्रधानकार्यालयेऽत्र प्रहेतिमानि।

( ख ) स्त्रीभिस्तु साधारणनियमानुसारं परीक्षाकेन्द्रेषु स्वयमुपस्थाय परीक्षाप्रदानं नानुष्ठेयम्। तासां कृते तु परीक्षादानव्यवस्था तासां गृहेषु कस्यचन सद्गृहस्थस्यावासे वा भवितुमर्हति। एतस्य सुप्रबन्धः स्थानीयकेन्द्राधिपतिना काश्चिन्महिला द्वारीकृत्य सद्गृहस्थानां द्वारा वा स्वयमेव विधास्यते।

( ग ) धर्माचार्योपाधिपरीक्षायां, 'कालेज' नामकस्य आङ्गलमहाविद्यालयस्य बी. डी. सी. उपाधिपरीक्षायां, धर्मोपदेशकोपाधिपरीक्षायां च गुप्तप्रश्नपत्रप्रेषणनियमो न वर्तते। तत्र तत्र प्रविविक्षुभिः नियमानुसारं

निर्द्धारितसमये परीक्षाशुल्कसहितास्तत्तद्विषयकाः स्वीययोग्यतापरिचायका निबन्धा निबध्य काशीस्थे प्रधानकार्यालय एव प्रहेतव्याः ।

( ७ ) परीक्षार्थिभिः परीक्षासमयतो मासद्वयात् पूर्वं परीक्षाशुल्कसहितं स्वकीयमावेदनपत्रम्–"कार्याध्यक्ष, निखिल भारतवर्षीय-संस्कृतविश्वविद्यालय, महामण्डल भवन, जगत्गञ्ज, काशी" इति संकेतेन प्रेषणीयम् । तैस्तु स्थानीयेषु केन्द्रेषु वा शुल्कं प्रदाय साधारणं प्रमाणपत्रमादातुं शक्यते, विशिष्टं प्रमाणपत्रं तु प्रधानकार्यालयात् काशीत एव प्रहेष्यते । मुद्रितमावेदनपत्रं काशीप्रधानकार्यालयात् स्थानीयात् केन्द्राद् वा विना मूल्यं प्राप्तुं शक्यते । निर्दिष्टसमयात् पश्चादावेदनपत्रं न गृहीतं स्यात् ।

( ८ ) धर्मोपदेशकपरीक्षां, नारीसम्बन्धिनीं परीक्षां, राष्ट्रभाषापरीक्षां, बी. डी. सी. परीक्षां, श्रौत-स्मार्त्तपरीक्षां, पुराणकोविदपरीक्षां, देवपूजाविशारद परीक्षां, स्कूल-कालेज-परीक्षां च विहाय अन्यासां सर्वासां परीक्षाणां प्रश्नोत्तराणि संस्कृतभाषयैव लेख्यानि । आयुर्वेदस्य प्रथम-मध्यम-शास्त्रि-परीक्षाप्रश्नानामुत्तराणि अनुमतिं लब्ध्वा स्वीयया मातृभाषयाऽपि लिखितुं शक्यन्ते । प्रथमां विना मध्यमां, मध्यमां विना, शास्त्रिपरीक्षां, शास्त्रिपरीक्षां विना च आयुर्वेदाचार्यपरीक्षां प्रदातुं नास्त्यधिकारः । शास्त्रिपरीक्षायाः प्रश्नोत्तराणि स्वकीयया मातृभाषया ये प्रदास्यन्ति, तेभ्यो "वैद्यभूषणम्" इत्युपाधिर्दास्यते ।

( ९ ) धर्मोपदेशकपरीक्षायां व्याख्यान–धर्मशङ्कासमाधान—वैचक्षण्यं, पुराणकोविदपरीक्षायां पुराणकथाकोविदत्वं, देवपूजाविशारदपरीक्षायां देवपूजनपरिपाटीपरिज्ञानं, कर्मकाण्डपरीक्षायां कर्मकाण्डपाण्डित्यं विज्ञातं मौखिकपरीक्षा भवेत्, नान्यत्र कुत्रापीति ।

( १० ) धर्माचार्यपरीक्षायां, स्मार्तकर्मविशारदपरीक्षायां, श्रौतकर्मविशारदपरीक्षायां, पुराणकोविदपरीक्षायां, देवपूजाविशारदपरीक्षायां, धर्मोपदेशकपरीक्षायां च प्रवेशाधिकारो ब्राह्मणानामेव ।

( ११ ) विश्वविद्यालयेऽत्र धर्मागमतारतम्यमनुसृत्य योग्यतानुसारं परीक्षोत्तीर्णेभ्यो विद्वद्भ्यो निम्नलिखितरूपाः पुरस्काराः दास्यन्ते ।

( क ) ५००) पञ्चशतमारभ्य २५) पञ्चविंशतिरूप्यकपर्यन्तम् एककालिकं पारितोषिकं दास्यते । आधिक्ये सति पारितोषिकद्रव्याणां वार्षिकरूपेणापि देयद्रव्यदाननियमो निर्द्धारितः ।

( ख ) स्वर्णमयानि रौप्याणि च पदकानि दास्यन्ते ।

( ग ) यथायोग्यमूल्यवन्ति पुस्तकान्यपि प्रदास्यन्ते ।

( घ ) प्रदीयमानेषु मानपत्रेषु माननीयमहाराजाधिराज-दरभङ्गाधिपति मिथिलेशमहोदयानां स्वाक्षराणि भविष्यन्ति।

( ङ ) प्रतिवर्षमुपाधिपरीक्षासुत्तीर्णनरनारीभ्यः उपाधिमानपत्राणि दास्यन्ते। अन्यत्र उपाधि-व्यतिरिक्तपरीक्षायां केवलं पुरस्कार-पदक-मानपत्रादीनि लप्स्यन्ते। सम्मानानीमानि वाराणस्यां, तत्तत्स्थानेषु वा ससमारोहं सभां विधाय परीक्षोत्तीर्णेभ्यो दास्यन्ते।

( १२ ) प्रतिप्रश्नपत्रं पूर्णाङ्काः १०० शतम्। प्रतिप्रश्नपत्रं यैः न्यूनतोऽपि त्रयस्त्रिंशत् ३३ अङ्का लप्स्यन्ते, ते परीक्षोत्तीर्णा भविष्यन्ति। ये च प्रतिप्रश्नपत्रं न्यूनतः पञ्चचत्वारिंशदङ्कान् अधिगमिष्यन्ति ते द्वितीयश्रेण्यां, ये च प्रतिप्रश्नपत्रं न्यूनतः षष्टिसंख्याः प्राप्स्यन्ति ते प्रथमश्रेण्यां समुत्तीर्णा भविष्यन्ति।

( १३ ) धर्माचार्यपरीक्षायां पञ्च ५) महोपाध्यायपरीक्षायां बी. डी. सी. परीक्षायां च चत्वारि ४), आयुर्वेदस्य च मध्यम-शास्त्रि-आचार्य-परीक्षासु क्रमशः २) ३) ४) रूप्यकाणि अन्यासु सर्वासु परीक्षासु च केवलमेकं रूप्यकं परीक्षाशुल्करूपेण दातव्यानि।

## परीक्षा-पाठ्यपुस्तक-नामानि।

( १४ ) इदानीं समये निम्ननिर्दिष्टरूपाः परीक्षाः स्थिरीकृताः सन्ति—

( क ) उपाध्यायोपाधिपरीक्षा।

( ख ) महोपाध्यायोपाधिपरीक्षा।

( ग ) धर्माचार्योपाधिपरीक्षा।

( घ ) धर्मोपदेशकोपाधिपरीक्षा।

( ङ ) बी० डी० सी० इत्युपाधिपरीक्षा।

( च ) श्रौतकर्मविशारदोपाधिपरीक्षा।

( छ ) स्मार्त्तकर्मविशारदोपाधिपरीक्षा।

( ज ) धर्मप्रभोपाधिपरीक्षा।

( झ ) राष्ट्रभाषाविशारदोपाधिपरीक्षा ( अत्र पुरुषेभ्यो राष्ट्रभाषाविशारदोपाधिः स्त्रीभ्यश्च राष्ट्रभाषाचन्द्रिकोपाधिर्दास्यते )

( ञ ) आयुर्वेद-प्रथम-परीक्षा।

( ट ) आयुर्वेद-मध्यमपरीक्षा।

( ठ ) आयुर्वेद-शास्त्रिपरीक्षा। ( अत्र ये स्वमातृभाषया उत्तरं दास्यन्ति तेभ्यो "वैद्यभूषणम्" ये च संस्कृतभाषया उत्तरं दास्यन्ति तेभ्यः "वैद्यशास्त्री" इत्युपाधिः प्रदास्यते )

( ड ) आयुर्वेदाचार्योपाधिपरीक्षा ।

( ढ ) पुराणकोविदोपाधिपरीक्षा ।

( ण ) ज्योतिर्विशारदोपाधिपरीक्षा ।

( त ) देवपूजा-विशारदोपाधिपरीक्षा ।

( थ+द ) स्कूल-कालेज-विद्यार्थिनां स्वतन्त्ररूपे द्वे छात्रवृत्तिप्रदायिन्यौ परीक्षे स्तः । इमे द्वे राज-(गवर्नमेन्ट ) स्वीकृतौ सत्यां प्रचरिष्यतः । एवं प्रकारेण साम्प्रतम् अष्टादशपरीक्षाणां प्रबन्धः संस्कृतविश्वविद्यालयेन विहितः ।

## १५—उपाध्यायोपाधिपरीक्षा ।

( क ) अस्यां परीक्षायां प्रथमं प्रश्नपत्रं संस्कृतभाषाज्ञानविषयकं भविष्यति । तत्र निम्ननिर्दिष्टनाम्नां ग्रन्थानां प्रश्नाःस्थास्यन्ति ।

१—किरातार्जुनीयम् ( १,२,३ सर्गपर्यन्तम् )

२—भट्टिकाव्यम् ( १-२ सर्गपर्यन्तम् ।

३—वाल्मीकीयरामायणम् ( सुन्दरकाण्डमात्रम् )

४—साहित्यदर्पणः ( सप्तमपरिच्छेदात्मकः )

५—श्रुतबोधः ( सम्पूर्णः )

( ख ) द्वितीयं प्रश्नपत्रं चास्यां दार्शनिकज्ञानपरिचायकं भविष्यति । तत्र निम्नलिखितग्रन्थानां प्रश्नाः स्थास्यन्ति—

१—कर्ममीमांसा ( प्रथमपादः )

२—वेदान्तसारः ( सदानन्दकृतः )

३—सांख्यतत्त्वकौमुदी ( सम्पूर्णा )

४—वेदान्तचतुःसूत्री ( समन्वयभाष्यसहिता )

५—तर्कसंग्रहः ( सम्पूर्णः )

( ग ) तृतीयं प्रश्नपत्रं चास्याम् आध्यात्मिकज्ञानसम्बन्धि भविष्यति । तत्र निम्ननिर्दिष्टग्रन्थानां प्रश्ना भविष्यन्ति—

१—ईशोपनिषद् ( सम्पूर्णा )

२—केनोपनिषद् । ( सम्पूर्णा )

३—श्रीमद्भगवद्गीता । ( सम्पूर्णा )

४—शम्भुगीता । ( सम्पूर्णा )

५—शक्तिगीता । ( सम्पूर्णा )

( घ ) चतुर्थं प्रश्नपत्रं तु धर्मज्ञानविषयकम् । अत्र निम्नलिखितपुस्तकानां प्रश्नाः—

१—मनुसंहिता ( सम्पूर्णा )

२—पुराणरहस्यम् ( सम्पूर्णम् )

३—संन्यासगीता । ( सम्पूर्णा )

## १६—महोपाध्यायोपाधि-परीक्षा ।

( क ) अस्याः परीक्षायाः संस्कृतभाषापरिज्ञानात्मके प्रथमपत्रे उपाध्याय-परीक्षाप्रथमपत्रपरीक्षितव्यग्रन्थातिरिक्तानां निम्ननिर्द्धारितानामपि ग्रन्थानां प्रश्नाः स्थास्यन्ति—

१—साहित्यदर्पणः ( ३-६-७ परिच्छेदात्मकः )

२—उत्तररामचरितम् ( सम्पूर्णम् )

३—कादम्बरी ( पूर्वार्द्धा )

४—महाभारतम् ( अनुशासनपर्वमात्रम् )

५—भागवतम् ( तृतीयस्कन्धात्मकम् )

( ख ) दार्शनिकज्ञानसूचके द्वितीयपत्रे उपाध्यायपरीक्षाद्वितीयपत्रपरी-क्षितव्यग्रन्थातिरिक्तानामधो लिखितानामपि पुस्तकानां प्रश्ना भविष्यन्ति—

१—गौतमसूत्रम् ( सम्पूर्णम् )

२—योगसूत्रम् ( सम्पूर्णम् )

३—सांख्यदर्शनम् ( प्रथमः पादः )

४—कर्ममीमांसा ( द्वितीयः पादः )

५—वेदान्तसूत्रम् ( प्रथमः पादः )

( ग ) आध्यात्मिकज्ञानसम्बन्धीये तृतीयपत्रे उपाध्यायपरीक्षातृतीय-पत्रपरीक्षितव्यग्रन्थातिरिक्तनिम्नलिखितग्रन्थानामपि प्रश्नाः प्रष्टव्याः—

१—कठोपनिषद् ( सम्पूर्णा )

२—सप्तशती ( मातृमहिमप्रकाशिन्या टीकयोपेता )

३—धीशगीता ( सम्पूर्णा )

४—सूर्यगीता ( सम्पूर्णा )

५—बृहदारण्यकम् ( प्रथमं ब्राह्मणद्वयम् )

( घ ) अस्याः परीक्षाया धर्मज्ञानविषयके चतुर्थे पत्रे उपाध्यायपरीक्षा-चतुर्थपत्रपरीक्षितव्यपुस्तकातिरिक्ता दायभाग-प्रायश्चित्तविषयका अपि प्रश्नाः प्रक्ष्यन्ते । दायभागप्रायश्चित्तविषयकप्रश्नानामुत्तरं तु धर्मसिन्धुनिर्णयसिन्धुस्मा-र्त्तभट्टाचार्य-रघुनन्दनकृतनिबन्धादीनामेकतमस्य कस्यचनापि निबन्धस्याधार-माश्रित्य लेख्यम् । एतदतिरिक्ता अपि प्रश्ना अधोलिखितयो ग्रन्थयोर्भविष्यन्ति—

१—याज्ञवल्क्यस्मृतिः ( सम्पूर्णा )

२—पराशरस्मृतिः ( सम्पूर्णा )

## १७—राष्ट्रभाषाविशारदोपाधिपरीक्षा ।

( क ) अस्याः परीक्षाया भाषापरिज्ञानविषयके प्रथमे पत्रे निम्नलिखित-पुस्तकानां प्रश्नाः स्थास्यन्ति—

१—गोस्वामिप्रवर-श्रीतुलसीदासकृतं रामायणम्-( अयोध्याकाण्ड-सुन्दर-काण्डात्मकम् )

२—कबीरकी शाखी ( सम्पूर्ण )

३—कविताकौमुदी ( सम्पूर्ण )

४—मेवाड़का इतिहास ( रायबहादुर-गौरीशङ्कर हीराचन्द ओझा-कृत )

( ख ) अस्याः परीक्षाया द्वितीयं प्रश्नपत्रं धर्मज्ञानसम्बन्धीयम्। अत्र निम्ननिर्दिष्टानां पुस्तकानां प्रश्नाः—

१—धर्मकल्पद्रुम ( चतुर्थखण्ड )

२—धर्मचन्द्रिका ( सम्पूर्ण )

३—नवीन दृष्टिमें प्रवीण भारत ( सम्पूर्ण )

४—प्रवीण दृष्टिमें नवीन भारत ( सम्पूर्ण )

५—मार्कण्डेयपुराण ( रहस्योद्घाटिनी हिन्दी टीका सहित )

( ग ) अस्याः परीक्षायाः तृतीयप्रश्नपत्रस्योत्तरे कोऽपि निबन्धः समालोचना वा लेख्या। अस्यां परीक्षायामुत्तीर्णेभ्य उत्तीर्णाभ्यो वा क्रमशः "राष्ट्रभाषाविशारद"—"राष्ट्रभाषाचन्द्रिका" इति उपाधिद्वयम् दास्यते।

## १८—धर्माचार्योपाधिपरीक्षा ।

धर्माचार्यपरीक्षां दित्सुभिर्विद्वद्भिः श्रौतकर्मविशारद-स्मार्त्तकर्मविशारद-परीक्षयोरन्यतरस्यां, महोपाध्यायपरीक्षायां वा नूनमुत्तीर्णता सम्पादनीया। कस्यचन विश्वविद्यालयस्य वा सर्वोच्चश्रेणिक-संस्कृतोपाधिपरीक्षायां वा तैरवश्यमुत्तीर्णैर्भवितव्यम्, येन ते संस्कृतविद्यायाः कर्मकाण्डस्य च साधीयांसो विद्वांस इति ज्ञानं स्यात्। धर्माचार्यपरीक्षायां न गुप्तप्रश्नाः, अपि तु प्रकटप्रश्ना एव भविष्यन्ति। तत्र प्रविष्टैर्गवेषणात्मकनिबन्धलेखनद्वारा प्रश्नोत्तरं प्रदेयं भवेत्। तेषां कृते तादृशाः प्रश्ना आगमिष्यन्ति, यैरिदं विदितं स्यात् यत् तेषाम् उपर्युक्तविषयातिरिक्तमपि निम्नलिखितशास्त्रेष्वपि प्रवेशो वर्तत इति।

( १ ) एतत्परीक्षालब्धप्रवेशानां सुधियां सर्वेषामपि दर्शनानां यथा—न्यायदर्शन-वैशेषिकदर्शन-योगदर्शन-साङ्ख्यदर्शनानां, वैदिककाण्ड-त्रयानुसारि-

कर्मोपासनाज्ञानप्रधानानां त्रयाणां मीमांसादर्शनानामपि परिज्ञानमतिरिच्य शुद्धाद्वैत-द्वैताद्वैत-विशिष्टाद्वैत-अद्वैत-द्वैतपशुपतादि-साम्प्रदायिकदर्शनानामपि यथेष्टं ज्ञानमत्यावश्यकम्। एतत्सम्बन्धीयाः प्रश्नाः प्रथमपत्रे प्रदयन्ते।

( २ ) द्वितीये प्रश्नपत्रे निम्नलिखितानां ग्रन्थानां प्रश्ना भविष्यन्ति—

( क ) मन्त्रयोगसंहिता ( सम्पूर्णा )

( ख ) हठयोगसंहिता ( सम्पूर्णा )

( ग ) लययोगसंहिता ( सम्पूर्णा )

( घ ) राजयोगसंहिता ( सम्पूर्णा )

( ङ ) धर्मकल्पद्रुमः ( सम्पूर्णः )

( च ) त्रिवेदीयसन्ध्या ( सम्पूर्णा )

( छ ) मन्त्रमहोदधिः ( सम्पूर्णः )

( ३ ) तृतीये प्रश्नपत्रे निम्ननिर्द्धारितानां पुस्तकानां प्रश्ना आयास्यन्ति—

( क ) देवीभागवतम् ( सम्पूर्णम् )

( ख ) श्रीमद्भागवतम् ( सम्पूर्णम् )

( ग ) विष्णुपुराणम् ( सम्पूर्णम् )

( घ ) महाभारतम् ( सम्पूर्णम् )

( ४ ) चतुर्थप्रश्नपत्रे अधोनिर्द्दिष्टपुस्तकानां प्रश्ना भविष्यन्ति—

( क ) शम्भुगीता ( सम्पूर्णा )

( ख ) शक्तिगीता ( सम्पूर्णा )

( ग ) सन्न्यासगीता ( सम्पूर्णा )

( घ ) श्रीमद्भगवद्गीता ( सम्पूर्णा )

( ङ ) सप्तशती गीता ( सभाष्या )

( च ) तन्त्रसारः ( सम्पूर्णः )

( छ ) महानिर्वाणतन्त्रम् ( सम्पूर्णम् )

( ५ ) पञ्चमे प्रश्नपत्रे शास्त्रसम्बन्धीया रचना प्रदयते।

धर्माचार्योपाधिमानपत्रेण सह मानवस्त्रादि सर्वोत्तमार्थिकपारितोषिकं चापि धर्माचार्यपरीक्षोत्तीर्णेभ्यो विद्वद्भ्यो दास्यते। सदाचारपरायणानां ब्राह्मणानामेवात्र प्रवेशाधिकारः। तत्सम्बन्धे आवश्यकीयज्ञातव्यं च परीक्षा-केन्द्राणि द्वारीकृत्य ज्ञेयं भवेत्।

## १६—आयुर्वेदप्रथमपरीक्षा।

अस्याः परीक्षायाः प्रथमपत्रे माधवनिदानस्य ( मूलमात्रस्य ) द्वितीय-

पत्रे शार्ङ्गधरस्य ( पूर्वखण्डस्य ) प्रश्ना भविष्यन्ति। तृतीयपत्रे द्रव्यगुणः आयुर्वेदीया प्रबन्धरचना च। चतुर्थे प्रश्नपत्रे च शक्तिगीता-सदाचारशिक्षयोः प्रश्नाः स्थास्यन्ति।

## २०—आयुर्वेदमध्यमपरीक्षा।

अस्याः प्रथमपत्रे चक्रदत्तः परिभाषासहितः, द्वितीयपत्रे रसेन्द्रसार-संग्रहः, तृतीयपत्रे वाग्भटः ( शारीरस्थानम् ) आयुर्वेदीयप्रबन्धरचना च, चतुर्थपत्रे नीतिचन्द्रिका, सांख्यकारिका, सप्तशती गीता चेति।

## २१—आयुर्वेदशास्त्रिपरीक्षा।

अस्याः प्रथमपत्रे चरकसंहिता ( निदानेन्द्रियचिकित्सास्थानानि) द्वितीय-पत्रे सुश्रुतसंहिता (सूत्रशारीरस्थानात्मिका), तृतीयपत्रे माधवनिदानम् ( विजय-रक्षितकृतमधुकोषटीकोपेतम् ) चतुर्थपत्रे अष्टाङ्गहृदयम् (सूत्रस्थानम् ) आयुर्वेदीया प्रबन्धरचना च। पञ्चमपत्रे भगवद्गीता अथवा भाषापरिच्छेदः (कारिकामात्रम्) शम्भुगीता च। आयुर्वेदशास्त्रिपरीक्षायाः प्रश्नोत्तराणि ये संस्कृतभाषया लिखिष्यन्ति तेभ्यः "आयुर्वेदशास्त्री" इत्युपाधिः, ये च मातृभाषया लिखिष्यन्ति तेभ्यो "वैद्यभूषणम्" इत्युपाधिर्दास्यते।

## २२–आयुर्वेदाचार्योपाधिपरीक्षा।

अस्याः परीक्षायाः प्रथमपत्रे चरकसंहिता ( सम्पूर्णा ) द्वितीयपत्रे सुश्रुत-संहिता ( सम्पूर्णा ) तृतीयपत्रे अष्टाङ्गहृदयम् ( सम्पूर्णम् ) चतुर्थ पत्रे अनिर्दिष्ट-ग्रन्थेभ्य आयुर्वेदविषयकाः प्रश्नाः, पञ्चमपत्रे-सांख्यदर्शनम् योगदर्शनञ्च।

## २३–धर्मोपदेशकोपाधिपरीक्षा।

( १ ) धर्मकल्पद्रुम १, २, ३, ४, ५ खण्ड, ( २ ) नवीन दृष्टिमें प्रवीण-भारत, प्रवीण दृष्टिमें नवीन भारत, ( ३ ) चरित्रचन्द्रिका, सतीचरित्रचन्द्रिका, आचारचन्द्रिका, सप्तशती गीता, त्रिवेदीय सन्ध्या। ( ४ ) भारतवर्षका साधा-रण इतिहास, भूगोलका साधारणज्ञान, ( ५ ) जातीयमहायज्ञसाधन, ( ६ ) वक्तृताविषयक परीक्षा, (अत्र वक्तृताविषयकं प्रमाणपत्रं स्थानीयस्य केन्द्रस्य कस्याञ्चन सभायां वक्तृतां प्रदाय परीक्षार्थिभिः प्रेषणीयम् )। अस्यां परीक्षायां चत्वारि प्रश्नपत्राणि भविष्यन्ति।

## २४–धर्मप्रभोपाधिपरीक्षा।

परीक्षेयं स्त्रीणामेव कृते निर्द्धारिता वर्त्तते। स्त्रीभिः स्वीयं सौविध्यमनु-सृत्य नियमानुसारं प्रश्नपत्राणामुत्तरं लिखित्वा प्रेषयितुं शक्यते। अत्र परी-

क्षायां त्रीणि प्रश्नपत्राणि भविष्यन्ति । निम्ननिर्दिष्टनाम्नां ग्रन्थानां प्रश्नाश्च-प्रदयन्ते—

(क) धर्मचन्द्रिका (सम्पूर्ण)

(ख) सतीचरित्रचन्द्रिका । (सम्पूर्ण)

(ग) नवीनदृष्टिमें प्रवीणभारत (सम्पूर्ण)

(घ) प्रवीणदृष्टिमें नवीनभारत (सम्पूर्ण)

(ङ) आचारचन्द्रिका । (सम्पूर्ण)

(च) सप्तशतीगीता । (सम्पूर्ण)

(छ) परलोकरहस्य । (सम्पूर्ण)

(ज) व्रतोत्सवचन्द्रिका । (सम्पूर्ण)

(झ) मार्कण्डेयपुराण हिन्दी (सम्पूर्ण) (आर्यमहिला कार्यालय-द्वाराप्रकाशित)

(ञ) धर्मविषयकनिबन्धलेखनञ्च ।

## २५—पुराणकोविदोपाधिपरीक्षा ।

परीक्षेयं पुराणशास्त्रप्रचारणार्थं निर्द्धारिता ।

(क) अस्याः परीक्षायाः प्रथमे प्रश्नपत्रे साहित्यव्याकरणसाधारण-ज्ञानपरिचायकप्रश्नातिरिक्ता अपि निम्ननिर्द्धारित पुराणेभ्यो गाथा-धर्मरहस्य-परिज्ञानसूचकाः प्रश्नाः प्रदयन्ते—

१—श्रीमद्भागवतम् (१,२,३,१० स्कन्धमात्रम्)

२—महाभारतम् (शान्तिपर्वात्मकम्)

३—अध्यात्मरामायणम् (सम्पूर्णम्)

४—गरुड़पुराणम् (सम्पूर्णम्)

(ख) द्वितीये प्रश्नपत्रे निम्नलिखितानां ग्रन्थानां प्रश्ना भविष्यन्ति—

१—धर्मसुधाकर (सम्पूर्ण)

२—मार्कण्डेयपुराण (रहस्योद्घाटिनी टीकासहित)

३—परलोकरहस्य (सम्पूर्ण)

४—चतुर्दशलोकरहस्य (सम्पूर्ण)

५—पारिवारिकप्रबन्ध (सम्पूर्ण)

(ग) तृतीये प्रश्नपत्रे मौखिकरूपतः पुराणकथाकथनरीतिपरीक्षा भविष्यति । पुराणकथापरीक्षेयं केन्द्रेष्वेव सम्पत्स्यते ।

## २६-बी. डी. सी. उपाधिपरीक्षा।

बी. डी. सी.—इत्यनेन Bacheler of Dharmic Culture इति तात्पर्यमवगन्तव्यम्। येनोपाधिरयमधिगमिष्यते, तेन स्वनाम्नः अन्ते बी. डी. सी. इत्यक्षराणामुपयोगः कर्त्तुं शक्यते। आङ्गल्या राष्ट्रभाषायाः (हिन्दी) च ज्ञातारः परीक्षायामस्यां प्रवेष्टुमर्हन्ति। यदि संस्कृतभाषायाः साधारणमपि परिज्ञानं भवेत् तर्हि विनाऽपि राष्ट्रभाषाज्ञानं परीक्षेयं प्रदातुं शक्या। अत्र नास्ति मौखिकीपरीक्षा, न वाऽत्र प्रविष्टानां तत्तत्केन्द्रेषूपस्थानमावश्यकम्। अत्र प्रवेशवद्भिस्तु स्वगृहत एव आङ्गलभाषायां निबन्धमेकं निबध्य प्रधानकार्यालये प्रेषणीयः। निबन्धोऽयं तन्निबद्ध इति प्रत्ययार्थं कस्यचन हाईस्कूल हेडमास्टरमहोदयस्य कालेजप्रिंसिपलमहाशयस्य, संस्कृतविश्वविद्यालयपरिगृहीतस्य कस्यचन केन्द्रस्याध्यक्षस्य वा प्रमाणपत्रमपि नूनं स्वकीयनिबन्धेन सह प्रहेतव्यम्। एतत्परीक्षाप्रश्नपत्राणि निम्नलिखित-ग्रन्थानामाधारेण रचितानि भविष्यन्ति—

१—worlds Eternal Religion (भारतधर्मसिण्डिकेट, लिमिटेड् बनारस द्वारा प्रकाशित)
२—अंग्रेजी भगवद्गीता (प्रथमखण्ड)
३—नवीन दृष्टिमें प्रवीणभारत (हिन्दी)
४—प्रवीणदृष्टिमें नवीन भारत (हिन्दी)
५—जातीय महाबल साधन (हिन्दी)
६—आचारप्रबन्ध (हिन्दी)
७—मार्कण्डेय पुराण (हिन्दी रहस्योद्घाटिनी टीकासहित)
८—कर्ममीमांसादर्शन (हिन्दी, प्रथम दो खण्ड)
९—तत्त्वबोध (हिन्दी-अनुवाद)
१०—त्रिवेदीय सन्ध्या (हिन्दी टीकासहित)
११—पञ्चमहायज्ञ (हिन्दी)

ये हि हिन्दीभाषां न जानन्ति तैस्तु निम्नलिखिताः संस्कृत-ग्रन्थाः पठनीयाः।

१२—कर्ममीमांसा दर्शनम् (प्रथमपादद्वयं संस्कृतभाष्यसहितम्)
१३—पुराणरहस्यम् (संस्कृतम्) १४—तत्त्वबोधः (संस्कृतमयः)
१५—जगद्गुरु भारतम् (संस्कृतम्) १६—शम्भुगीता (संस्कृतात्मिका)
१७—शक्तिगीता (संस्कृतमयी)

## २७—देवपूजाविशारदोपाधिपरीक्षा ।

उपाधिपरीक्षेयं देवसेवापरायणानां योग्यतापरिवृद्धये देवालय देवसेवा-पूजादिसुप्रबन्धार्थं च प्रचार्यते। दिनद्वयेनैव परीक्षेयं समाप्तिमेष्यति। केन्द्रेषु मौखिकरूपेण परीक्षेयं गृहीता स्य त। एतत्सम्बन्धे केन्द्राध्यक्षमहोदयैः प्रधानकार्यालयाध्यक्ष-सन्निधाने सूचना ( रिपोर्ट ) प्रेषणीया, येन परीक्षायाः प्रवन्धो निर्द्धारितः स्यात्। परीक्षार्थिभिरधोनिर्दिष्टनामानि पुस्तकानि पठनीयानि—

१—देवपूजापद्धतिः ( भारतधर्मसिण्डिकेटद्वाराप्रकाशिता ) २—स्तोत्रकुसुमाञ्जलिः ( „ ) ३—त्रिवेदीया सन्ध्या। ४—धर्मकर्म दीपिका। ५—श्रीमहामण्डल डायरेक्टरी ( धर्मखण्ड )

एतत्परीक्षाप्रदानेन परीक्षोत्तीर्णानां विदुषां प्रतिष्ठा वर्द्धिष्यते, तेषां जीविकाप्रबन्धश्च सम्पद्येत।

## २८—श्रौतकर्मविशारदोपाधिपरीक्षा ।

अत्र परीक्षायां प्रथमपत्रे निम्ननिर्दिष्टनामानो ग्रन्था निर्द्धारिताः—

१—मन्त्रसंहिता ( सस्वरा, स्वशाखीया )
२—दर्शपूर्णमासौ ( स्वशाखीयौ )
३—श्रौताग्न्याधानपद्धतिः ( स्वशाखीया )
४—अन्वारम्भणीया नवान्नेष्टिः ( स्वशाखीया )
५—अग्निहोत्रहोमः ( स्वशाखीयः )
६—मन्त्रविन्देष्टिः ( स्वशाखीया )
७—पुत्रेष्टिः ( स्वशाखीया )

द्वितीय प्रश्नपत्र निम्नलिखितानि पुस्तकानि निर्द्धारितानि—

१—चातुर्मास्यपद्धतिः ( स्वशाखीया )
२—श्रौतसूत्रम् ( परिभाषाप्रायश्चित्ताध्यायात्मकं स्वशाखीयम् )
३—कात्यायनश्रौतसूत्रभूमिका (पण्डितविद्याधरशर्म वेदाचार्यकृता)
४—चमत्कारचिन्तामणिः।
५—आपस्तम्बधर्मसूत्रम्।

तृतीये प्रश्नपत्रे अधोलिखितानि पुस्तकानि संनिवेशितानि—

१—अग्निष्टोमपद्धतिः ( स्वशाखीया )
२—शुल्वसूत्रम् ( सवृत्तिकं स्वशाखीयम् )
३—फलितसंग्रहः।

### ३०--ज्योतिर्विशारदोपाधिपरीक्षा ।

अस्यां परीक्षायां प्रथमे प्रश्नपत्रे निम्नलिखितानि पुस्तकानि विद्यन्ते—

१—मुहूर्त्तचिन्तामणिः ( सम्पूर्णः ) २—मुहूर्त्तमार्त्तण्डः (विवाहप्रकरणम् ) ३—लीलावती ( श्रेणी व्यवहारपर्यन्ता )

द्वितीये प्रश्नपत्रे निम्ननिर्दिष्टाः ग्रन्थाः सन्ति—

१—ताजिक नीलकण्ठी (प्रथमतन्त्रम् ) २—लघु पाराशरी । ३—जैमिनि सूत्रम् ।

तृतीय प्रश्नपत्रे निम्नलिखित ग्रन्थाधारतः प्रश्नाः प्रदयन्ते

१—बृहज्जातकम् ( दशमाध्यायपर्यन्तम् )

२—बृहद् वास्तुमाला (पण्डित रामनिहोरद्विवेदि ज्यौतिषाचार्य-सम्पादिता)

चतुर्थे प्रश्न पत्रे निम्नाङ्कितौ ग्रन्थौ स्तः—

१—कर्ममीमांसादर्शन ( हिन्दी खण्डद्वयम् )

२—धर्मचन्द्रिका ( हिन्दी )

### ३१-३२—जूनियर-सीनियरनामिके द्वे स्कूल-कालेज-स्वतन्त्र-च्छात्रवृत्तिपरीक्षे ।

द्वयोरेव स्कूलकालेजच्छात्रवृत्तिपरीक्षयोः कृते राजपक्षतः ( गवर्नेण्ट ) पत्राचारः प्रवर्त्तते । भारतवर्षस्य सर्वत्रैव स्कूल–कालेजादौ एतत्परीक्षाप्रबन्धो भवेदिति हेतोः प्रबन्धो विधीयमान आस्ते । अस्य संक्षिप्तमनुष्ठानपत्रं स्वतन्त्र-रूपेण पृथगेव प्रकाशितं वर्त्तते । एतदनुष्ठानपत्रानुसारेण स्वीकृतौ सत्यां स्वतन्त्ररूपेणैव नियमा एतदीयाः प्राकाश्यमेष्यन्ति ।

३३—इमाः परीक्षा अतिरिच्यापि यदि केचन सम्प्रदायाः स्वतन्त्ररीत्या स्वकीयां साम्प्रदायिकीं परीक्षां प्रचारयितुं यथेष्टधनसाहाय्यं करिष्यन्ति चेत्, तदा विशेषनियमानुसारं तादृशी अपि परीक्षा प्रचारिता भवेत् ।

प्रतिनगरं प्रतिराजधानि च परीक्षा-केन्द्रसंस्थापनार्थं सर्वविधज्ञेयपरि-ज्ञानार्थं वा "कार्याध्यक्ष, अखिलभारतवर्षीय-संस्कृतविश्वविद्यालय, प्रधानका-र्यालय, महामण्डलभवन, जगत्गंज, बनारस" इति संकेतेन पत्राणि व्यवहर्त्त-व्यानीति ।

---

सूचना—संस्कृतविश्वविद्यालयीय परीक्षापाठ्य–पुस्तकानि निम्ननिर्दिष्ट संकेतेन लभ्यन्ते—

मैनेजर, निगमागमबुकडीपो,
भारतधर्मसिण्डिकेट लिमिटेड, स्टेशनरोड, बनारस ।

# आदर्शदानम्।

मिर्ज़ापुर मण्डलान्तर्गत-कन्तितराज्य-विजयपुराधिपति धर्मसुधाकरो विद्याभूषणो राजा श्रीमान् वेणीमाधवप्रसाद सिंह महोदयः स्वकीयया महोदारतया धर्मबुद्ध्या च श्रीभारतधर्ममहामण्डलस्य स्थायिकोषोन्नति-हेतवे अखिलभारत-वर्षीय-संस्कृतविश्वविद्यालयीय-विविधविधेयविधानार्थं च "श्रीवेणीमाधव-पुरन्यास" ( ट्रस्ट ) संस्थापनपूर्वकं सार्द्धचतुस्सहस्र 'बीघा' भूमिमुर्वरां प्रदत्तवानिति महान् आनन्दविषयः। न्यासोऽयं श्रीभारतसम्राड्न्यासस्य सहयोगी। अतः श्रीमान् धार्मिकप्रवरो नृपतिमहोदयो भारतसम्राड्न्यासस्याऽपि सदस्यो ( ट्रष्टी ) भविष्यति। विशालभूमावस्यामेका नदी प्रवहति, कूपाश्च-बहवो विद्यन्ते। अतोऽत्र शोभनं जलाधिगमसौविध्यं वरीवर्त्ति। एतस्या-भूमेर्मध्यभागतः सुविस्तृतो राजमार्गो विराजते, येन अनारतं मृत्तराणि (मोटर) धावन्ति। मिर्ज़ापुरतो भूमिरियं क्रोशद्वयं क्रोशत्रयं वा दूरे वर्त्तते। वाराणसी-नगरादपि केवलं दशक्रोशदूरे विद्यते। भूम्या अस्याश्चतुर्दिक्षु ग्रामा विद्यन्ते। अत एतां फलदां सम्पादयितुं नास्त्येव क्लेशाधिक्यम्। एतस्यां फलदायां सत्यां महान् आयो भवितुमर्हति। श्रीमतः कन्तितराज्याधिपतेश्च धर्मयशसी-चिराय स्थास्यतः।

भूमावत्र श्रीवेणीमाधवपुर नामकं पुरं निर्मास्यते। वर्णाश्रम-व्यवस्थासुरक्षामनुसृत्य साम्प्रतिकं जीविकाभावं च लक्ष्यीकृत्य ग्रामोऽयं वासयिष्यते। उपर्युक्तं सर्वमपि विषयं विज्ञाय ये सज्जनाः कृषिगोरक्षा द्वारा जीविकोपार्जनेन ग्रामेऽत्र वस्तुमिच्छन्ति, ते "प्रधानाध्यक्षभारतधर्ममहामण्डल, जगत्गंज, बनारस" इति संकेतेन पत्रव्यवहारं कुर्वन्तु।

धार्मिकवरस्य कन्तितराज्याधिपतेः श्रीमतो विजयपुराधीशमहोदयस्य दानमिदमिदानीं समये आदर्शभूतमित्यत्र नास्ति कोऽपि सन्देहः। अधुना दरिद्रावस्थां प्राप्तेऽपि भारतवर्षे राज्ञां महाराजानां, भूमिपति-प्रभृतीनां सन्निधाने साधीयसी भूमिसम्पत्तिर्विद्यते। यदि ते एवं प्रकारेणैव भूमिदानं विदध्युस्तर्हि स्वधर्मरक्षा—स्वदेशोन्नतिरचनात्मककार्यसिद्धौ न भवेद् बाधा, श्रीमतो नृपवरस्य दानमिदम् अन्यान्यराज-महाराजादिभूमिपतिभिरवश्यमनुकरणीय-मास्ते। भगवान् भवानीपतिः श्रीविश्वनाथः श्रीमते नृपवराय दीर्घमायुः पूर्णस्वास्थ्यं भारतवर्षस्यापि धार्मिकं यशश्च वितरेदित्येव मनोऽभिलाषः—

—सम्पादकस्य।

# सुरभारतीसेवायाः शुभोऽवसरः !

## काशीस्थ राजकीय-संस्कृतकालेजपरीक्षाफलम् !!

### अद्वितीयं संस्कृतमासिकं पत्रं 'सूर्योदयः' !!!



सूर्योदयः संस्कृतविश्वविद्यालयस्य मासिकं मुखपत्रम् । पत्रमिदं प्रतिपौर्णिमं प्रकाशितं भवति । सूर्योदये देशकालोपयोगिनः प्रबन्धाः प्रकाश्यन्ते । अस्य भाषाऽपि नितान्तसरला भवति । संस्कृतसरस्वत्याः सेवनं सनातनधर्मस्य च संरक्षणमेवास्य मुख्यमुद्देश्यम् । प्रत्यङ्कमत्र भारतीयानां सुप्रसिद्धविदुषां प्रबन्धाः प्रकाश्यं नीयन्ते । संस्कृते एतत्समं नास्ति पत्रान्तरमिति निश्चप्रचम् । ये च महानुभावाः पत्रस्यास्य ग्राहकत्वं स्वीकरिष्यन्ति तेषां सन्निधाने विना मूल्यं परीक्षाफलं प्रेषितं भविष्यति । नाधिकं वक्तव्यमस्ति भवादृशविज्ञेषु, तथापि निवेदनं-यद् बहुव्ययसाध्यमपीदं महत् कार्यं श्रीमत्याः संस्कृत-सरस्वत्या दयनीयां दशामपाकर्तुमेव संचाल्यते । अतो हि समर्पितमिमं "सूर्योदयं" निभाल्य, धर्मबुद्ध्या वा लाभदृष्ट्या वा, स्नेहेन वा, संस्कृतभाषाजनन्याः कर एवेति धिया वा, स्वयं सदस्यत्वं स्वीकृत्य प्रतिपाठशालं, प्रतिच्छात्रं चास्य प्रचारं विधाय नूनमेनं तत्रभवन्तो भवन्तोऽनुगृह्णन्तु ।

काशीस्थराजकीय-संस्कृतविद्यालयस्य सर्वविध-संस्कृत-परीक्षाफलानि च पत्रेऽस्मिन् सर्वतः प्रथमं प्रकाश्यन्तेऽतः परीक्षार्थिभिर्नूनमस्य ग्राहकैर्भवितव्यम् । मूल्यमस्य मुद्रात्रयं ३) वार्षिकम् । असमर्थेभ्यः छात्रेभ्यः पुस्तकालयेभ्यश्च १) रूप्यकेनैकेनैव प्रदीयते ।

पत्रप्रेषणसंकेतः—

"सूर्योदय-"कार्यालयः
महामण्डल भवन,
जगतगञ्ज, बनारस कैण्ट

निवेदकः—

अवधेशप्रसादशर्मा,
( व्यवस्थापकः )

# कर्ममीमांसादर्शनोपक्रमः ।



इह ब्रह्मणो विवर्तरूपे प्रकृतेर्वा विकारमये चराचरे जगति अनन्तविषयवासनासंसक्तानां जीवानां दुःखाऽत्यन्तनिवृत्तिपूर्वकचिरसुखशान्तिसमवाप्तये अध्यात्मज्ञानपरिशीलनमन्तरा न कोऽप्यन्यः समीचीन उपाय उपलभ्यते । श्रुतयः शास्त्राणि चास्य यथार्थसत्यस्य समर्थनं विदधति । "ऋते ज्ञानान्न मुक्तिरिति" ज्ञानमन्तरा न मुक्तिरुदेति, मुक्तिमृते च न निरतिशयानन्दावाप्तिर्भवतीति च सततं समुद्घोषयन्ति । तच्च निरतिशयानन्द-स्वरूपं मुक्तिपदं सूक्ष्मातिसूक्ष्मतयाऽतीन्द्रियतया च दर्शनशास्त्रमन्तरा न कोऽपि सम्यक्तया स्फुटमवगन्तुमर्हति । अतिक्रान्तस्थूलराज्यसीम्नोऽनन्तपारावारस्यातिवैचित्र्यास्पदस्य सूक्ष्मराज्यपयोनिधेरुत्तरणाय दर्शनशास्त्राण्येव केवलं ध्रुवतारायमाणानि मार्गनिदर्शकानि भवन्ति । अतएव भारतीयप्रजावर्गे स्वधर्माविश्वासः परधर्माभासजिघृक्षा तथा—

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते आयुर्विद्या यशो बलम् ( मनुस्मृतिः )
आचारप्रभवो धर्मः सन्तस्त्वाचारलक्षणाः ।
आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ( महाभारतम् )

इत्यादिस्मृतिप्रतिपादितानां सर्वथा स्वश्रेयःसम्पादकानामपि सदाचाराणां वर्जनेच्छा, वेदपुराणेतिहासादिष्वश्रद्धा, वर्णाश्रमधर्मोपेक्षा, परलोकदेवर्षिपितृगणनिवासादिलोकास्तित्वसन्देहः, इत्यादयोऽनेके प्रबला दोषराशयः पाश्चात्यशिक्षासम्पर्कादितः समुद्भवन्ति । ते हि वस्तुतो वैदिकदर्शनशिक्षापद्धतिप्रचारमन्तरा न मूलत उन्मूलयितुं शक्यन्ते । सम्प्रति वैदिकदर्शनाध्ययनाध्यापनाद्यभाव एवैषामसद्भावानां संवर्द्धनसम्बलनादौ हेतुतामाश्रयतीति निर्विवादसिद्धम् ।

स्थूलसूक्ष्मोभयप्रकृत्यवस्थायाः सप्तधा विभक्तत्वेन पर्य्यवेक्षणं केवलमन्तर्दृष्टिसम्पन्ना मुनय एव न विदधति, अपि तु स्थूल-विचारवतां मानवानामपि विवेकदृष्ट्येदमेव सिध्यति । प्रकृतेर्हि स्वभावत एव सप्त विभागा अवलोक्यन्ते । ज्योतिषां सप्त भेदा एव सूर्य्यस्य सप्ताश्वाः कथ्यन्ते । यथा ज्योतिषां सप्त भेदाः सन्ति, तथैव छायाया अपि सप्त भेदाः गण्यन्ते । इत्यत एव हेतो रागादपि मूर्तयो निर्मीयन्ते, छायाया अपि न्यूनाधिक्यकरणेन मूर्तयो विरच्यन्ते । तथैवासुरगणवासोपयोगिनः सप्ताधोलोका देवगणवासोपयोगिनश्च सप्तोर्ध्वलोका ब्रह्माण्डस्योर्ध्वाधोभागीयाङ्गोपाङ्गस्थानीया अभिधीयन्ते । कालविभागोऽपि सप्तदिनानां गणनया क्रियते, स्थूलशरीरोपादानानामपि सप्तसु धातुषु विभागो दृश्यते । यथा चाविद्याराज्यविभागः सप्तविधाभिरज्ञानभूमिभिः क्रियते तथैव विद्याराज्यविभागोऽपि सप्तभि र्ज्ञानभूमिभिः सम्पाद्यते । तासामेव सप्तानां ज्ञानभूमीनां क्रममनुसृत्य सप्तानां वैदिकानां दर्शनानामाविर्भावः स्वाभाविक एव । यतो हि वैदिकदर्शनसिद्धान्तो नित्यः शाश्वतिकोऽविकम्प्य इति सर्वतन्त्रसिद्धान्तसिद्धोऽर्थः ।

तत्र सनातनवैदिकधर्मस्य दार्शनिकसिद्धान्ता अपि तथैव प्राकृतिकपद्धत्या सप्तधा विभक्ताः सन्ति । न्यायो वैशेषिकः सांख्यः योगः कर्ममीमांसा दैवीमीमांसा ब्रह्ममीमांसेति सप्त-सिद्धान्त-प्रतिपादकतया सप्त दर्शनानि पृथक्त्वेन व्यवस्थितानि। तत्र सप्तसु दार्शनिकसिद्धान्तभेदेषु न्यायवैशेषिकौ हि पदार्थवादसिद्धान्तप्रतिपादकावेवोच्येते । यतो हीमौ द्वावपि दर्शन-भेदौ यथाक्रमं स्वीयदार्शनिक-सिद्धान्तज्ञान-भूमिं प्रकाशयन्तौ स्थूलपरमाणूनां नित्यत्वाङ्गीकारेणानुमानत एव परमात्मानं दर्शयितुं यतेते । ततश्च सांख्यप्रवचनमित्येकयापि संज्ञया व्यवह्रियमाणौ सांख्ययोगात्मना प्रसिद्धौ द्वावपरौ सिद्धान्तभेदौ प्रकृतिं विश्वजननीं पुरुषञ्च परमात्मानं नित्यत्वेन स्वरूपतः पृथक् प्रस्थापयतः । तत्रापि सांख्यसिद्धान्तेषु पुरुषाणां बहुत्वेप्रकृतेश्चैक्ये स्फुटं समर्थ्यमाने, योगसिद्धान्तेषु च "क्लेश-कर्म-विपाकाशयैरपरामृष्टः पुरुष-विशेष ईश्वर"इति साक्षादेव पुरुषविशेषात्मना स्वीक्रियमाणेऽपीश्वरतत्त्वे प्रकृतिर्भिन्ना ततः पुरुषोऽपि भिन्नः द्वावपीमौ सर्वथा सर्वतः पृथक् प्रस्थानौ परस्परं विभिन्नौ—

"त्रिगुणमविवेकि, विषयः सामान्यमचेतनं प्रसवधर्मि,
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमानिति"

सांख्यकारिकोक्तदिशा कियदंशतः साधर्म्य-वैधर्म्ये जुषाणावपि विलक्षणधर्माणौ स्त इत्यत्रोभयोरप्यैकमत्यमेव । एवञ्च न्यायवैशेषिकसांख्ययोगात्मना चतुर्द्धा विभक्तानां दार्शनिकसिद्धान्तानां चतस्रोऽपि ज्ञानभूमीरतिक्रम्य मीमांसाशास्त्रस्य तिस्रो ज्ञानभूमयः परस्परं विभिन्ना भिन्नक्रमशालिन्यः पृथक्प्रस्थाना विलक्षणात्मकतयोपतिष्ठन्ते । तथा हि कर्मोपासनाज्ञानकाण्डात्मक-काण्डत्रये वेदराशिर्विभक्तो दृश्यते । ततश्च काण्डत्रयस्यास्य सत्ता-स्वीकृतौ न केषामपि विमतिरिति सर्वसम्मतः सिद्धान्तः । एवञ्च कर्म उपासना ज्ञानमिति त्रयाणामपि काण्डानां स्वीकृतेरावश्यकत्वे तन्मीमांसात्मकानां कर्ममीमांसोपासनामीमांसा (दैवीमीमांसा) ब्रह्ममीमांसास्वरूपाणां त्रयाणां शास्त्राणामपि सत्तास्वीकृतेरप्यावश्यकत्वमेव । अतश्च न्याय-वैशेषिक-सांख्य-योग-दर्शनानां चतुर्णामपि ज्ञानभूमीनामनन्तरं मीमांसात्रयस्यापि तिस्रो ज्ञानभूमयः सर्वैरप्यङ्गीकरणीया एवेति । अत एव शास्त्रेषु 'ज्ञानदा, संन्यासदा, लीलोन्मुक्तिः, योगदा, सत्पदा, आनन्दपदा, परात्परा इति सप्तानां ज्ञानभूमीनां सप्तैव नामानि पृथक्तयोपलभ्यन्ते । तत्र चरमज्ञानभूमित्रयानुसारेण मीमांसादर्शनसिद्धान्तानामपि त्रित्वमस्ति। तद्यथा कर्ममीमांसादर्शनं कर्मकाण्डभागस्य कृते, मध्यमीमांसाऽपराह्वम् दैवीमीमांसादर्शनम् उपासनाकाण्डस्य कृते, चरमं ब्रह्ममीमांसादर्शनन्तु ज्ञानकाण्डस्यकृते इति वेदकाण्डत्रयानुसारि मीमांसादर्शनत्रयमपि अनादिकालतः प्रसिद्धमस्ति। तत्र त्रिष्वपि मीमांसादर्शनेषु कर्ममीमांसोत्तरार्द्धं जैमिनिमीमांसादर्शनं ज्ञानकाण्डीयमीमांसारूपं ब्रह्ममीमांसाऽपराख्यं वेदान्तदर्शनञ्चेति दर्शनशास्त्रद्वयमुपलब्धमासीद् । किन्तु कर्ममीमांसादर्शनस्य वापूर्वं दैवीमीमांसादर्शनञ्चेति दर्शनद्वयं महाकालगर्भे बहुकालाद्विलुप्तमेवासीत् । सम्प्रति अघटन-

घटनापटीयस्याः सर्वशक्तिशालिन्या भगवत्या महामायाया अनुग्रहेण केनचन परलोकतत्त्वज्ञेनान्तर्दृष्टिशालिना परमकारुणिकेन महात्मना विश्वजनीनहितानुध्यानपरेण समाहितेन मनसोपासनावलात् तयोः सूत्राणि समुपलब्धानि । अत्र हि सर्वजनीनाभ्युदयनिःश्रेयसाधकस्य करालकालमहिम्ना महाकालगर्भे विलीनस्य दर्शनद्वयस्याविर्भावे परमेशितुः परानुग्रहैव हेतुरिति यस्य महर्षिद्वयस्य सम्प्रेरणया सूत्राणीमानि समुपलब्धानि तदभिधाननिर्देशं पुरस्कृत्य प्रकाशितानि । नात्र सूत्र-समुपलब्धु र्महापुरुषस्य लेशतोऽणुरपि कर्तृत्वाभिमानः ।

दर्शनद्वयसूत्रसमुपलब्धुर्महात्मनोऽयमप्यनुभवोऽत्रमनाग् निर्दिश्यते यत्—शास्त्रादिषु समुपलभ्यमाना मन्त्रतपोयोगदैवशक्तयः सर्वा अपि ऋतम्भराप्रज्ञावधार्य्याः सत्या एव । सम्प्रत्यपि सदाचारोपासनासमृद्धया मानवो नित्यपितॄणामनुग्रहमासादयितुमर्हति । शरीरवाङ्मनसां शुद्धया, चित्ततीव्रसंवेगेन, स्थिरधारणया, ध्यानसिद्धया, द्रव्य-क्रिया-मन्त्रशुद्धया च साधकोऽधुनाप्यवश्यमेव देवतासाक्षात्कारं लभते । स्वनामरूपाभिनिवेशत्यागेनैकतत्त्वाभ्यासपुरःसरया शरणापन्नतया च धीरो नित्यर्षीणामपि दर्शनं लब्धुमर्हतीति केषाञ्चन विश्वासः । अस्तु, अद्यत्वे सुदुर्लभस्यास्य दर्शनद्वयस्योपलब्ध्या भारतीयदर्शनजगतो महन्मङ्गलं संवृतम् । यतश्च दैवीमीमांसादर्शनेनोपासनादर्शनाभावोऽपाकृतः । जैमिनिमुनिप्रणीतेन कर्ममीमांसोत्तरार्द्धेन सह पूर्वार्द्धमिदं मिलित्वा सम्पूर्णमखण्डितं कर्ममीसादर्शनं च सम्वृत्तम् ।

अस्य कर्ममीमांसापूर्वार्द्धस्वरूपस्य कर्ममीमांसादर्शनस्य प्रथमपादे धर्मरहस्यं, द्वितीयपादे च संस्काररहस्यं, तृतीयपादे तु कर्मरहस्यम्, चरमे चतुर्थपादेऽपि संस्कारशुद्धया क्रियाशुद्धिः तया च मोक्षाध्वनः रहस्यानि विस्तरशो विवेचितानि सन्ति ।

इदानीमस्य पूर्वार्द्धकर्ममीमांसादर्शनस्याविर्भावतः सनातनधर्म्मावलम्बिनां शास्त्रीयसिद्धान्तेषु सम्भाव्यमानानां सर्वासामपि शङ्कानां समूलमुन्मूलनं भविता । न क्वापि शङ्कालेशावकाशसम्भवोऽप्यधुना स्थास्यति । वर्णाश्रमधर्मावलम्बिनां सिद्धान्तानां दृढतया सुगुप्तिः, वेदशास्त्रीयवर्णाश्रमाचाराणामुपरि जायमानानां शङ्कानां सर्वथा निराकरणम्, ईश्वराज्ञास्वरूपाणां धर्माणां तत्त्वतः स्वरूपनिर्णयः, वर्णाश्रमधर्मयोः सर्वाङ्गीणा पुष्टिः सर्वाभ्यर्हितस्य सर्वसम्मतस्य च कर्मराज्यस्य गभीररहस्योद्घाटनेन तत्त्वज्ञानविकाशे विशेषसाहाय्यकरणमित्यादि बहुविधं साहाय्यमनेन कर्ममीमांसादर्शनेन भविष्यतीति विश्वासोऽस्माकम् ।

अपरञ्चेह धरातले कर्मराज्यविस्तारो हि सर्वैरेव धर्मावलम्बिभिः केनापि रूपेण स्वीक्रियत एव । तस्य विशेषाङ्गविस्तृतिविषये तु सनातनधर्म्मावलम्बिनां महर्षीणां दिव्यदृष्टिमतां परमकारुणिकानामेव सकलजनहिताधायको विस्तृतो विचारो विद्यते । अतश्चानेन कर्ममीमांसादर्शनेन सर्वधर्ममतावलम्बिनां परमं कल्याणं भविष्यतीति निःसन्दिग्धम् ।

वैदिकानां स्मार्तानां पौराणिकानां तान्त्रिकाणां वा सिद्धान्तराशीनां पुष्टि-

दार्शनिकमीमांसामन्तरा कदापि न सम्भवति, न च तत्र जायमानस्य विरोधिनामाक्रमणस्यैवापाकरणं सम्भवति। एवम्भूतस्य दार्शनिकग्रन्थस्याभावादेव सम्प्रति सनातनधर्मस्याचाराणां सिद्धान्तानाञ्चोपरि सर्वत आक्रमणं भवति। इदृशे धर्मविप्लवसमये धर्मरक्षायां बद्धपरिकरस्य चतुरस्रसामग्रीसम्पन्नस्य दार्शनिकग्रन्थरत्नस्योपलब्धिस्तस्य च निरन्तरायं पुस्तकरूपेण प्रकाशनं सर्वनियन्तुरन्तर्य्यामिणः परमेशितुरनवधिकृपामन्तरा नैव सम्भवतीति नतशिरोभिरास्तिकशिरोमणिभिरभ्युपेयमेव।

इत्थञ्चेह देशकालात्मविज्ञानविदां विदुषाञ्चापरिश्रान्ताध्यवसायेन सम्प्रति सर्वेषामेव सप्तज्ञानभूमिमतां दार्शनिकग्रन्थरत्नानां पर्य्यवेक्षणगवेषणप्रकाशनानि भूरिप्रयासधनव्ययसाध्यान्यपि विधीयन्त एव। तत्र सर्वप्रथममस्य सभाष्यस्य कर्ममीमांसादर्शनस्य पूर्वार्द्धस्यातिशयोपयोगित्वात् प्रकाशनं जातम्।

वैदिकोपासनाकाण्डीयं दैवीमीमांसादर्शनमपि प्राय एतत्तुल्यसंख्याकसूत्रसम्बलितमेव सभाष्यं प्रस्तुतं विद्यते, तदप्यचिरेणैव कालेन विदुषां दृष्टिपथे समागमिष्यतीति सम्भावयामः।

योगदर्शने तु श्रीमतो महामुनेर्व्यासदेवस्य विस्तृतं भाष्यमुपलभ्यत एव तथापि तस्य साम्प्रतिकोन्मार्गगामिजनानामशेषशङ्कानिराकरणक्षममन्यदप्येकं संस्कृतभाष्यमितः प्रकाशनाय सुसम्पादितं विद्यते।

सांख्यदर्शनस्य परमास्तिकदर्शनस्यापि सतस्तत्रार्षभाष्याभावेनाद्यावधितस्य महिमा निगूढ़ एवासीत्। इदानींत नापि सूत्रकृदभिप्रायानुसारि-विस्तृतं संस्कृतभाष्यं विरचितं विद्यते। यस्यावलोकनेन सुधियोऽद्यावधि तस्मिन्दर्शनेऽनीश्वरसांख्यसंज्ञयोपहितं कलङ्कं शीघ्रमेवापसारयिष्यन्ति।

काण्डत्रयात्मकस्य वेदस्य चरमकाण्डस्वरूपप्रकाशकस्य ब्रह्ममीमांसादर्शनापराख्यस्यापि वेदान्तदर्शनस्य समन्वयनामकं भाष्यं प्रणीयमानमस्ति। यत्राभिहितानां षण्णामपि ज्ञानभूमीनां सिद्धान्तैः सह सप्तमज्ञानभूमिगतस्य वेदान्तदर्शनस्य सिद्धान्तानाञ्च समन्वयो भविता। येन सर्वत्रैव दर्शनशास्त्रेषु आपाततः प्रतीयमानो विरोधः समूलमुन्मूलितो भविष्यतीति धियैव न्यायवैशेषिकदर्शनयोरपि विस्तृतमन्यत् संस्कृतभाष्यं निर्मिमित्सितं विद्यते।

यतो हि सप्तानामेषां दर्शनानां स्वस्वरूपेणेह जगति जागरूकत्वे सति नास्ति केषामपि विरोधिनां शक्तिर्यत्पुराणस्मृतिप्रभृतिषु कामपि शङ्कां समुत्थापयेदिति बुद्ध्यैवैषां दर्शनानां विस्तृतभाष्यविभूषितानां प्रकाशनं सम्पद्यते। येन सर्वत्रैव वैदिकज्ञानसूर्य्यज्योतिषां निर्बाधं स्यादविहतः प्रसार इति सर्वनियन्तारं जगदीश्वरमभ्यर्थयते—

श्रीअन्नदाचरणशर्मा तर्कचूड़ामणिः

( महामहाध्यापको महामहोपाध्यायश्च )

———

ओं तत्सत्।

# कर्ममीमांसादर्शनस्य धर्म्मसंस्कारपादयो विषयानुक्रमणिका।

इति कर्ममीमांसादर्शनस्य धर्म्मसंस्कारपादयोः विषयानुक्रमणिका समाप्ता ।

न्तराणां देवासुरलोकानां कर्म्मरोशेः सर्वरहस्यानां कर्म-विपाकानां तथात्मानात्मनामित्यादीनां सर्वेषामेव समाधिगम्यानां विषयाणां भावानाञ्चावगतिः समीचीना भवितुमर्हति । समाधिस्थयोगिभिरेवानुष्ठेयानां संयमक्रियाणां साहाय्येन समाधिभाषाया निर्माणं भवति । पुराणादिषु यत्रैवैवंविधं वर्णनं समायाति तत्र सर्वत्रैव समाधि-भाषा विज्ञेया सर्वमपीदं संयम-क्रिययैवोपलभ्यते ।

## दशमाध्याये, ऊनत्रिंशत्तमे पद्ये समागतानां षण्णां क्रियाणां नामनिर्देशः ।

उपरि पद्ये प्रसङ्गतः समायाताः षट् क्रिया इत्थमूहनीयाः "अस्ति, जायते, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यति, इमाः षडपि विकृतिरूपाः क्रियाः प्रकृतावेव जायन्ते नासामात्मना सह कोऽपि सम्पर्कः ।

## वेदानां त्रैगुण्यविषयतारहस्यम् ।

वेदानामभिधानं जीवानां हिताधायकम् । तत्र सृष्टितत्त्वस्य त्रिगुणात्मकत्वात् तत्प्रतिपादकस्य वेदराशेरपि त्रिगुणात्मकत्वं सुतरामुपस्थितमेव भवति । आत्मतत्त्वञ्च प्रकृतेः परत्वेन तद्भिन्नत्वात् त्रिगुणभिन्नमिति सुस्थिरतरमेव । इत्थञ्च वेदेषु प्रवृत्त्यर्थं धर्मतत्त्वनिरूपणं निवृत्त्यर्थञ्चाऽधर्मतत्त्वस्यापि निषेधमुखेन वर्णनमुपलभ्यते । अतश्च धर्म्माधर्म्मरहितस्य त्रिगुणातीतस्यात्मपदस्य जिज्ञापयिषया "त्रयीधर्ममधर्माढयम्"…इति, इह समाधिभाषायां प्रयुक्तम् ॥ २६—३१ ॥

## परलोकवर्णनप्रसङ्गेन कर्मविपाक-कथनरहस्यम् ।

इह परलोकवर्णन-परेष्वध्यायेषु यत्र कर्मविपाकवर्णनं प्रेतलोकनरकलोकादिवर्णनम्, अथवा सदसदात्मकं कर्मफलनिरूपणमित्यादिसर्वमपि समाधिभाषानिबद्धम्, एतत्सन्धेनैव भयानकरोचकादिवर्णनपद्धतयोऽपि यत्र तत्र स्थलान्तरेषु समुपलभ्यन्ते। यतश्च जीवानां धर्म्मानुष्ठाने प्रवृत्तिरधर्मानुष्ठाने च वैमुख्यं सम्पद्येतेति । तद्वर्णनमपि काल्पनिकतां नासादयति । किन्तु कर्मविपाकसिद्धान्तानुसार्य्येवेति विशेषतो विमर्शनीयम् । तत्रैव अष्टासप्ततितमात् पद्यादारभ्याशीतितमपद्यं यावद्वर्णितं यमस्य भगवतो धर्म्मराजस्य भयदायकरौद्रमूर्त्ति-स्वरूपम् कर्मविपाकविज्ञानबलाधिष्ठितम् विज्ञेयम् ।

तथा हि भगवान् धर्मराजो यमो धर्म्माधर्म-फलदाता भूर्लोकस्य शास्ता निगद्यते । अत्र भूर्लोकशब्देन मृत्युलोकः प्रेतलोकः पुत्रकलत्रादिधनैश्वर्य्यादिघृत्कटवासनावतां कृते स्वर्लोकत्वेन ख्यातः पितृलोको नरकलोकश्चेत्येते चत्वारोऽपि तद्भेदा गृह्यन्ते । इत्थञ्च चतुर्णामपि लोकानां शास्तुरस्य भगवतः

५

मूर्तिः कथमीदृशी घोरा रौद्रस्वरूपेति विकल्पनायां तद्रहस्यं ब्रूते । यतो हि स तु भगवान् सर्वस्वरूपमयः, किन्तु पापिनो मानवाः स्वकर्मपरिणामवशात्तादृशीमेव तस्य भगवतो मूर्त्तिं द्रष्टुमर्हन्ति न सुन्दरात्मिकां धार्मिकदृष्टिगोचरीभूतां सर्वाह्लादकरीं दिव्यमूर्तिम् ।

अत्र सन्दर्भप्रसङ्गे वर्णिता जीवाः पापिनः सन्ति। पापिनश्च जीवा नरकलोके वा प्रेतलोके वेत्युभयत्रैव गतागतं लभन्ते । इमौ च द्वावपि लोकौ पृथक्-प्रस्थानौ परस्परं भिन्नौ ।

पुण्यात्मानो हि जीवा यमराजधान्यां समुपेता धर्मराजस्यातिमनोहरं सुन्दरं पवित्रं मङ्गलमयं रूपं निभालयन्ति । यच्च रूपं कठोपनिषदि वैदिको महात्मा नचिकेता द्रष्टुं समर्थो बभूव । इममेव धर्मराजं यमं बहवः सांसारिका अल्पज्ञा अन्य-मतावलम्बिनो जगदीश्वरत्वेनाङ्गीकुर्वन्ति स्तुवन्ति च । तेषां व्यक्तिगतो महेश्वरः यमराज एवास्ति यो हि जीवानां सर्वेषामेव धर्म्माधर्मफलप्रदः परलोकशासकश्चोच्यते ।

इहानेनोपर्युक्तवर्णनप्रसङ्गे नेदं विस्मृत्यापि नावगन्तव्यम् यत् सर्वेषामेव पञ्चत्वमीयुषां समानैव परलोकगति र्भवतीति । इह हि संसरणशीले प्राणिवर्गे ये जीवाः सांसारिकमोहासक्ताः स्त्रीपुत्रादिविषयवासनापाशबद्धा भवन्ति ते हि प्रायशोऽल्पस्य वा अधिकस्य वा कालस्य अवधिं व्याप्य प्रेतलोके निवसन्ति ततश्च नरकलोकातिथयो भवन्ति । ये च नरकलोका असंख्याताः सन्ति ।

परलोकगमागमनविषये व्यवस्थेयमवगन्तव्या । तथा हि—यस्य जीवस्य अल्पं पुण्यं भवति स हि प्रथमं पितृलोकमुपैति । पश्चात् स्वपापार्जितं नरकादि लोकभेदान्, यस्य च पापमेवाल्पं भवति स प्रथमं नरकलोकमेव सर्पति । ततश्च स्वपुण्योपार्जितान् पितृलोकादुन्नतलोकान् । उन्नतोन्नताः पुण्यात्मनोजीवा उत्तरोत्तरम् उन्नतेषु स्वर्गादिलोकेषु प्रहीयन्ते । किं बहुना पापपुण्यानुसारतः प्रेत-नरक-पितृलोकादि-परलोकेषु जीवानां प्रेषणम्, उन्नतानां स्वर्गादिलोकानाञ्च पथः परिस्कृत्य सारल्यविधानम्, सर्वमपीदं यमस्य धर्म्मराजस्यैव शासनाधीनमिति ॥ ७६–८० ॥

## सप्ताशीतितम-पद्यादारभ्यैकनवतितमपद्यावधि वर्णितानां परलोकादिगतीनां रहस्यम् ।

अत्र साधारणानां कारणानां गतिरहस्यं विवृतमस्ति । तत्र जायमानानां सर्वासामपि शङ्कानां समाधानमाह—

प्रबलाः पापिनः प्रथमं प्रेतलोके गत्वा पश्चान्नरकादिलोकेषु पतन्ति। तत्रापि असिपत्र–रौरव-कुम्भीपाकादिनरकलोकान् भुक्त्वा अवशिष्टं स्वकर्मविपाकम् उद्भिज्ज-स्वेदजाण्डज-जरायुजादियोनिपिण्डेषु दण्डभोगार्थं पातिता भवन्ति। ततश्चावसाने दुःखबहुलम् ज्ञानपूर्णमानवपिण्डमासादयन्ति। अयमेव गुरुतराणां पापकर्मणां भोगक्रमो ज्ञेयः। तत्र प्रथममेव नरकभोगस्येदं निदानं यन्नरके पापच्यमानानां जीवानां स्वपापपरिणामज्ञानं तिष्ठति यद् अमुष्य पापस्य परिपाकोऽयं मयोपभुज्यत इति। पश्वादियोनिषु तु तद्भानमेव न तिष्ठतीतीयान् विशेषः। अत एव पापिनां प्रथमं नरकपातो भवति, येन तत्स्मृतिः सततं तिष्ठेदिति ॥ ८७–९१ ॥

## एकादशेऽध्याये प्रथमं गर्भविज्ञानरहस्यम्।

स्त्रीपुरुषसंयोगात्स्वत एव पीठोत्पत्तिर्जायते। प्राणाकर्षणविकर्षणसमन्वयेन पीठप्रतिष्ठा भवति। उपासना-पीठानि विविधानि भवन्ति। यत्र देवपूजा विधीयते दम्पतीसम्बन्धेन यत्पीठमुत्पद्यते तद्धि सहजपीठमुच्यते। पीठेषु च यथासम्भवं देवर्षिपितृगणादारभ्य स्वर्गनरकस्थजीवगणं यावत् सर्वेऽपि यथाकर्म आकृष्यन्ते। पराजितायाश्च सत्यां पुंशक्तौ पीठं नश्यति। तदनन्तरञ्च वीर्य्यरजोमिश्रणेन स्त्रीगर्भे जनिष्यमाणस्य जीवस्य स्थूलशरीरात्मकगृहनिर्माणकर्मारम्भो जायते। यस्य जीवस्य कृते गृहरूपं तत्स्थूलशरीरं निर्मातुमारभ्यते तस्य तेन शरीरेण सह दृढसम्बन्धोऽपि सुदृढायते। इत्यत एव जीवस्तेन स्थूलशरीरेण परिताप्यते इत्यभिहितं महर्षिणा वर्णनप्रसङ्गतः।

अत्र प्रकरणे जीवः पापी वा स्यात् पुण्यात्मा वा स्यात् आसुरीसम्पत्तिशाली वा स्याद् दैवीसम्पद्विशिष्टो वा भवेत्, देवांशजन्यो वा स्याद् ऋष्यंशोत्पन्नो वा स्यात्, स्त्री वा स्यात्पुमान् वा स्याद्, अस्मादेव कालादारभ्य तस्मिन् गृहमूले दृष्टिर्निबद्धा जायते। अर्य्यमप्रभृतयो नित्यपितृगणाश्च तत्र निर्माणे सहायका भवन्ति। यदा च गृहं निवासयोग्यं भवति तदा देवाः तं जीवं तत्र गर्भगृहे प्रवेशयन्ति। एतदेव मातृगर्भे मृत्युलोके जन्मगृहतो जीवस्य दार्शनिकं रहस्यं विद्यते।

वेदेषु शास्त्रेषु वा जीवानां जन्मग्रहणस्य विविधं यद्वर्णनमुपलभ्यते तदपि भावत्रयात्मकमेव विज्ञेयम्। कुत्रचित् स्थूलशरीरोपलब्धये तदुच्यते, क्वचन मातापितृसम्बन्धतः संस्कारजन्यं तत्, कुहचिद् लोकलोकान्तरतः समागतानां जीवानां सूक्ष्मशरीरैः सह सम्बन्धभाग् भवतीत्यादिकारणभेदाद्वर्णने वैचित्र्यपूर्णता युक्तैवेति ॥ १०२ ॥

## त्रिविधायां रौद्रीब्राह्मी-वैष्णवीरूपाया महामायाशक्तेः स्वरूपकथन-पुरःसरं वैष्णव्यास्तस्याः प्रभावातिशयख्यापनम् ।

परमात्मनि महामायायाश्च 'अहं ममेतिवद्' अभिन्नः सम्बन्धः । यथा च गायक-तदीयगानशक्त्यो र्मध्येऽभेदसम्बन्धस्तथैव ब्रह्मतच्छक्त्योरभेदः । इयं हि महामायारूपा ब्रह्मशक्तिः गुणत्रयभेदेन त्रिधा कार्य्यकारिणी भवति । तथा हि सृष्टिसम्बन्धतो ब्राह्मी शक्तिः, स्थितिसम्बन्धेन वैष्णवी शक्तिः, प्रलयसम्बन्धेन च रौद्री शक्तिरित्यादिनामभिः प्रख्याप्यते ।

सृष्टि-रक्षा-सम्बन्धतो हि वैष्णवी माया गर्भवासदुःखान्निःसरतामेव मानवानां स्मृतिं विलोपयति । सोऽयं सततं जायमानः स्मृतिविलोपव्यापारो वैष्णव्याः शक्तेरेव प्रभावाद् भवतीति विभावनीयम् । एकतश्च संकुचितगर्भयन्त्रतोनिर्गमनवेलायां गर्भमार्गनिष्पेषणक्लेशविमूर्च्छया सविलुप्तस्मृतिको भवति अपरतश्च यदि स जीवः स्वीयप्राक्तनजन्मराशिं न विस्मरेच्चेत्तदा स स्मृत-स्वकीय-यावज्जन्मसंस्कारो विक्षिप्तो भूत्वा वातुल एव भवेत् । इयं हि वैष्णव्या मायायाः कृपैवावसेया यया जीवो विस्मृतनिजपूर्वकर्त्तव्यः पुनर्नूतनजीवनयात्रां नवीनेनोत्साहेन प्रारभत इति । नोचेदनन्तवारभ्रमणचक्रप्रसङ्गतो बहुशोऽधिगतनरकवासभयं तथाऽगणितवारंश्चानासादितस्वर्गवासजन्यदुःखोद्वेगश्च तं सर्वदा विक्षिप्तमेव कुर्वंस्तिष्ठेदिति ।

अपरतश्च स्वमातुः, पितुः, पुत्रस्य, कलत्रस्य कन्यायाश्च पूर्वजन्म-सम्बन्धिनी स्मृतिरुपरूढा स्यात् । तथा माता स्त्रीत्वेन स्त्री च मातृत्वेन पिता पुत्रत्वेन पुत्रश्च पितृत्वेन यदि ज्ञाता भवेयुरेवमात्मीयश्च शत्रुत्वेन परिचिता भवेयुश्चेन्नरकवासादपि दुःखतरमिदं जीवनं स्यात् । तदीया वृत्तयश्च विक्षिप्ततराः स्युरिति निःसन्देहम् । अतश्च भगवत्या वैष्णव्या मायायाः प्रभावेणैव एकतः पूर्वस्मृतिं विस्मृत्य, अपरतश्च असति सद्भावं, दुःखदेषु पदार्थेषु च सुखानुभवं कृत्वा जीवः स्वजीवनमार्गेऽग्रसरो भवति ॥ १३-२१ ॥

## चतुर्दशाऽध्याये शारीरिक-मानसिक-वाचनिकादिकर्म्मभेदेन धर्माऽधर्म्म-रहस्यप्रतिपादनम् ।

पूज्यपादा महर्षयोऽत्र शारीरिकवाचनिकमानसिककर्म्मानुसारेण धर्म्माऽधर्म्मनिर्णयं विदधति । तथा हि—सत्त्वगुणवर्द्धकात्कर्मणो धर्म्मोत्पत्तिस्तमोगुणवर्द्धकाच्चाधर्मोत्पत्तिरिति । चतुर्दशोध्यायस्य चरमभागे यत्पापराशेर्वर्णनमुक्तम् तत्सर्वमपि स्मृत्यनुसारतोऽधर्म्म एव, तेषां सर्वेषामपि पापानां परिणामरूपः

कर्मविपाको वर्णितः । स चोक्त-पापानां पूर्णमात्राया दण्डो ज्ञेयः । तत्र भावतारतम्यानुसारेण दण्डेऽपि न्यूनाधिक्यम्भवतीति सर्वथाऽवसेयम् ॥६१—६६॥

## पञ्चदशाध्याये विविधनरकपर्य्यवेक्षणमिषेण वैदेहस्य राज्ञस्तत्रोपस्थित्या सहमहेन्द्रयमयोरपि तत्रोपस्थितिरहस्यम् ।

नरकलोको हि भूर्लोकस्य चतुर्थांशो निगद्यते । तत्रत्या राज्यश्रृङ्खला तत्रत्यश्चानुशासनं श्रीमतो भगवतो धर्म्मराजस्याधीने तिष्ठतः । तस्य राजधानी पितृलोके विद्यते । स च लोको भूर्लोकस्योत्तमाङ्गमुच्यते ।

भगवत इन्द्रस्य अमरावती नाम राजधानी तृतीय ऊर्ध्वलोके स्वर्गलोकेऽस्ति । उन्नत-स्वर्ग-सुख-भोक्तारो जीवा अमरावत्यां प्रेत्य गच्छन्ति । तत्रोपस्थितस्य हि वैदेहस्य राज्ञोऽतिपुण्यशालित्वात्तद्द्वारा च तत्र नरकेऽसाधारणघटनाया भाव्यमानत्वादुभयोरेव प्रधानयोस्तयोरिन्द्रयमयोः स्वर्गनरकपदाधिकारिणोस्तत्रोपस्थितिरावश्यकीति विभावनीयम् ।

## पापकर्मपरिणामरहस्यम् ।

पूर्वोक्तेषु सर्वेष्वपि अध्यायेषु यावतां नरकलोकानां तदन्यपरलोकानामपि यद्वर्णनं समुपलभ्यते तत्र सर्वत्र मध्ये मध्ये यत्र तत्र गौणरूपतः परकीयभाषासत्वेऽपि प्रधानतया समाधिभाषैवोहनीया । तथा हि—यावतां तत्र पापकर्मणां वर्णनमुपलभ्यते तद्धि धर्माऽधर्मनिर्णायकं समाधिबुद्धिप्रसूत-स्मृतिशास्त्रमेव विज्ञेयम् । तेषां सर्वेषामेव कर्मणां परिणामः पाप एव भविष्यतीति ध्रुवमवसेयम् ।

सम्प्रति देशकालपात्रानुसारं तेषां पापानां शक्तिषु तारतम्यमवश्यं भवितुमर्हति । संसारेऽपि ईदृगवलोक्यते यदेकस्यैव पापस्य देशकालपात्रभेदेन भावभेदेन च राजदण्डसमाजदण्डयोर्न्यूनाधिक्यं जायते । अतोऽत्र नास्ति शङ्कावसरः ।

## नारकीयाणां दण्डय-शरीरपरिवर्तनरहस्यम् ।

नरकलोकस्य वैचित्र्य-विषये समुत्पन्नानां जिज्ञासुजन-शङ्कानां समाधानमाह—अद्यत्वे प्रेततत्त्वविज्ञानविद्भिरिदं प्रत्यक्षत एव प्रमाणितम् यद् प्रेतशासका वेताला यदा दुष्टान् प्रेतान् दण्डैःशस्त्रैर्वाताडयन्ति तदा तेषां विशीर्णानि शरीराङ्गानि पुनस्तथैव द्रुतमेवापूरितानि भवन्ति । तत्रेदं रहस्यं विज्ञेयम् यदस्माकं शरीरं पार्थिवमिति कृत्वा तत्रोत्पन्नं व्रणं विलम्बेनापूर्य्यते तेषामपार्थिवमिति त्वरयैवापूर्य्यते तदीयं तद् । इत्यत एव नरकवर्णने काककृतं नारकीयाणामक्षिनिःष्काशनं, तदनन्तरं तत्र द्रुतमेवेतराक्षिसंयोगादिकं समुपनिबद्धं दृश्यते ।

## प्रेतानां पुण्यात्म-सम्पर्कजन्यानन्दरहस्यम् ।

अद्यत्वे नवीनया प्रेताह्वानविद्यया पीठस्थापनपूर्वकं यत् प्रेताह्वानं कुर्वन्ति। तत्र यदि पुण्यात्मानः पुरुषाः पीठस्पर्शं कुर्वन्ति तदा प्रेतगणाः शान्ति सुखञ्चानुभवन्ति । तद्वदेव यदि पुण्यात्मानो नरके केनाऽपि निमित्तेनोपसर्पन्ति तदा नारकीयाणां जीवानां यन्त्रणा ह्रासमुपैति शान्तिसुखोपलब्धिरपि जायत इति नास्त्यत्राणीयानपि सन्देहः । इत्थञ्च पुराणशास्त्रेषु प्रेतलोक-नरकलोक-स्वर्गादि-लोकानां कर्मविपाकानाञ्च यद्वर्णनमुपलभ्यते तत्सर्वमपि निश्चयेनैव समाधिभाषासम्बलितं ज्ञेयम् ॥ ७५-८१ ॥

## पञ्चदशाध्याये निर्दर्शित-नरकविषये सर्वेषामपि ज्ञातव्यविषयाणां समाधानरहस्यम् ।

भीषणानां नरकाणां वर्णनमुपलभ्य जिज्ञासूनां हृदि विविधानां शङ्कानामुद्गमो भवति । तथा हि—को हि प्रेतलोक-नरकलोकयोः सम्बन्धः ? नरकेषु च सिंहव्याघ्रादिपशूनां काकगृध्रादि-पक्षिणाञ्चोपलब्धिः श्रूयते । तत्र कुतस्तेषां समागमो भवति ? तत्रात्यानां देवानां कीदृग् नरकलोकेन सम्बन्धः ? दैवस्य जगतः सत्ता वस्तुतो विद्यते न वा ? अस्ति चेत् कथं तस्या अनुमानम्, विधातव्यम् अनुभवो वा ? इमे च सर्वेऽपि लोकाः कुत्र सन्ति ? इत्यादिसर्वासामपि शङ्कानां समाधानं समुचितमवश्यं समाधातव्यम् ? इतिपूर्वपक्षे संक्षेपतः समुत्तरयति—कर्मविपाकानां पूर्वोक्तवर्णनप्रस्तावे साधु समर्थितमिदं यत् पुरुषयोनौ समुपेत्य जीवा यथा यथा पापविशेषं समुपार्जयन्ति तथा तथा तदनुसारतो नरकलोकं वा गच्छन्ति विकलाङ्गा वा भवन्ति जङ्गमेषु पशवः पक्षिणोऽथवा स्थावरेषु क्षुपलता-पादपादयो वा दण्डभोगाय भवन्तीति ।

इत्थञ्च विशेष-पापबलाद् यदा जीवा उद्भिज्ज-स्वेदजाण्डजजरायुज योनौ पातयितुं शक्यन्ते तदा तासां योनीनां मृत्युलोके नरकलोके स्वर्गलोके वा स्थितिः सम्भाव्यत एव, पापवैचित्र्यादीदृशानां त्रिविधानां भोगवैचित्र्याणामपि सम्भवोऽवश्यं भावीति सुनीर्णितः पन्थाः । एवं हि पापवैचित्र्यवशात् प्रेतलोकेषु नानात्मकेषु नरकलोकेषु च जीवानां गतिः सुनिश्चितैव ।

प्रेतलोकगतो हि भोगो न तादृश उत्कटोऽस्ति यथा नारकीयो भोगः । यतो हि प्रेतलोकगतानां जीवानामाकृतिः स्वरूपं वा पूर्ववन्मनुष्यलोकस्थाकारस्वरूपतुल्यमेव भवति येन स परिचेतुमपि शक्यते । यतश्च मानवलोकस्यातिगुरुतराकर्षणवशादेव जीवाः प्रेतत्वमाश्रयन्ति तल्लोकीयसंस्कारानुरूपमेव तत्र

प्रेतलोके दुःखभोगो भवति। इत्यतश्च तेषां तत्र दुःखभोगो नाति वैचित्र्यपूर्णः प्रत्युत परिमित एव भवति।

नरकलोकानाञ्च नानात्वमाश्रितानां दुःखानि कठोरतराण्यतिभयङ्कराणि विविधवैचित्र्यपूर्णानि च भवन्तीति तेषामाभासमात्रेणैव पूर्वमुपन्यासः कृतः। नरकलोकरक्षकाणां देवानां विविधा योनयो भवन्ति। ते हि सर्वेऽपि यमदूतशब्द-वाच्या भवन्ति। यथा हि इह मर्त्यलोके कारागाररक्षकाः कियन्तो रक्षिणो वहिःस्थानादायान्ति कियन्तश्च तेष्वेव दण्डितपुरुषेषु यथानियमं यथायोग्यं प्रतिविधीयन्ते, तथैव नरकरक्षकेषु देवेष्वपि ते देवास्तत्र विनियुज्यन्ते येषां पूर्वप्रारब्धसंस्कारा नरकदर्शनोदर्का भवन्ति। अपरे च तेष्वेव नारकेषु यथा-नियमं यथायोग्यमुपादायन्ते।

## तत्र दैवजगत्सत्ताविवेचनम्।

दैवस्य जगतः स्थितिविचारस्त्वतीव दुष्करो विद्यते। तथापि तस्य स्थितौ नाणुरपि सन्देहलेशः। अतश्चैतादृशानां गुरुतराणां विषयाणां विवेचनतः पूर्वं प्रमाणानुभवयोः स्वरूप-परिचय एव प्रथमतः कर्तव्यकोटावारोहति। तत्र आप्तप्रमाणतः प्रत्यक्षप्रमाणस्याधिकं सामर्थ्यम्, ततोऽपि अनुमानस्या-धिक्येनोपयोगः। इमानि त्रीण्यपि बुद्धितत्त्वस्यैव विषयीभूतानि सन्ति इत्येतेषामुपरि अनुभवस्याऽस्ति स्थानम्, यश्चानुभवो भावतत्त्वस्य विषयः। प्रमाणानां मूलभूतस्य बुद्धितत्त्वस्यापेक्षया भावतत्त्वं हि सूक्ष्ममिति सर्वसम्मतः सिद्धान्तः। यतो हि अन्तःकरणात्मकं बुद्धितत्त्वं क्रियाविशेषेणैव सम्बध्नाति भावतत्त्वन्तु अन्तःकरणस्य अवस्थाविशेषेणेति। सुतरां बुद्धितत्त्वापेक्षया तस्य सूक्ष्मताप्रतीतिः। इत्यस्मादेव हेतोर्मानवो बुद्ध्या विविधानि कर्माणि सम्पा-दयति। परन्तु भावानुसारेणैव तदीयो भोगः समुपतिष्ठते।

तत्राप्तप्रमाणतस्तु दैवस्य जगतः स्थितौ विचिकित्सैव नास्ति। यतो हि आप्तप्रमाणमुख्यानि सनातनधर्मान्तर्गतानि वेदप्रभृतीनि सर्वाण्यपि शास्त्राणि तत्स्थितिं प्रमाणयन्ति। इह जगति अन्यानि अवैदिकान्यपि मतमतान्तराणि दैवजगत्स्थितिं प्रमाणयन्ति। अद्यत्वे तु सभ्यजगतः प्रमाणीभूतेयं पदार्थविज्ञान-विद्या यदा प्रेतलोकस्थितिं प्रत्यक्षत एव प्रमाणयति तदा दैवस्य जगतः प्रत्यक्षप्रमाणविषयत्वेऽपि नाणीयान् सन्देहः। एवञ्च जन्मान्तरवाद-संस्कार-वाद-कर्मवादादिभिस्त्रिभिः साधनैः परिशीलितैस्तथा कर्ममीमांसा-दैवीमीमांसा-

प्रभृतिशास्त्रपर्य्यालोचनया च अनुमानतोऽपि दैवस्य जगतः स्थितिरसन्दिग्धैव सिध्यति ।

द्वितीयतश्च दैवस्य जगतो यथासम्भवमनुभवाय तु साम्प्रतिकतडिद्विज्ञानस्यैव कियन्ति उदाहरणानि समुपस्थापनीयानि । तद्यथा एकस्य तडित्सूत्रस्य साहाय्यमाश्रित्यालक्षितैव तद्गतिः स्थानान्तरं समुपेत्य तत्र ज्योतिः विविधाँश्च शब्दान् बहुशः क्रियाप्रकारान् उद्भावयति तद्वच्च एकस्थानस्थितं रूपं स्थानान्तरमुपनीय प्रकाशयति । तडित्सूत्रं विनापि केवलं दूरस्थप्रेरकयन्त्रेण दूरस्थ-ग्राहकयन्त्रेण च केवलं सर्वव्यापकाकाशावलम्बनेन एकदेशस्थिताः शब्दाः रूपाणि वा सुदूरेऽपि देशान्तरे प्रकाशीभवन्तीति सम्प्रति प्रतिक्षणं प्रत्यक्षत एवाकल्पते ।

इत्थमाकाशस्य शून्यत्वाभावे इन्द्रियातीतविविधसूक्ष्मशक्तिभिः पदार्थैरवस्थाभेदैश्च समन्वितत्वे च सिद्धे इदमपि स्फुटमेव सिद्ध्यति यद् विद्यमानेष्वपि सर्वेषु पदार्थेषु सूक्ष्मतया तान् वयमनेन स्थूलचक्षुषा प्रत्यक्षीकर्तुमसमर्था यथास्मः तथैव दैवस्यापि सूक्ष्मातिसूक्ष्मस्य स्वसन्निधानमेव विद्यमानस्यापि साधारण्येन प्रत्यक्षतया संकलयितुमसमर्था एवेति ।

विषयोऽयमतिदुरूहतयाऽन्यथापि दार्शनिकयुक्तिभिर्विवरीतुं शक्यते । तथा हि—अस्माकं शरीराणि तत्स्थानीन्द्रियाणि च पृथिवीतत्त्वप्रधानान्येव । यतो हि तत्प्रधानतयैव मृत्युसमनन्तरमेव तेषां शरीराणामत्रैव विनियोगः पार्थिवत्वे भवति । न हि तदीया गतिः प्रेत-देव स्वर्गनरकादिलोके सम्भवति । यतो हि ते लोकाः तत्त्वान्तरप्रधानाः । इत्यत एव च हेतोर्वयं पार्थिवप्रधानदेहस्थेन्द्रियादिसाधनैः स्तांल्लोकांस्तत्र स्थितान् जीवान् वा न प्रत्यक्षीकर्तुं समर्थाः । इति निःसन्दिग्धा सरणिः ।

दैवस्य जगतः स्थाननिर्णयप्रकारे योगशक्तिशालिनां महर्षिप्रवराणामीदृगनुभव उपलभ्यते यद् अनन्तकोटि-ब्रह्माण्डभाण्डोदर्य्या महामायाया ब्रह्मशक्तेर्लीलायाः मनोवाग्बुद्धिगोचरत्वाभावेऽपि तस्याः सृष्टिविलासक्रमस्यानुमानं कर्तुं शक्यते ध्रुवमिति । प्रतिब्रह्माण्डस्यानुमानश्च प्रतिसूर्य्यलोकानुमानत उह्यम् । यतो हि यावन्तः सूर्य्यगोलकाः सन्ति तावतां सर्वेषामपि आकर्षण-विकर्षणशक्तिप्रवाहस्यावर्त एव तु ब्रह्माण्डशब्दवाच्यो भवति । यथा हि एकस्य पिण्डस्य धारणाय नानास्थीनि भवन्ति, तथैवैकस्य ब्रह्माण्डस्य धारणाय विविधजीववासोपयोगिनः पृथिवीप्रभृतयो गोलकसमुदाया भवन्ति ।

सूर्योदयः ।

सप्तमे वर्षे } माघस्य पूर्णिमा सं० १९८८ । { अष्टम-संख्या

## मङ्गलाचरणम् ।

—:❀:—

( १ )

अन्तर्दुरूह उत भीमतमस्समूहो
विघ्नश्च शाश्वतिकसाधुविधाननिघ्नः ।
देवस्य यस्य महसा सहसाऽस्तमेति
धीनायको मम स एव विनायकोऽस्तु ॥

( २ )

आनन्दकाननगुहाश्रितमद्वितीय-
स्वीयप्रभापटलपूरितविश्वकोषम् ।
दोषं निरस्य विहिताखिलतापमोषं
वन्दे सदैव तमरोषमिहाशुतोषम् ॥

( ३ )

हे शारदे जनतया नतयार्चिते हे
हे देवि तत्रभवती भवती प्रसद्य ।
वर्षं प्रसिद्धमिह भा-रत-भारतस्य
सद्यस्सुसिञ्चतु सुधार-सुधा-रसेन ॥

# सम्पादकीया अभिप्रायाः ।

## बङ्गविश्वविद्यालये देवभारती ।



कलकत्ता-विश्वविद्यालये तदीय-प्रबन्ध-सभया एकः प्रश्नः समुपस्थापितो यत् आङ्गलप्रवेशिकापरीक्षायाः ( मैट्रिक्यूलेशन ) पाठ्यक्रमे संस्कृत-शिक्षाविषयः पूर्ववदनिवार्यस्वरूपस्तिष्ठेत् ऐच्छिको भवेद्वेति । विषयमिममाश्रित्य बङ्गप्रान्तीयाः शिक्षाविदो दलद्वये विभक्ताः सन्ति । हिन्दुबालकानां कृते संस्कृतशिक्षा अनिवार्यस्वरूपैव भवितुं योग्या, यतो हि हैन्दव्याः संस्कृतेमौलिकी भाषा सुरगवी एवेति, संस्कृतभाषा-परिज्ञानमन्तरेण सांस्कृतिकी पूर्णोन्नतिर्न हिन्दूनां भवितुमर्हतीति केचन मन्यन्ते । अपरे व्याहरन्ति यत् आङ्गलप्रवेशिकायाः परीक्षायाः ( मैट्रिक्यूलेशन ) पाठ्यक्रमे यावन्तो हि विषया निर्द्धारिता स्तेषां सम्यग्रूपतः परिज्ञानं विद्यार्थिनो नो कर्त्तुं पारयन्ति, सर्वेषां विषयाणां भारवहनं छात्राणां कृते दुर्वहं भवति, तेषां स्वास्थ्येषु पाठ्यक्रमस्यैतस्य नितरामनुचितः प्रभावो निपतति । कोमलमतयो बालका विदेशीयया भाषया एतावतो विषयान् अधीयन्ते यत् तेषां परिज्ञानं न ते कर्तुं पारयन्ति, ते तु विनैव तेषां विषयाणां समुचितज्ञानं रटनं विदधते, यथा तथा वा परीक्षायां प्रश्नान् उत्तरन्ति, अनन्तरं कालेषु गच्छत्सु तत्तद्-विषय-ज्ञान-विधुरा जायन्ते । अतो हि संस्कृतविषय ऐच्छिक एव तेषां कृते हितप्रदः । संस्कृतं विषयान्तरं वा विद्यार्थिनामिच्छाधीनमेव समुचितमिति ।

प्रवेशिकाया आङ्गलपरीक्षायाः पाठ्यक्रमपरिवर्तन-विषयक-प्रस्तावे संस्कृत-अरबी-प्रभृतिवाणीनामैच्छिकत्वं, प्रारम्भिकविज्ञानविषयस्यानिवार्यत्वं, मातृभाषायाश्च शिक्षाया माध्यमं विधातुं विमर्शो विहित आस्ते । प्रश्नोऽयं समाधातुं वङ्गीयविश्वविद्यालयप्रबन्धसमित्या एकस्या उपसमितेरधीनः कृतः । उपसमितिरियं मार्च-मासस्य एकत्रिंशीं तिथिं यावत् तत्सम्बन्धे स्वीयं मतं प्रकाशयिष्यति ।

हिन्दुबालकानां कृते संस्कृतभाषाशिक्षायाः कियदावश्यकत्वमिति ते एव ज्ञातुं प्रभवन्ति, येषां सुरभाषायाः संस्कृतसाहित्यतो वा अणीयानपि परिचयो विद्यते ।

या किल विद्या हिन्दुजातेः सभ्यतायाः संस्कृतेश्च आदिजननी, यत्र च हिन्दुजातेर्युग-युगान्तरीय ज्ञान-विज्ञानानि संचितानि, या च अस्माकं परम्परा-

ऽऽगत-रीति-नीति-आचार-विचार-व्यवहार-कल्पना-भावनादीनाम् उद्गमस्थानम्, यदीयेन अनन्तस्रोतसा साम्प्रतमपि आस्माकीना भावप्रवाहा निरन्तरं प्रवहन्ते, यस्यां विद्यायां पूर्वपुरुषाणामस्माकम् अद्भुतं ज्ञानं, विलक्षणप्रतिभा, प्रकाण्डं पाण्डित्यं, दर्शनानि, नीतयः, आध्यात्मिका विषयाः, कलाकौशलानि, विज्ञानविषयकाश्चमत्काराश्च सम्भृताः सन्ति, या हि विद्या प्राचीनं गौरवं, पुरातनं बुद्धिवैभवं, पुराचीनं बलविक्रमं, दिगन्तव्यापीनि यशांसि, प्रतापान्, स्पर्द्धनीयानि स्वीयानि ऐश्वर्याणि च अस्मान् सततं स्मारयति, तस्या एव विद्यायाः शिक्षां यदि अस्माकं बालकाः, देशस्य भाविनो नागरिकाः, राष्ट्रस्य निर्म्मातारो भाग्यविधातारो वा न प्राप्स्यन्ति, स्वकीयपूर्वजानां ज्ञानभण्डारेण रत्नकोषेण वा यदि ते वञ्चिताः स्थास्यन्ति, तर्हि काऽसावपरा विद्या, या स्वकीयानां देश-जाति-परम्परा-सभ्यता-संस्कृतानाम् उपरि आदरं प्रकटय्य सर्वत स्तान् जागरूकान् विधास्यति ? संस्कृतभाषया सह हिन्दी-बङ्गला-मराठी-गुजराती-प्रभृतिप्रान्तीयभाषायाः कीदृशो घनिष्ठः सम्बन्धो विद्यते इति कथनस्य नास्ति किमपि प्रयोजनम् । देवगवीशब्दकोषत एव प्रान्तीयभाषायाः शब्द-भाण्डागारः परिपूर्ण आस्ते । संस्कृतभाषासाहाय्यं विना, तासां पोषणं, समृद्धि-साधनं वैभवसंवर्द्धनं वा नैव भवितुमर्हति । संस्कृतभाषायाः किल दर्शन-काव्य-नाटक-नीति-धर्म-शास्त्रप्रभृतीनाम् अक्षयकोषेणैव हि तासां शृङ्गारो भवति । यदि बङ्गीया हिन्दुबालकाः संस्कृतशिक्षया वञ्चिताः स्थास्यन्ति तदा भविष्यति काले बङ्गीयसाहित्यसमुन्नतिः कथङ्कारं भविष्यति ? बङ्गभाषायाः सौष्ठवं माधुर्य्यं वा कथं सुरक्षितं भवेत् ? अत एव कारणात् कवीन्द्ररवीन्द्रमहोदयः कलकत्ताविश्वविद्यालयस्य प्रस्तावमिमं घातकमुक्तवान्, बङ्गीय-आङ्गल-प्रवेशिकायांपरीक्षायां संस्कृतभाषाया अनिवार्य्यरूपेण संस्थापनं नितरामावश्यकं घोषितवान् । कवीन्द्ररवीन्द्रमहोदयः पौरस्त्यस्य पाश्चात्यस्य च साहित्यस्य पारङ्गतः पण्डितः, तस्य प्रतिभा सर्वतोमुखी, तत्कल्पितकाव्यकलया मण्डितं बङ्गसाहित्यं भारतीय-प्रान्त-साहित्येषु मूर्धन्यमस्ति । विश्वकवेरिमां चैतन्य-कारिणीं घोषणां बङ्गीया विद्वांसः शिक्षाविदः किम् अवहेलयिष्यन्ति ?

प्रवेशिकायाः परीक्षायाः पाठ्यक्रमं सरलमुपयोगिनं च विधातुं सर्वतोऽपि समीचीन उपायोऽयमस्ति यत् शिक्षाया माध्यमभाषा देशीया वाणी विधातव्या, विदेशीयया भाषया पाठ्यविषयाणां शिक्षाप्रदानेन बालकानां कीदृशः अपकारो भवतीति शिक्षाविदां नास्ति तिरोहितम् । अस्माकं देशस्य शिक्षापद्धति-

रस्वाभाविकी त्रुटिपूर्णा चेति भारतस्य सर्वेऽपि प्रसिद्धाः शिक्षाविदो विद्वांस आमनन्ति । शिक्षायाः कुत्सितप्रणाल्या एतया विद्यार्थिनां कीदृशः शक्तेः समयस्य चापव्ययो भवति, तेषां प्रतिभासु च कथमिव तया विषमविषमः प्रभावा निपततीति सर्वे विद्वांसो जानन्ति । सर्वमिदं तेषां भाविनो जीवनस्य कृते निरतिशयं हानिकारकं भवति । परीक्षार्थिनामुपकाराय यदि प्रारम्भिक-विज्ञान-शिक्षणस्य अनिवार्यत्वमुचितं तदा तेषां सांस्कृतिकसमुन्नतये संस्कृतशिक्षाया अपि सुतराम् अनिवार्यत्वमपेक्ष्यते । विद्यार्थिनां ये हि विषयो हिताधायकः, येषां विषयाणामध्ययनेन तेषां ज्ञानवृद्धिर्भवेत्, तेषां विषयाणां पाठ्यक्रमे समावेशो वाञ्छनीय एवास्ते । परन्तु देवभाषाया उपेक्षणं पाठ्यक्रमाच्च बहिष्करणं नितान्तमनुचितम् ।

वयन्तु सविश्वासमाशास्महे यत् कलकत्ताविश्वविद्यालयप्रबन्धसमितिः स्वीय-पाठ्यक्रमे सामयिकं परिवर्त्तनं कुर्वती चापि प्रवेशिका ( मैट्रिक्युलेशन ) पाठ्यक्रमे यथापूर्वं संस्कृतभाषाया अनिवार्यत्वं रक्षिष्यत्येवेति ।

---

## निजामराज्ये हैन्दवी दुरवस्था ।

देशीयराज्येषु दक्षिणहैदराबादनामधेयम् एकं सुविशालं माहम्मदराज्यमस्ति । १६३१ खिस्ताब्दमानवगणनानुसारं तत्र १,२२,०३,५०० हिन्दवः, १५,३४,३६६ माहम्मदाश्च निवसन्तीति ज्ञायते । एवं प्रकारेण तत्र प्रतिशतं ८५ हिन्दवः सन्ति । हिन्दुषु प्रधानतया आन्ध्राः, महाराष्ट्राः, कर्णाटकाश्च विद्यन्ते । एते सर्वे खलु स्वकीयायां सभ्यतायां योग्यतायां वीरतायां च वर्त्तन्ते सुप्रसिद्धाः । किन्तु राज्यं द्वारीकृत्य राजकीयं पदं शिक्षादिकं च यथोचितमेतैर्नासाद्यते, इत्यत्र विषये तेषां हिन्दुधर्मावलम्बित्वमेव निदानमनुमीयते । तत्र हिन्दूनाम् एतावति संख्याधिक्ये सत्यपि उच्चपदाधिकारिणः केवलं २४६ हिन्दवः, माहम्मदास्तु ८७५ सन्ति । राज्यतश्च माहम्मदाः ४,८३,७५४), हिन्दवस्तु १,२४११७॥) रूप्यकाणि वेतनं लभन्ते । राजकीयकार्य्यकारिण्यां समितौ सभापतिं विहाय नान्यः कोऽप्येकोऽपि सदस्यस्तत्र निभाल्यते । सभापतेः कार्यालये सर्वेऽपि कर्मचारिणः माहम्मदाः सन्ति । सर्वोच्चकार्यालये ( चीफ-सेक्रेट्रियट ) एकोऽप्युच्चपदाधिकारी हिन्दुर्नास्ति । एवं हि सैनिकधार्मिकविभागयोरपि हिन्दुभिर्न किमपि पदमासादितम् । 'माल'–नामके विभागे २२२ अध्यक्षेषु १९६ माहम्मदाः, केवलं २० हिन्दवः सन्ति । अर्थविभागेऽपि १३६ माहम्मदाः, केवलं १२ हिन्दवश्च पदाधिकारिणो वर्त्तन्ते । राज्ये एकोऽपि वकीलपदवाच्यो हिन्दुर्नास्ति । शिक्षाविभागे २७७ उच्चपदाधिकारिणो वर्तन्ते, तत्र १८३ माहम्मदाः, ५३ हिन्दवः, २३ यूरोपीयाश्च विलोक्यन्ते । न केवलम् उच्च-

पदेष्वेव, अन्यत्रापि हिन्दवोऽत्यल्पीयांसो नियुज्यन्ते। स्वकीययोग्यताप्रदर्शनार्थं समयोऽपि हिन्दुभिर्नासाद्यते, राज्ये एकोऽपि हिन्दुः भूमिपतिः (सूबेदार, ताल्लुकेदार) न वर्तते।

निजामस्य शासनं सगर्वमिदमुद्घोषयति यत् राज्ये शिक्षाया एतादृशी समुन्नतिरस्ति यत् तस्या विस्तृतिनिरोध आवश्यक इव लक्ष्यते इति। सम्बन्धेऽत्र निम्ननिर्देशतो ज्ञातव्यं यत् निजामस्य प्रतिशतं ८५ हिन्दुप्रजा तेन शिक्षणेन कियन्तं लाभमासादयतीति।

१८८१ खिस्ताब्दे सार्वजनिक-शिक्षण-सम्बन्धे राज्यतः २,२६,२२०) रूप्यकाणि व्ययितान्यभूवन्। १९२६ खिस्ताब्दे धनानि तानि वृद्धिं गत्वा ७७, २५,८०७, मुद्रारूपाणि जातानि, परन्तु शिक्षित-हिन्दूनां संख्या क्रमशः ह्रसिमानमेवासादितवती। १८८१ खिस्ताब्दे त्र्यस्त्रिंशत्सु एको हिन्दुः शिक्षित आसीत्, परन्तु १९२१ खिस्ताब्दे अष्टात्रिंशत्सु एको हिन्दुः शिक्षितो दृष्टः। सम्पूर्णेऽपि राज्ये १८८१ खिस्ताब्दे प्रतिसहस्रं ३८ शिक्षितजनसंख्या आसीत्, परन्तु एतावदधिकव्यये कृतेऽपि १९३१ खिस्ताब्दे प्रतिसहस्रं ३३ शिक्षितजनसंख्या जाता।

राज्यद्वारा उस्मानिया-विश्वविद्यालयः संस्थापितो वर्त्तते। परन्तु तत्र महाम्मदमतावलम्बिनां छात्राणां संख्या ६१७ मिताऽस्ति, परन्तु तत्र केवलं ३९ संख्यका हिन्दुविद्यार्थिनः सन्ति। ब्रिटिशभारते सहस्रशो हिन्दुविद्यार्थिभ्यः प्रतिवर्षम् उच्चशिक्षामधिगत्य तत्तद्विश्वविद्यालयेभ्य उपाधीन् प्राप्नुवन्ति, परन्तु हैदराबाद-राज्ये ३०३ हिन्दुबालिकासु केवलम् एका शिक्षिताऽस्ति। माहम्मदमहिलाशिक्षायास्तु नूनं समुन्नति र्विद्यते। यतो हि ३२ माहम्मद-बालिकासु एका शिक्षिता। नैतावदेव, राज्यद्वारा नदूद-सहायक-फण्ड-लण्डनमस्जिद-अलीगढ़मुस्लिमविश्वविद्यालय-दिल्ली जामिया मिलिया-पानीपतमुस्लिमस्कूलप्रभृतिभ्यः संस्थानकेभ्यः क्रमशः ९०००००), ५०००००) १००००:०) ५००००) २००००) मुद्राणां वितरणं जातम्। परन्तु तेन कस्मैचनापि हिन्दुसंस्थानकाय चणकमात्रमपि साहाय्यं न प्रदत्तम्।

श्रूयते तत्रत्यो हिन्दुप्रजासङ्घः किल निजाम-महोदयसन्निधाने एकं प्रार्थनापत्रं प्रहितवान्। तत्र उक्तवार्त्तया सह धार्मिकात्याचारस्यापि चर्चा कृताऽस्ति।

यत्र राज्ये प्रतिशतं ८५ संख्यावतीनां प्रजानां कृते समुचितराजकीयपदप्राप्तेः शिक्षादीक्षादिकस्यापि वा न सुप्रबन्धो वर्त्तते, तत्रत्यैस्तु न कथमपि शयानैर्भवितव्यम्। सुशिक्षितस्यैकस्य सद्विचारशालिनो नरेशस्य राज्ये एतादृशीं भयावहां साम्प्रदायिकविषमतामासाद्य निरतिशयं खिद्यते चेतः। आशास्महे यत् निजाममहोदयस्तत्र प्रार्थनापत्रविषये नूनं ध्यानं दास्यति, प्रतिशतं ८५ संख्यकानां हिन्दुप्रजानां कृते सुव्यवस्थां च विधास्यतीति।

---

# धर्मशिक्षायाः प्रयोजनीयता ।

—०:॥:०—

आहार-निद्रा-भय-मैथुनं च
सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो
धर्मेण हीनाः पशुभिः समानाः ॥

पशु-मानवयोः पार्थक्य-परिचायको धर्म एव । अन्यथा उभौ समानौ एव विद्येते । धर्मेण हीनः पशुरेव । मनुष्येण सता तेन धार्मिकेणावश्यं भवितव्यम् । को हि धर्म इति महर्षिभि र्बहुधा विवेचितम् । सांसारिकसर्व-भाषोपनिबद्धोत्तमोत्तमग्रन्थेषु धर्मलक्षणं निरूपितमास्ते । तत्तद्ऋषि-महर्षि-धर्मग्रन्थादिप्रतिपादितायां धर्मपरिभाषायां पार्थक्यं विभिन्नत्वं वा प्रतीयते । किन्तु सूक्ष्मविमर्शतस्तदुद्देश्येषु समानतैव सिध्यति । धर्मतत्त्वे न्यूनाधिकमात्रया साम्प्रदायिकताग्रस्तेऽपि मौलिकेषु सिद्धान्तेषु तत्र नास्त्येव विभिन्नता ।

विश्व एव विचारशालिनो विद्वांस आमन्ति यत् कोमलमतीनां बालकानां कृते धर्मशिक्षाया नितरां प्रयोजनीयत्वमस्तीति । एतद्विमर्श मुद्दिश्यैव शिक्षण-विभाग-पदाधिकारिभिरप्युद्घोषितं यत् प्राथमिकशिक्षणालयेष्वपि नूनमेव धर्मशिक्षायाः प्रबन्धेन भवितव्यम् ।

कीदृशं नाम धर्मशिक्षास्वरूपमिति बहवः शङ्कन्ते । किम् आर्य-हिन्दु-सामाजिक-सिद्धान्तो नाम धर्मः ? किं वा ख्रिस्तीयसम्प्रदायानुमोदितं कृत्यं नाम धर्मरूपम् ? महम्मदीय-कुरान-प्रतिपादितं वा धर्मस्वरूपम् ? किं धर्मस्वरूपमित्य-त्रानेके जिज्ञासन्ते ।

भारतवर्षेऽत्र शतशः सम्प्रदायाः प्रचरन्ति । कतमत्सम्प्रदायानुमोदितं धर्मशिक्षणं स्यात् यद्येकस्य सिद्धान्तः स्वीक्रियेत, तदाऽन्यैः सह समुत्पद्यमानो विरोधो दुर्निवारो भवेत् । यतो हि नैकस्यैव सम्प्रदायस्य सेवकाः सर्वे विद्यन्ते । तत्रापि सार्वजनिक-शिक्षामन्दिरेषु कस्याप्येकस्य सम्प्रदायस्य शिक्षणं नैव कदापि सम्भवति । यतः किल तत्र तत्र संख्यातीतानां जातीनामतीतसंख्यानां सम्प्रदायानां च बालकाः शिक्षां लभन्ते ।

ये किल मानवाः सम्प्रदायं धर्मं चैकमेव मन्यन्ते, नूनमस्मन्मते ते भ्राम्य-न्ति । न हि सम्प्रदायो धर्मपदवाच्यः । यद्यपि सम्प्रदायस्यान्तर्गतो धर्म

आचाराश्च गृह्यन्ते, यद्यपि च बहुत्र आचारा अपि धर्मशब्देन अभिहिताः, किन्तु धर्मस्य मौलिकः सिद्धान्तः सम्प्रदायात् पुस्कर-पलाशवन्निर्लितः। धर्मो हि त्रिकालाबाधितः, नैव किल आचार-सम्प्रदायादयस्तथा। अपरिवर्त्तनशीलो भगवान् धर्मः, अखण्डासीम-व्यापकश्च। धर्म ईश्वरस्य स्वरूपमेव। स च सर्वदैव सनातन-स्वरूपः, न कदापि परिवर्त्तते। सम्प्रदायाचारादयस्तु देशकाल-पात्रभेदेन समुत्पद्यन्ते परिवर्त्तन्ते चापि।

धर्मो हि भगवान् साधारणासाधारण-विशेषापद्-भेदतश्चतुर्धा विभक्तः। तत्र साधारणस्य धर्मस्य स्वरूपं यथा प्रतिपादितं स्मृतिषु—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

इत्यादि—प्रतिपादिते धर्मस्वरूपे नास्ति मतभेदः कस्यापि सम्प्रदायस्य। अत्र मानवमात्रस्याधिकार इति सर्ववादिसम्मतः सनातनसिद्धान्तः। न चायं धर्मः कस्यापि समाजस्य कस्याश्चन जातेर्वा विरुद्धः प्रतिकूलो निषिद्धो वा। सर्वेष्वपि तत्तद्भाषापुस्तकसहस्रेषु सर्वदेशीयैरेव पण्डितप्रकाण्डैरुपर्युक्त-धर्मस्वरूपम् ईश्वरीयगुणान्नातिरिक्तं सर्वैरेव बुद्धिजीविभिरुपादेयमादरतश्चेति स्वीकृतम्। एतद्विरहितो मनुष्यः पशुरेवेति प्रबन्धमूर्धन्य-पद्यतात्पर्यम्।

भगवन्तम् ईश्वरं विश्व एव मनुतनुजनुषः प्रायो मन्यन्ते।

"रुचीनां वैचित्र्याद् ऋजु-कुटिल-नानापथ-जुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव"।

× × × ×

"रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे तथाकाले ह्यवस्थास्त्वमविक्रियः"॥

× × × ×

"बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे"॥

इत्यादिभ्यः परः शतेभ्यः प्रमाणेभ्य एकस्यापीश्वरस्य परमपितुः सर्वान्तरात्मनो रुचीनां वैचित्र्यादनेकानि नामानि ईश्वर-गॉड-खुदा-प्रभृतीनि श्रूयन्ते। सर्वेषामेतेषामर्थे तु नास्त्येव कस्यापि मतभेदलेशः। अस्य भगवतः सर्वशक्तिमतः परमेश्वरस्य प्रार्थनायामपि न चैव केचिदपि सम्प्रदाया विप्रतिपद्यन्ते विवदन्ते वा। अतः परमेशितुः प्रार्थनायां प्रसन्नतायां वा परमे धर्मकर्मणि निखिलाः शिक्षणीयाः शिशवो नूनं प्रवर्त्तनीयाः। धृतिक्षमादमादि-सर्वसाधा-

रणहितावायक-धर्मशिक्षापूर्वकमीश्वरोपासनायां सर्वेऽपि अन्तेवसन्तो व्यापारयितव्याः साग्रहं सानुरोधं सर्वैः शिक्षकैरित्येव सर्वसाधारणशिक्षालयहितकरं धर्मशिक्षास्वरूपं भवितुमर्हति ।

भगवतः प्रार्थनायामस्ति निहिता महती शक्तिः । इदानीं यावद् यावन्तो हि महापुरुषाः समुदपद्यन्त, तेषां महत्त्वाधायकेषु कार्यकलापेषु भगवत्प्रार्थनमपि प्रधानमेकं कर्म । ईश्वरोपासनया जीवान्तःकरणेषु शान्ति-शुचिता-सुख-सान्त्वनादयः सद्गुणा आविर्भवन्ति, आध्यात्मिकं बलं बर्द्धते, कर्त्तव्याकर्त्तव्य-परिज्ञानं नितरां बद्धमूलं भवति, मनसो दौर्बल्यं विनश्यति च । अतः सर्वैरेव मानवैः सृष्टिकर्त्तुर्जगन्नियन्तुर्भगवतः परमेश्वरस्य प्रार्थनायां स्वजीवन-कालस्य कियानपि भागोऽवश्यमेव प्रदेयः । यदि कोऽपि नरतनुधारी षष्टिघटिकात्मके एकस्मिन् दिवसे विंशतिं पञ्चविंशतिं च पलानि भगवदुपासनायां न व्यत्ययेत्, तर्हि तत्समो निन्द्यः कोऽन्यः सम्भवेत् ?

केनचन व्यक्तिविशेषेण, ग्रन्थविशेषेण सम्प्रदाय-विशेषेण वा निर्द्धारितैव भगवत्प्रार्थना समादर्त्तव्येति नाऽवश्यकीयम् । सा किल स्वीयां रुचिं सुविधां श्रद्धां वा निर्विभर्त्ति । सा च आङ्गल—भाषायां पारस्यवाण्याम् अमरभारत्यां भाषान्तरेषु वा समनुष्ठातुं शक्यते ।

सायं प्रातः प्राणनाथस्य इष्टदेवस्य पूजया भजनस्तवनादिना च तदुपासनं विधेयम् । न चाऽत्र संसारे तादृशः कोऽपि नरश्रेष्ठः यः किल स्वकीयेष्टदेवाराधनातो वञ्चितः ।

साधारणतः सर्वेषु विशेषतश्च प्राथमिकशिक्षणालयेषु समध्यापयतां शिक्षकमहानुभावानां सन्निधाने मामकीनमिदमभ्यर्थनं यत् ते स्वशिष्याणामधिमानसं भगवतः प्रेम समुद्भावयन्तु तान् धर्मसेवकान् विदधतु, स्वर्गादपि गरीयस्या जनन्या जन्मभूमेः समुद्धारकांश्च कुर्वन्तु ।

अखिलभारतवर्षीय--सनातनधर्मावलम्बिप्रतिनिधिभूतविराड्धर्मसभाश्रीभारतधर्ममहामण्डलेन सर्वेष्वेव विद्यामन्दिरेषु धर्मशिक्षाप्रचारार्थं बहुवर्षतः साधीयान् समुचितश्च सुप्रयत्नः समनुष्ठीयते । तदात्मकः प्रस्तावस्तु तस्य भारतशासकेनापि ( भारतगवर्न्मेण्ट ) स्वीकृतः । साफल्याय तस्य सर्वैरुद्योगो विधेयः ।

———

# अभिनन्दनम्।

—*०*—

[ श्रीमतः स्वर्णवर्षाधिपस्य M. L. C. पदवीधारिणो रावबहादुर रुद्रप्रतापनारायणसिंहस्य शारदीयनवरात्रयात्रामहोत्सवेऽभिनन्दनम्। ]

रामो राजीवनेत्रः सशरवरधनुःस्कन्धदेशैकशोभी
निर्लोभी गाधिराजप्रवरसुतधनुर्वेदविद्याप्रवीणः।
गोप्ता सन्मानवानां खलजनकुधियां निग्रहैकान्तशीलो
वीरो वैरीन्धनानामनलगुणमयो मङ्गलं ते ददातु ॥ १ ॥
श्रीमान् रुद्रप्रतापः सवितृवरकुलालङ्कृती राजवर्यैः
सेव्योऽरातीन्द्रजेता जयति हि नितरां स्वर्णवर्षानरेशः।
सोऽयं भूपालवीरो नयविनयनुतो ऽत्रकल्याणराशिः
जीव्यान् नूनं समानां शतमिह हि विभू राजसिंहासनस्थः ॥२॥
सोऽयं मातामहस्यातुलितपदमिदं राजकीयं नृपेन्द्रैः
संसेव्यं दिव्यतेजाः सततमविरतं रञ्जयञ्छोभते वै।
यत्तेजोभीतिभीतः शतयमनपटुर्निर्जरेशोऽतिदूरे
भूमिं संत्यज्य रम्यामधिवसति दिवं निर्जने शङ्कमानः ॥ ३ ॥
यस्मिन् नाथे हि कोषः सततमुपचयं जायतेऽनेकरत्नै-
रापूर्य प्राप्यते नापचितिमिह तथा काश्चिदेषः कदाचित्।
यो नित्यं मानदानैरनुनयति विभू राजतन्त्रप्रवीणो
नीतिज्ञः स्वप्रजाभिः सततमिह जनै राजते लालिताङ्घ्रिः ॥ ४ ॥
यो भूमिः सज्जनानांरिपुरसुमनसां तेजसा भानुतुल्यः
निर्णेता साधुवादान् पिशुनजनमुखभ्रंशनैकप्रवीरः।
मर्मज्ञोऽदीनचेताः सरलशुभमतिः शास्त्रवादानुरक्तः
श्रीमान् नो निःसपत्नो जयति वसुमतीं पालयन् निर्विकारः ॥ ५ ॥
राज्यश्री यत्रभूपे विलसति नितरां नित्यमुल्लासमाना
चञ्चच्चन्द्रावदातच्छुरितगुणयशो भासते यस्य लोके।
सोऽयं विद्याविनोदी सदसि हि विदुषां सप्रजानां हितार्थी
साधूनां भूपलक्ष्माङ्कितचरणतलो राजते देवकल्पः ॥ ६ ॥
यः शास्ति प्रेमपूर्वं प्रचुरगुणयशाः सन्ततीः सन्ततं वै
यन्नाथे नैव हीनं त्वधिकबलजनो बाधते कोऽपि कं च।

योन द्वेष्टीह पूर्वं कमपि च विजयी नो बिभेति द्विषद्भ्यो
नोन्मूल्यारातिवर्गं विरमति न समूलक्षयं भूमिनाथः ॥ ७ ॥
यन्मन्त्रं गुप्तवीर्यं प्रचरति निखिले राजतन्त्रे स्वशक्त्या ।
कार्यं यस्यानुमेयं फलत इह विभोरस्ति शक्तिर्विचित्रा ।
स्थाने कोपी दयावानखिलजनमनस्तोषकारी मनस्वी,
भाति श्रीर्यस्य दिव्यासनमधिवसतः श्रीरिवान्या मघानः ॥ ८ ॥
यो मित्रं सन्मतीनां सरलपथजुषां शत्रुरेवं खलानां,
पाति प्रेम्णैव सर्वां प्रकृतिमिह सदा स्वीयबुद्धिप्रभावैः ।
ऊलूका यस्य भीता अरय इव सदा भाग्यभानूदये ते,
स्वात्मानं निक्षिपन्ति प्रचुरतमतमोदेश एवेति नूनम् ॥ ९ ॥
ज्ञानी ज्ञानिजने गुणी गुणिजने मानी सदा मानिनि,
त्यागी त्यागिजने जयी विजयिनि प्राज्ञस्तु विद्वज्जने ।
रागी रागिजने पटुः पटुजने वीरेषु वीराग्रणी—
रेवं कार्य्यवशादनन्यगुणभाक् श्रीमान् प्रभू राजते ॥ १० ॥
पूर्वं रामो यथाऽस्मिन् शरदि विजयिनि श्रीमहेशीं दशम्यां
ध्यात्वा यात्रां विधाय प्रथितवरपथा रावणं संविजित्य ।
शोभाञ्चक्रे तथैवामरपतिसुसमोऽयं मदीयो नरेशो
भाति स्वीयातपत्र व्यजनवरयुतैश्चामरैर्द्योतितश्रीः ॥ ११ ॥
वह्वाशीर्भिः प्रसन्नं क्षपितरिपुकुलं श्रीविलासातिरम्यं
आयुष्मन्तं प्रजाभिर्नुतचरणतलं सप्रजं दीप्तिमन्तम् ।
विद्वांसो नृत्यलीलालसितजनसभामण्डले राजमानं
श्रीमन्तं सत्प्रभूणां वरमिह सकलास्त्वां सदा बर्धयन्ते ॥ १२ ॥
आशास्महे सदैषा श्रीस्तव राजन् दयानिधेः ।
वर्धमाना भवत्वेवं वयं विद्या-विनोदिनः ॥ १३ ॥

विद्वज्जनानुगो

मुरलीधरझा ।

---

# प्रश्नोत्तराणि ।

—०❀०—

ऐषमस्त्य-सूर्योदय-तुरीयसंख्यायाम् जोशीत्युपनाम्नो विश्वनाथशर्मणः सिद्धान्तकौमुद्याम् 'मातुरुत्संख्यासम्भद्रपूर्वायाः' इति सूत्रे "स्त्रीलिङ्गनिर्देशोऽर्थापेक्षस्तेन धान्यमातुर्नेति कथं सङ्गच्छते" इति प्रश्ने निवेदनम्ः—'यकपूर्वाया' इतिवदिहापि अर्थगतं स्त्रीत्वं मातर्य्यारोप्य 'सम्भद्रपूर्वाया' इति स्त्रीलिङ्गनिर्देशः। स्त्रीलिङ्गजननीवाचकमातृशब्दे एव सूत्रप्रवृत्तिरिति निष्कर्षः। तेन संख्यासम्भद्रपूर्वके परिच्छेतृवाचकमातृशब्दे द्वयोर्मात्रोरपत्यम्, भद्रमातुरपत्यमित्यादिविग्रहे नातिव्याप्तिः। तत्र धान्यपदोपादानन्तु परिच्छेतृवाचकमातृशब्दस्य स्पष्टतया बोधनार्थम् नतु स्वरूपग्रहणार्थम्ः इति दीक्षिताकूतम्।

नन्वेवं धान्यमातुरपत्यं धान्यमातुर इत्यपि स्यादत आह—स्त्रीलिङ्गनिर्देश इति 'बालमनोरमाव्याख्यानं यद्यपि ग··········कामेवाभिव्यनक्ति, तथापि 'गुणगृह्या वचने विपश्चित" इतिभारविसूक्त्या तथा परिश्रमशालिनो बालमनोरमाकारा अपिधन्यवादास्पदीकार्य्या एव नतु कटाक्षेणाधिक्षेप्या इति सत्सम्मतम्।

तत्त्वबोधिनीकारोऽपि च न मुकुलितमुखारविन्दोऽपि तु जोशीमहोदय एव मुकुलितलोचनारविन्दः-धान्यमातुर्नेतिप्रतीकमुपादाय "अभिव्यक्तपदार्था ये" इत्यादि तत्रत्यव्याख्यानेन जननीवाचकमातृशब्दे एव निरुक्तसूत्रप्रवृत्तिरित्यवगन्तुं शक्यत्वात्।

चित्रकूटस्थ-श्रीरामनाम-संस्कृतविद्यालयीय—
व्याकरणप्रधानाध्यापक-के. टी. रामशरणशर्मशास्त्रिणः।

× × × ×

गतसूर्य्योदयाङ्के (आश्विनपूर्णिमाङ्के) 'मातुरुत्संख्यासंभद्रपूर्वाया' इतिसूत्रीय-व्याख्यानं 'स्त्रीलिङ्गनिर्देशोऽर्थापेक्षस्तेन धान्यमातुर्नेति' दीक्षितस्य कथं संघट्यत इति श्रीमद्भि विश्वनाथशर्मभि वैयाकरणपुङ्गवैः वैयाकरणाः सम्बोधिताः।

तत्र विद्वत्किङ्करस्य ममायं तत्संघटनमार्गो दृष्टिमेति—धान्यमातुर्नेत्यस्य परिच्छेतृवाचकस्य नेतियावदर्थो युक्तः कर्तुम्। धान्यपदोपादानमर्थान्तरमात्रं द्योतयितुं नतु शब्दस्वरूपपरिचयाय तुषमात्रादेरपि तथाव

युक्तत्वात् निषेधीयानुयोगिता मातृशब्दमात्रांशे नतु धान्यादिसमुदायांशे तथा च परिच्छेत्तृत्वावच्छिन्नो मातृत्वावच्छिन्नो विधेयतात्वावच्छिन्नोत्वावच्छिन्नप्रतियोगिताकाभाववानिति पर्य्यवसितोऽर्थः। एवञ्च सांमात्रो भाद्रमात्र इत्यादि प्रत्युदाहरणीयमिति शम्।

शिवकुमारमिश्रो व्याकरणाचार्य्यः

प्रधानाध्यापकः

स० ध० सं० विद्यालयस्य, पाटलीपुत्रम्।

× × × ×

घटत्वविशिष्टे घटशब्दे इत्यादिवाक्यघटकसप्तम्याः स्वविषयकबोधजनकत्वार्थकताया इवोक्तवाक्यघटक—धान्यमात्रिति समासप्रयोजकधान्यपदप्रकृतिकलुप्तसप्तम्याः स्वनिष्ठकर्मतानिरूपकार्थबोधकत्वार्थकतायाः स्वीकरणीयतया धान्यपदस्य च परिच्छेद्यवस्तु मात्रोपलक्षणतया धान्यादि कर्मकपरिच्छेदकर्त्तृवाचकमातृशब्दस्य संख्यादिपूर्वकस्याण् प्रत्यये परे नोत्वमिति तद्वाक्यार्थः पर्यवस्यति। अथवा——मातुरुत्संख्यासंभद्रपूर्वाया इति स्वव्याख्यायमानसूत्रे मातृपदेन शब्देऽर्थे च खण्डशक्त्या प्रकारतया बोध्यमानेऽपिजननीरूपार्थे स्वार्थ (स्त्रीत्व) बोधकतायाः पाणिनितात्पर्यावगाहितायाः संख्यासंभद्रपूर्वाघटकटापृशब्दे दृष्टतया तुल्यन्यायाश्रयणदीक्षितास्तत्र भवन्तो दीक्षितास्तद्वासनयैव धान्यमातृपदघटकमातृपदेन खण्डशक्त्या प्रकारतया बोधितपरिच्छेत्तृरूपार्थघटकपरिच्छेदे कर्मतया धान्यबोधजननाभिप्रायेण धान्यपदं प्रयुक्तवन्त इति धान्यादिपच्छेत्तृवाचकमातृशब्दस्य नेत्यर्थः स्फुटति। एवञ्चोक्तरीतिभ्याम् परिच्छेत्तृवाचकमातृशब्दघटिते "द्वैमात्रः" इत्यादौ—उत्वं माभूदिति तन्निर्देश इत्याशयस्तदुक्तेः प्रतिभाति।

अत्र चार्थे जिज्ञासितुर्विचिकित्सायामुदञ्चन्त्यां पुनरहम्प्रभवामि स्फुटीकर्त्तुम् बालमनोरमाकारकृतोहाभासस्तु हासमात्रफलक एवेत्यहमपि सम्मन्यमानोऽस्मीत्यलं भूम्ना।

श्रीभूपनारायणझाशर्मा।

(व्याकरणाचार्यः साहित्यरत्नम्)

हाजीपुरसंस्कृतविद्यालयप्रधानाध्यापकः

× × × ×

"स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः तेन धान्यमातुर्न" इति कथं संघटते इत्यप्राक्षीत्। वस्तुतः कौमुद्यां 'मातुरुत्संख्या" इति सूत्रस्य प्रत्युदाहरणं संमिमीते, इति व्युत्पत्तिनिष्पन्नस्य "संमातृ" शब्दस्य अपत्यमित्यर्थे माभूत् किन्त्वणेव, कुतः सूत्रे "अभिव्यक्तपदार्था ये" इति न्यायेन जननीवाचकस्यैव मातृशब्दस्य ग्रहणात्, सूत्रे च मातृशब्दस्य शब्दपरत्वेऽपि, अर्थगतं स्त्रीत्वं तत्रारोप्य, तस्यापि, स्त्रीवाचकत्वं, तथासति विशेषणस्य, विशेष्यलिङ्गेन व्यवहारात्,

संख्यासंभद्रपूर्वायाः इति स्त्रीलिङ्गेन निर्देश उचितः इत्येव "स्त्रीलिङ्ग निर्देशोऽर्थापेक्षः" इत्यस्य तात्पर्यम्।

एवञ्च सति, "तेन धान्यमातुर्न" इति न प्रत्युदाहरणं, संख्यादिपूर्वकत्वाभावात् किन्तु संमिमीते इत्यत्र किं संमिमीते इत्येवं समर्थापेक्षायां धान्यस्यैव, वक्तव्यतया धान्यपरिच्छेतृरूपार्थस्य मातृशब्दस्य संख्यादिपूर्वत्वे न सूत्रप्रवृत्तिरिति तात्पर्यम्।

मूलग्रन्थो लापनीयश्चेदित्थं सूत्रे प्रसिद्धस्य जननीवाचकस्य मातृशब्दस्य न्यायेन ग्रहणे सिद्धे, धान्यमानकर्तरि प्रयुक्तस्य मातृशब्दस्य तेन ग्रहणं न अप्रसिद्धत्वात्। एवञ्च "तेन धान्यमातुर्न" इति वाक्ये नञः सम्बन्धः सूत्रघटकमातृपदे न, अप्रसिद्धस्य धान्यमातरि प्रयुक्तस्य मातृशब्दस्य ग्रहणं नेति ग्रहणक्रियायाम्, न तु तस्मात्प्रत्ययो नेत्यर्थः। अनेन बालमनोरमा प्रत्युक्ता शेखरकृताऽपि, "स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः तेन धान्यमातुर्न" इति पङ्क्तिश्चिन्तिता न हि धान्यस्य माता इत्यर्थकमातृशब्दाग्रहणाय स्त्रीलिङ्गनिर्देशः, तत्तु "अभिव्यक्तपदार्थाये" इत्यनेनैव सिद्धम्। इदञ्चावश्यकम्, अन्यथा या स्त्री स्वयं धान्यं मिमीते, तदर्थकमातृशब्दस्य स्त्रीवाचकत्वात् तस्य च संख्यादिपूर्वकत्वे अपत्यार्थयोगे च केन, "उद्" आदेशो वार्येत, अतो न्यायः शरणं सर्वस्यापि।

उक्तसूत्रभाष्यमपि तथैव, "किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते, न संख्यासंभद्रपूर्वस्येत्येवमुच्यते। स्त्रीलिङ्गे यो मातृशब्दस्तस्माद्यथा स्यात्। इह माभूत्। संमिमीते संमाता संमातुरपत्यम् सांमात्र इति।

अत्र कैयटः। अर्थधर्मं स्त्रीत्वं शब्दे समारोप्य क्रियाशब्दनिवृत्त्यर्थः स्त्रीलिङ्गनिर्देशः कृतः। न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः। सम्बन्धिशब्दस्य प्रसिद्धतरत्वात् तस्यैव ग्रहणस्य सिद्धत्वात्। न्यायस्वरूपम्-अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥ इतिहृर्युक्तिः।

शास्त्रिहीरालालपञ्चोली,

खडायतासंस्कृतपाठशाला नडिआद्।

× × × ×

अयि गृहीतसाधुपक्षाः! पराभूतविपक्षाः! शास्त्रदक्षा विद्वांसः! विदन्तु नाम यत् आश्विनपूर्णिमाङ्के "मातुरुत्संख्यासंभद्रपूर्वायाः" इत्यत्र किमपि लिखितमासीत्, विश्वनाथजोशिमहोदयेन, तत्रेदन्निवेद्यते यत् श्रीदीक्षितमहोदयस्यात्र (स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः) अयमभिप्रायोऽस्ति यत् जननीवाचकस्यैव मातृशब्दस्य संख्यादिपूर्वस्याणादिकार्यम् नान्यस्य "तेन धान्यमातुर्न" अर्थात्परिच्छेतृवाचिमातृशब्दं परतः कृत्वा संख्यादिपूर्वयोजनेन "द्वैमातुर इत्यादौ नाणादिकार्यमितिभावः, नहि द्वैमातुरः भाद्रमातुर इत्यादाविव धान्यपूर्वत्वं विवक्षितमस्ति दीक्षितमहोदयस्य। एतदेव श्रीवासुदेवदीक्षितेन बालमनोरमायां स्पष्टीकृतम् "ननु धान्यं यो मिमीते तस्यापि मातुर्ग्रहणं कुतोन तथाच तत्रापि द्वैमातुरादिकं प्राप्नोति इत्यत आहस्त्री० इति। विश्वनाथजोशिमहोदयेन "श्रीवासुदेवदीक्षितेन विवेचितम् धान्यमातुरपत्यं धान्यमातुरः स्यादत

आह स्त्रीलिङ्गनिर्देश इति" अलेखि, तत्तु टीकावलोकने गजनिमीलिकैवाश्रिता इति स्वयं शोधयन्तु सुधियः अलम्प्रपञ्चेन ।

श्रीहजारीलालशास्त्री,
प्रधानाध्यापकः, संस्कृतविद्यालयस्य,
( नवलगढ़, जयपुर )

× × × × ×

"मातुरुत्सङ्ख्या" इत्येतच्छास्त्रस्थस्त्रीलिङ्गनिर्देशप्रत्यायितजनन्यर्थकमातृशब्दस्यैवग्रहणात् धान्यमातुरित्येतदानुपूर्वीविशिष्टमेव प्रत्युदाहरण मित्येतद्वैयाकरणंमन्यपर्य्यालोचनविरुद्धम् । किन्तु परिच्छेतृत्वावच्छिन्नार्थक संमातृशब्दादपत्ये-सांमातुर इति दुष्टप्रयोगनिवृत्तितात्पर्य्यकमेव तत्प्रत्युदाहरणम् इति प्रतिभाति । नैतावताभगवद्भट्टोजिदीक्षितपङ्क्तौ कटाक्षयितव्यम् परिच्छेतृत्वं नाम-नहि किल क्रियावत्वमन्तरा सम्भवेत्, क्रिया चैषा परिच्छेदानुकूलव्यापाररूपा नहि वाचकनिष्ठं सकर्मकत्वं विजहाति । एवञ्च यत्किञ्चिदपेक्षायाम् उपलक्षणविधया क्रियाजनककारकत्वेनाक्षिप्तः क्रियाजन्यफलाश्रयतया—धान्यशब्दः पङ्क्तौ प्रवेशितः । तात्पर्य्यन्तु भगवतां दीक्षितानां महाभाष्यानुयायिनां परिच्छेत्रर्थकसंमात्रादिरूपप्रत्युदाहरणगर्भितमेव ।

एतच्छास्त्रीयभाष्ये सूक्ष्मेक्षिकया स्वचक्षुषी निःक्षिपन्तो भवन्तः कपोलकल्पितत्वमस्माकमुपरितनव्याख्याने-इति भ्रान्तिं दूरयन्तुतरां वैदुष्यभूषिताः ।

तथाहि—भाष्यम् ।

"किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते ? न संख्यासंभद्रपूर्वस्येत्येवमुच्यते स्त्रीलिङ्गे यो मातृशब्दस्तस्माद्यथा स्यात् । इह माभूत् संमिमीते-इति संमाता तस्य अपत्यं सांमात्र इति ।

श्रीजयमङ्गलपाण्डेयो व्याकरणाचार्यः
(रामनिरञ्जनदासमुरारकीयविद्यालयः, पटना)

× × × × ×

आश्विनस्य पूर्णिमाङ्के सूर्य्योदयपत्रे विश्वनाथशर्म्मणा लक्ष्मणदुर्गस्थेन सूचितम्—यत् सिद्धान्तकौमुद्यास्तद्धितप्रकरणेऽपत्याधिकारे "मातुरुत्संख्यासंभद्रपूर्वायाः" इति सूत्रव्याख्यायां 'स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः' तेन धान्यमातुर्नेति दीक्षितेनोक्तं न संगच्छते । मातृशब्दस्य संख्यादिपूर्वकत्वाभावेन तत्र सूत्रस्याप्रवृत्तेः ।

तत्र दीक्षितस्याभिप्रायस्त्वित्थं प्रतिभाति—जननीवाचकस्यैव मातृश-

ब्दस्य संख्यादिपूर्वकत्वे उदादेशोऽणप्रत्ययश्चस्यान्न परिच्छेतृवाचकस्येत्य-भिप्रायमवगमयितुं श्रीमद्भिः सूत्रकारैरर्थापेक्षः स्त्रीलिङ्गनिर्देशोऽकारि । तदु-क्तम्—स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति । तेन धान्यमातुर्नेति च । धान्यस्य मातुः परिमातुः अर्थात्परिच्छेतुर्मातृशब्दस्य न तस्य पुंस्त्वात्, इति हि तस्यार्थः । तत्र न तावत् धान्यपूर्वके मातृशब्दे प्राप्तिरस्ति । तन्निवारणाय अर्थापेक्षः स्त्रीलिङ्गनिर्देश इति ग्रन्थकर्त्तुराशयः । परमेतावानेवाभिप्रायः संख्यादि-पूर्वस्य जननीवाचकस्यैव मातृशब्दस्योदादेशोऽणप्रत्ययश्च भवेन्न परिच्छेतृ-वाचकस्य संख्यादि पूर्वकस्यापीति ।

तत्त्वबोधिनीकारोऽपि न मौनमालम्बितवान्—अपि तु—अभिव्यक्तपदा-र्थाः" इत्यादि निर्दिशन्नभिव्यक्तस्य जननीवाचकस्यैवात्र मातृशब्दस्य ग्रहणं न परिच्छेतृवाचकस्य मातृशब्दस्येति पूर्वोक्ताभिप्रायमेव प्रकटितवान् ।

इत्थञ्च परिच्छेतृवाचकमातृशब्दस्य यत्र षण्णां मातृणामपत्यमि-त्यादौ प्रयोगस्तत्रेदं न प्रवर्त्तत इति सुस्पष्टम् ।

यत्तु बालमनोरमाकारेण श्रीमता वासुदेवदीक्षितेनोक्तम्—"धान्यमातु-रपत्यं धान्यमातुर" इति स्यादत आह "स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष" इति ।

तस्य कोऽभिप्राय इति तु स एव जानातीति शिवम् ।

श्रीविद्यानाथशर्मा मैथिलः
व्याकरणोपाध्यायश्रेणिस्थः
संस्कृतपाठशाला, जयपुरम् ।

× × × × ×

विगताश्विनसूर्य्योदये तद्धितेष्वपत्याधिकारस्थ-मातुरुत्संख्या संभद्र पूर्वायाः इति सूत्रविषये स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः तेन धान्यमातुर्नेति मूलोक्तमसंगतमिति केनचिद्विदुषोक्तमिति । तदुत्तरंतु अर्थगतं स्त्रीत्वं शब्दे आरोप्य पूर्वाया इति निर्देशः मातृशब्दस्य जननीवाचिन एव ग्रहणमभिव्य-क्तपदार्थकत्वात् तेन धान्येति इदं चिन्त्यम् तादृशस्त्रीवारणायाभिव्यक्तेत्यस्या-वश्यकत्वात् लिङ्गविशिष्टपरिभाषया प्राप्तिरित्युक्तं शब्देन्दुशेखरे नागेशेन । भाष्ये तु स्त्रीलिङ्गप्रयोजनं संमिमीतेति संमाता संमातुरपत्यं संमात्र इत्यत्रापि स्यादित्युक्तं महर्षिपतञ्जलिनेत्याह ।

पण्डितराजकुमारोपाध्यायः
( पो० मु० नरही, जि. बलिया )

# चूड़ाकरणनिर्णयः ।

भृग्वतिरिक्तानामपि केषां चित् चौले कर्मणि यथाकुलाचारमनुष्ठीयमानं मुण्डनं धर्मो न वेति विमर्शे धर्म एवेति निर्णयः ।

तथा हि चूड़ाकर्मप्रकरणे यथामङ्गलं केशशेषकरणमिति पारस्करगृह्यसूत्रं व्याचक्षाणः श्रीगदाधर आह । तत्र केशानां शेषकरणं शिखारक्षणं स्थापनं यथा मङ्गलं यस्य कुले यथा प्रसिद्धं तस्य तथैव शिखास्थापनं कार्यम् इति व्याचख्यौ । तेन मङ्गलपदार्थं कुलधर्मानतिक्रमे-एव सर्वेषां केशशेषकरणम् तदतिक्रमे तु केशशेषकरणं मुण्डनं वा वशिष्ठात्रिकश्यपाङ्गिरसवाजसनेयिभिन्नानामित्यभिप्रैति । अत एव तदनुरूपं लौगाक्षिवचनमुदाजहार-तच्च दक्षिणतः कमुजावसिष्ठानामुभयतोऽभिकश्यपानां मुण्डा भृगवः पञ्चचूड़ा अङ्गिरसः वाजसनेयिनामेका मङ्गलार्थं शिखिनोऽन्ये यथाकुलधर्मं वा, इति । अत्र वाक्ये अन्ये पूर्वोक्तवसिष्ठादिभिन्ना मङ्गलार्थमभ्युदयार्थं शिखिनो भवन्ति । अथवा यथाकुलधर्मं यथाकुलाचारं शिखिनोऽशिखिनो वा भवन्तीति योजना—यदि तु पारस्करगृह्यसूत्रे यथामङ्गलमित्यस्य यथाशास्त्रमित्यर्थो गृह्यते तदाऽस्यानुवादत्वप्रसङ्गः । मङ्गलपदेन कुलधर्मग्रहणे तु शास्त्रान्तरप्राप्तकेशशेषकरणोद्देशेन यथामङ्गलमित्ययमंशो विधीयते—इति रम्योऽयं पन्थाः । न च लौगाक्षिवाक्ये मङ्गलार्थं शिखिनोऽन्ये वसिष्ठादिभिन्ना यथाकुलधर्मं वा इत्येकमेव वाक्यं तथा च न भवदुक्तपक्षीयो वाक्यभेदोऽत्रपक्षे विकल्परूपता चास्य वाजसनेयिनामेकेत्येतदन्तवाक्यकदम्बकप्रतिपादितपदार्थापेक्षयोपपद्यते इति वाच्यम् । एकवाक्यताऽनुगृहीतस्यापि भवदुक्तपक्षस्य वाक्यभेददोषग्रस्ततया स्वतो दुर्बलेनापि प्रबलशिष्टाचारानुगृहीतत्वात्प्रबलेन ममपक्षेण वाध्यत्वात् लिङ्गव्यवधानेन श्रुतिकल्पकवाक्यापेक्षया साक्षाच्छ्रुतिकल्पकशिष्टाचारस्य प्रबलत्वात् प्रबलाश्रितस्य दुर्बलस्यापि प्रबलत्वमित्यत्र लौकिको न्याय उक्तो मीमांसा वार्तिककारैः—"अत्यन्त-बलवन्तोऽपि पौरजानपदजनाः दुर्बलैरपि वाध्यन्ते पुरुषै राजसंश्रितैरिति" किञ्च भवदुक्तरीत्यैकवाक्यतया व्याख्याने यथाकुलधर्ममन्ये वसिष्ठादिभिन्ना मङ्गलार्थं शिखिनः भवेयुरित्येतावतैवैतद् वाक्यार्थपरिसमाप्तौ वाशब्दस्यानर्थक्यमस्वारसिकार्थत्वं वा प्रसज्येतेति सुधीभि विभावनीयम् । तस्मात्कुलपरम्पराप्राप्तं सशिखवपनं धर्म एवेति मम सम्मतिः ।

श्रीरघुनाथशर्मा,
धर्मशास्त्र—मीमांसा-साहित्याध्यापकः—
मारवाड़ी संस्कृतकालेज, काशी ।

### प्रसङ्गतः प्रेतादिलोकसन्निवेशप्रकारं ब्रूते—

प्रेतलोकश्च स्थूलात्मकमृत्यु-लोकेन सहैवोत-प्रोतस्तिष्ठति। यतो हि प्रेत-लोकस्य मृत्युलोकेन सह साक्षात् सम्बन्धः। इत्थञ्च भूर्भुवःस्वरिति स-नरक-पितृलोको भुवर्लोकः, इन्द्रपुरीसहितः स्वर्गलोकश्च, यथाक्रमं मृत्युलोकस्यैकस्यां दिशि सन्निविष्टाः। अपरस्याञ्च दिशि सप्तपातालरूपा असुरलोका यथाक्रमं विनिविष्टाः। अपरे च चत्वारोऽप्यूर्ध्वलोका उत्तरोत्तरमुन्नताः सन्तः सूर्य्यलोकस्य सान्निध्यभाजः सन्ति। तत्र चरमौ द्वौ ऊर्ध्वलोकौ उपासना-ज्ञानयोःक्रमेण दिव्यलोकौ कथ्येते। सूर्य्यलोकश्च तयोरन्तिमः सीमेत्युच्यते। सविकल्पस-माधिकोटिमाश्रितस्य विचारसमाधेर्विषयीभूता एवेमे दैवजगत्सम्बन्धिनो विषया विज्ञेयाः।

### षोडशाध्यायगतसर्वविषयविवरणमुखेन सतीधर्ममहिम्नः सर्वमुखीनत्वप्रख्यापनम्।

अस्याध्यायस्य विषयवर्णनपद्धतिः साधारणतया गाथारूपेण सत्वाद् आपा-ततः परकीयभाषानिबद्धैवास्तीति प्रतीयमानाऽपि न तादृशी। यतो हि अत्र पूर्वार्द्धे समाधिभाषाविस्तारः, तथा हि—एकत आश्रमधर्मस्योत्तरोत्तर-मधिकारनिरूपणम् योगक्रियायाश्चरममुद्देश्यम्, धर्म्माणां वैज्ञानिकं स्वरूपम्, धर्मयज्ञेन सह दैवजगत्सम्बन्धिशृंखलाया रक्षणसम्बन्धः, इत्यादिविषयास्तु समाधिभाषानिबद्धा एवोहनीयाः।

अपरतश्च सतीत्वमाहात्म्यम्, सतीत्वव्रतजन्यतपोधर्मस्य पराकाष्ठाधि-गमः, सतीत्वधर्मस्य गूढसिद्धान्तः, दैवे जगति सतीधर्मस्य प्रभावातिशयः, तत्र च तस्य आदरोत्कर्षः, तपोधर्मस्य सृष्टिसामञ्जस्यरक्षणविधिप्रभृतिषु प्रभावा-तिरेकः, सतीधर्म्मेण त्रिलोकीपावनस्य निःस्वार्थभावस्य रक्षणम्, सतीधर्मे च पत्यौ सर्वथा सर्वपरित्यागेनानन्यभावतयैकतत्त्वाधिकारमयस्वात्मसमर्पणभावस्य स्फुटतयैव प्रतीतिः, सतीधर्म्मस्य अत्युन्नतकोटिमाश्रिताया अपि सत्या मातृ-भावाधिगमसम्भावना,इत्यादिधर्मरहस्य-सिद्धान्तास्तु लौकिकभाषयैवोपनिबद्धाः सन्ति। इत्यतश्चैवं गूढमये वर्णनक्रमे विभ्रमवशान्न केनापि पथप्रस्खलनं कार्य्यम्॥ ८८–६०॥

### सप्तदशाध्याये दत्तात्रेयावताररहस्यप्रख्यापनप्रसङ्गतः तदध्यायस्थभाषास्वरूपविवेचनम्।

भगवान् दत्तात्रेयो हि ब्रह्मविष्णुशिवात्मिकायाः त्रिमूर्तेरेवावतारो निग-

द्यते । यथा मनुष्यपिण्डे बहूनां देवानामृषीणाञ्चावताराः समुद्भवन्ति, यथा च 'राम-बुद्धादिस्वरूपेण श्रीमतो भगवतोऽप्यवतारा मनुष्यपिण्डे, वाराह-नृसिंहादिरूपेण च देवपिण्डे यथानियमं यथाधिकारं यथाकार्य्यमाविर्भवन्ति । तेषु च केचन कलाभेदतो दशकलात्मकाः, केऽपि द्वादशकलास्वरूपाः केचित् चतुर्दशकलावन्तः, केऽपि षोडशकला एवोच्यन्ते । यथा—एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति भगवान् कृष्णस्तु षोडशकलासम्पन्नः पूर्णावतारोऽभिधीयते । तथैव भगवान् दत्तात्रेयो हि त्रिमूर्तिशाली भगवदवतारः प्रख्याप्यते । यतो हि तस्मिन् ब्रह्म-विष्णु-महेशानां त्रयाणामपि कला विद्यमानाः सन्तीति पुराणान्तरे गीयते ।

परन्तु दत्तात्रेयलीला-विग्रहस्य भोगयोगोभयसम्पर्कशालित्वात् तत्र विष्णोरंशस्यैव प्राधान्यम् । इत्यतश्च तेनावतारेण सह विष्णोरेवात्र सम्बन्धं समुद्गिरन्ति । तदीय-विग्रहो देवपिण्डसम्बन्धभागिति सम्प्रत्यपि विद्यते एव । रुद्रावतारः श्रीभगवान् हनुमानिवाधुनापि स स्वभक्तेभ्यस्तेनैव शरीरेणात्मानं दर्शयति । अत्रोपरितने वर्णने श्रीभगवतो दत्तात्रेयस्योत्पत्तिप्रकारवर्णनमात्रं परकीयभाषामयमूहनीयम् । दैव्याः सृष्टेस्तु वर्णनं समाधिगम्यभावसम्बन्धिन्या लौकिक्या भाषया सम्बलितमिति विज्ञेयम् । भगवतस्त्रिमूर्त्यात्मकस्य तेजो याहगन्यत्रापि पिण्डेषु यथासमयमाविर्भवति तस्यैव रहस्यमिह लौकिकभाषायामुपनिबद्धमिति समाधेयम् । यथा हि भगवतः श्रीकृष्णस्य लीलायां योगभोगयोरलौकिकत्वमेकीभूतम् तथैवेहापि दत्तात्रेयावतारे योगभोगयोरलौकिकत्वमेकस्मिन्नेवाधारे प्रदर्शितम् । अध्यायेऽस्मिन् सर्वं दैव्याः सृष्टेरेव वर्णनं न तु वैज्याः सृष्टेरिति विभावनीयम् ॥ १–२५ ॥

**अष्टादशाध्याये प्रसङ्गप्राप्ताया भारतीयराजनीतेः स्वरूपनिरूपणमुखेन सर्वाभ्यर्हितत्वोपदर्शनम् राज्य-प्रणालीभेदनिरूपणञ्च—**

सम्प्रति जगति यावन्त्यो राजशासनपद्धतयः सन्ति तासु सर्वास्वपि वेदशास्त्रानुसारिणी प्राक्तनी भारतीयार्य्यशासनपद्धतिरेव सर्वाऽभ्यर्हिताऽग्रगण्येति निःसन्दिग्धम् । अत्र हि विवेकिनो दार्शनिकविज्ञानशालिनो धर्म्मात्मनो नृपतेरुपर्य्युक्त-वाक्यात्प्रत्यक्षत एव प्रमाणोपलब्धिर्दृश्यते ।

यथा हि आकर्षण-विकर्षणशक्तिसमन्वयेनैव सूर्य्यादिग्रहोपग्रहशालिनो ब्रह्माण्डस्य स्थितिर्विद्यते । न क्वापि परस्परं विभिद्यमाना संसक्तमाना वा सा विनश्यति, तथैव प्रजाशक्ति–राजशक्ति-समन्वयेन सर्वतो रमणीया सर्वाङ्गसौन्दर्य्यशालिनी राज्यशासनप्रणाली प्रतिष्ठिता भवतीति विज्ञेयम् ।

रागरहिता धर्मभीरवः कर्तव्यपरायणाः प्रजावत्सला योगयुक्तान्तःकरणाः पक्षपातशून्या यतात्मानो भवन्ति स्मेति तेषामादर्शः क्रियानुपरिनिदिष्टवर्णनप्रस्तावे मार्कण्डेयपुराणीयाष्टादशाध्यायमध्यगते परकीयभाषया समुपलभ्यते ॥१—६॥

### अष्टादशाध्याये जम्भेन्द्रयुद्धप्रसङ्गतः समागतासुरशब्दरहस्य-प्रतिपादनम् ।

यथर्षिदेवतापितृकिन्नरगन्धर्वादयो देवानां बहवो भेदाः सन्ति । तथैव दैत्य-दानवराक्षसादयोऽसुराणामपि विविधा भेदाः सन्ति । राजसिक-तासिक-भेदेनेयम् असुराणां कल्पना वेदितव्या ॥ १५-२१ ॥

### अष्टादशाऽध्याये दैत्यसङ्कृत-स्वपत्नीहरणापरि दत्तात्रेयस्य स्मितकरणरहस्यम्—

पूर्वमेवाभिहितम् यद् भगवतो दत्तात्रेयस्योत्पत्तिर्दैव्याः सृष्टेर्विषयः । तदीया लीला तु समाधिभाषाविषयः । इत्यत एव तस्य भगवतः पूर्णसत्त्वमय्याः शक्तेः पुर आगतवतां राजसतामसशक्तिशालिनामसुराणां बुद्धिर्व्याहता समजनि । यतश्च परस्त्रीहरणदोषदुष्टानां तेषां तपःक्षीणतया विनाश आवश्यक इति हेतोरेव भगवान् दत्तात्रेयस्तत्र स्मितमकरोत् ॥ ४५—४७ ॥

### अष्टादशाध्याये लक्ष्मीशब्दार्थरहस्यम् ।

ब्रह्मशक्त्या महामायाया 'अहं ममेतिवत्' ब्रह्माभिन्नत्वेऽपि यथा विद्याऽविद्यारूपेण भेदद्वयमभिहितम्, तथैव सर्वशक्तिशालिन्यास्तस्या महामायाया अध्यात्माधिदैवाधिभौतिकशक्तिभेदेन महासरस्वती-महाकाली-महालक्ष्मीरूपास्तिस्रो मूर्तयः स्वतन्त्रतया शास्त्रेषु कल्पिताः । पुनश्च सृष्टिस्थितिलयक्रियाविचारतो ब्राह्मी-वैष्णवी-रौद्रीरूपाः त्रिविधाः शक्तिलीला वेदशास्त्रादिषु वर्णिताः समुपलभ्यन्ते । आसां तिसृणामपि प्रत्येकं पुनस्त्रिविधा वैभवसम्पन्ना मूर्तयस्तत्रैव वेदशास्त्रेषु वर्णिताः सन्ति । अस्मिन्नध्याये वर्णिता लक्ष्मी देवी, वैष्णव्याः शक्तेस्तेषु भेदत्रितयेष्वेका विज्ञेया, सा हि आध्यात्मरूपतःस्थितिं कर्तुं भगवतो विष्णोर र्धाङ्गिनी निगद्यते । आधिदैवरूपेण चावताराणां सङ्गिनी गीयते । आधिभूतभावेन च भाग्यशालिनां पुंसां कर्मविपाकानुसारेण शुभफलदा श्रीरुच्यत इति विवेकः ॥ ५५—५८ ॥

### ऊनविंशाध्याये कार्तवीर्य्यार्जुननृपतिचरितवर्णनप्रसङ्गतो राज्याभिषेकशब्दार्थरहस्यम् ।

सनातनधर्म्मानुसारेण राज्ञः शरीरं हि राज्याभिषेकयज्ञेन देवपीठरूपे परिणाम्यते । तदानीं हि आवाहनादिक्रियया विशेषदेवानामुपस्थित्या वृत्तविशेषा-

णाश्च पल्लवैः समुद्रनदीसङ्गमस्थानीयजलादिद्रव्यसाहाय्येन तच्छरीराधिष्ठिताधिदैवदेवानामधिवासः प्रकल्प्यते। एतद्रहस्यं राज्याभिषेकपद्धति-परिशीलेन स्फुटीभवति ॥ २५–२८ ॥

### दत्तात्रेयस्य पूर्णावतारत्व-प्रतिपादनम्—

यथा मृत्युलोके भगवतः श्रीकृष्णस्य पूर्णोऽवतारः निगद्यते। तथैवायं दत्तात्रेयावतारोऽपि देवलोके पूर्णोऽवसेयः। यत्र हि प्रवृत्ति-निवृत्त्योरुभयोरप्यैश्वर्य्यमेकस्मिन्नेवाधारे तिष्ठति। यत्र च कर्मयोगज्ञानयोगयोरेकत्रैव समावेशः। यस्मिंश्च क्रियाशक्तिज्ञानशक्त्योरेकस्मिन्नेवाधारे सन्निवेशः। तथा चाध्यात्मसिद्धिस्वरूपा ज्ञानसिद्धिरधिदैवसिद्धिस्वरूपा च दैवक्रियानिष्पादिका अष्टमहासिद्धयोऽधिभूतसिद्धिरूपाश्च लौकिकैश्वर्य्यसमूहा यत्रावतारे पूर्णतया सन्निविष्टा भवन्ति स पूर्णावतारः कथ्यते। ईदृशी पूर्णता यथा श्रीमति भगवति श्रीकृष्णे विद्यते तथैव तत्र दत्तात्रेयेऽपि वर्तते। भेदस्तु तत्रैतावानेवास्ति यद्भगवतः श्रीकृष्णस्य मानवो विग्रहो भगवतः श्रीदत्तात्रेयस्य तु दैवो विग्रह इति ॥ ३२–४२ ॥

### एकोनविंशतितमाध्यायान्तर्गतमदालसाचरितरहस्यम्—

ऋतुध्वज-मदालसासंवादो हि विविधेषु पुराणेषु विविधरूपेणासाद्यते। तत्र वैचित्र्यमपि बहुशः समुपलभ्यते इत्यतस्तस्य समालोचना पुराणपाठकानां कौतुकोपनोदनैकफला समुचितैवेति तस्याः पवित्रगाथाया अवगतिसौलभ्यार्थं तत्रोद्भूतशङ्कापसारणाय च तद्रहस्यं विव्रियते।

वेद–पुराणादिषु समाधिभाषा-लौकिकभाषा-परकीयभाषाणां पृथक्पृथक् प्रयोग उपलभ्यते। तासां लक्षणान्यपि विभिन्नान्येव सन्तीति पूर्वमेवाभिहितम्। परन्तु क्वचिद्विशेषलक्षणशालिन्यां गाथायामासां तिसृणां सम्मिश्रणमप्युपलभ्यते। यथोदाहरणतः—श्राद्धे पिण्डभक्षणम् तत्फलेन च मदालसादेव्या पुनर्जन्मेति विषयोऽयं लौकिकभाषामय एव। धर्मशास्त्रीया आध्यात्माश्चोपदेशराशयः समाधिभाषामया एवोपनिबद्धाः। अयञ्च ऋतुध्वज-मदालसासंवादात्मको गाथाभागः परकीयभाषामयो नानाकल्पकल्पान्तरेषु विभिन्नतयैव संघटित इति कल्पभेदव्यवस्थया तत्र तत्र पुराणेषु भिन्नभिन्नस्वरूपेणोपनिबद्ध इति।

इदञ्च पूर्वमेवोक्तं यत् पुराणादिषु नामरूपसम्बन्धवतो विषयजातस्य भावत्रयात्मकं विज्ञानमावश्यकम्। इदमपि च पूर्वमेवोपात्तम् यत् समष्टिसृष्टितः सम्बन्धजुषो जीवनचरितप्रभृतिविषयस्य विभिन्नकल्पेषु प्रादुर्भावस्य विद्यमानत्वात् तत्र तत्र कल्पेषु देशकालपात्रानुसारेण भेदप्रतीतेरावश्यकत्वम्।

## मदालसाचरितप्रसङ्गतः शुकदेवचरितरहस्यम्—

यथा च—यद् शुकदेवचरित्रं विष्णुभागवते विद्यते यच्च देवीभागवते विद्यते तयोः पर्य्यवेक्षणेनास्य विज्ञानस्य सत्यताप्रतीतिः सम्भाविनी। शुकदेवाविर्भावस्य सृष्टिनियमानुसारेणैक्येऽपि विभिन्न-कल्पानां देश-काल-पात्र-भेदेन तच्चरित-भेदस्यापि स्वाभाविकत्वम्, तथैवेदं मदालसाचरितमपि नानाकल्पेषु प्रादुर्भवत्तत्तत्कल्पेषु नानात्वमाश्रयति, देशकालपात्रशक्तिभेदतश्चरित-भेदस्यावश्यम्पातात्।

अन्यच्चास्मिंश्चरितेऽलौकिके बहूनां विचित्राणां घटनावलीनामुल्लेखो दृश्यते। यथा—गन्धर्वलोक-पाताललोक-मृत्युलोकानां परस्परं यादृक् सम्बन्धः कथायां वर्णितो लभ्यते न तादृगिदानीं क्वापि भासते। अश्वादिषु च तथा शक्तिप्रभावोऽवलोक्यतेस्म तदानीं यथेदानीं न क्वापि तेषु तादृग्वेगादिप्रभावो दृश्यत इति। एवं मानवपिण्डदेवपिण्डजीवेषु च परस्परं विवाहसम्बन्धः, तेन च मानवसृष्टि-समुत्पत्तिश्च तत्रावलोक्यते, या चेदानीमसम्भवकोटिमारोहति। पाताललोकस्यासुरालोकत्वेऽपि तत्र परोपकारिणां दैवसम्पच्छालिनां जीवानां समुत्पत्तिः, तथाऽसुरदैवप्रजास्वपि मनुष्यवत्तपस्यादिसमनुष्ठानप्रवृत्तिः, इत्यादि वर्णनमुपदिदृक्षुषां साधारणबुद्धिशालिनां पुराणपाठकानां हृदि पुराणानामसङ्गतिः प्रतीयते। परन्तु नहि तत्र काप्यसङ्गतिः। किन्तु आध्यात्मिकज्ञानाभाव एव तेषामसङ्गतत्वे हेतुः। यथा हि—लौकिकेतिहास-पाठकानामियं स्फुटमेव प्रतीतिरस्ति यत् सहस्रद्वयवर्षाभ्यन्तरमेव जीवसृष्टिषु, मानवसृष्टिषु, आधिभौतिकसृष्टिषु च कीदृग् वृहदान्तर्य्यं सञ्जायते इति। यथा सप्तसुण्डवन्त स्त्रिसुण्डधारिणो वा हस्तिनः पूर्वतने काले भवन्ति स्म। ये च वर्तमानहस्तिनामपेक्षया बले काये च बहुगुणिता महान्त आसन्निति। एवम्भूता महान्तः पक्षिणो भवन्तिस्म ये च व्याघ्रानपि स्वचञ्चुभि र्गृहीत्वोड्डीयन्ते स्म। एवम्भूता अद्भुता महान्तो जीवाः पूर्वमासन् येषामवशिष्टानि कङ्कालान्यधुनापि यत्र कुत्रचन भूगर्तेषूपलभ्यन्ते। इदानीं तादृशास्तु दूरे तिष्ठन्तु तत्कल्पा अपि पक्षिणो हस्तिनो वा नोपश्रूयन्ते। अधुना तु ह्रस्वकाया अल्पायुषोऽल्पप्राणाः प्राणिनः सर्व एव जायन्ते।

इत्थं हि प्राचीने काले भारतवर्षेऽत्र मृत्तिकावत्सुवर्णस्योपलब्धिर्भवति स्म यच्च पुरुषाः खनित्वा राशिं कुर्वन्ति स्म। एतद्वर्णनञ्च ग्रीसदेशीयेतिहासपुस्तकेषु समुपलभ्यते। सा हि भारतीयभूमिगा शक्तिरिदानीं नष्टप्राया दृश्यते। मानवानामपि यत्र कुत्रचन भूमिगर्तेषु कङ्कालानीदृशान्यासाद्यन्ते, यानि च पुराणादिषु वर्णितसत्ययुगीनमानवाकारसाम्यं बिभ्रति।

कियतैव कालेनेदृशी सृष्टिदशा विपरिवर्तमाना दृश्यते । तर्हि कल्पकल्पान्तरान्तर्य्यमासाद्यालौकिकानां परिवर्तनानामद्भुतानां विलक्षणभेदानाञ्चोद्भवत्वे कः सन्देहः ।

मानवानां विंशतिसहस्रोत्तर-त्रयश्चत्वारिंशल्लक्षात्मकवर्षैः सत्यादि-युग-चतुष्टयस्यैका चतुष्टयी भवति । ईदृशीनामेव एकसप्तति-युगचतुष्टयीनां ( महायुगानामिति यावत् ) मन्वन्तरं भवति । मन्वन्तरन्नाम यत्र कालप्रमापको देवो मनुः परिवर्तनमासादयति । ( तस्य स्थानेऽन्यो मनुस्तदीयं पदमध्यारोहतीति यावत् । ) ईदृशानां चतुर्दशमन्वन्तराणाम् एकः कल्पः कथ्यते । ईदृशे कल्पव्यतिकरे, प्रतिकल्पं नवीनसृष्टौ जायमानायां विविधाऽलौकिकविचित्रतोदेतीति नात्र सन्देहलेशोऽवसेयः ।

अत्र च कस्मिंश्चित्कल्पविशेषे सृष्टिशक्तिस्तत्रोत्पन्नजीवशक्तिश्चालौकिकी नवीनभावशालिनी पूर्वविलक्षणैव जायते, इत्थञ्च कस्मिंश्चन कल्पे पाताललोकसुरलोकमानवलोकानां परस्परं सम्बन्धोऽपि भवितुमर्हत्येवेति नात्र सन्देहलेशः ।

इदानीमपि क्वचन प्रेतयोनिभिर्मनुष्ययोनीनां सम्बन्धः सम्भाव्यमानः प्रमाणगोचरमायात्येव । इत्थम्भूतमैथुनक्रियया सृष्टिचक्रन्न समेधत इति । देवयोनिषु असुरयोनिषु च दैव्याः सिद्धेः सत्त्वेन तद्द्वारा सृष्टिचक्रस्य प्रवर्द्धमानतायां वर्तमानोदाहरणादितो नासम्भवो विभाति । प्रत्युत पाण्डवादीनां सृष्टिरीदृशीनामेव दैवशक्तीनां फलमिति सुगमतयैवोहनीयम् । कल्पान्तरीय-दैवशक्त्याविर्भाव इव कल्पान्तरीय-हस्त्यश्वगोपशुप्रभृतिषु अलौकिक-दैवशक्तिविकाशस्य नासम्भवत्वम् ।

नागलोक-प्रभृतयः पाताललोकान्तर्गताः सन्ति । गन्धर्वलोकश्च सप्तस्वर्गेषु भुवर्लोकान्तर्भूतो विज्ञेयः । यद्यपि सप्तसु पाताललोकेषु असुराणान्निवासः सप्तसु स्वर्लोकेषु च देवानामिति देवासुरयोर्निवासभेदो विद्यते, तथापि द्वाविमौ देवासुरौ दैव्याः सृष्टेरेवान्तर्गतौ स्त इति असुरा अपि देवयोनिविशेषा एव सन्ति । यतो हि—उभयोरपि पिण्डं देवपिण्डमित्येवोच्यते ।

एवं सत्यपि मनुष्यपिण्डेषु दैवासुरराक्षसात्मिका स्त्रिविधाः सृष्टयो दृष्टिगोचरी भवन्तीति पूर्वप्रस्तावे यथोक्तं तथैवासुरदेवेष्वपि त्रिविधाः सृष्टयो भवन्ति । भेदस्तु तत्रैतावानेव विद्यते यद् आसुरलोकेषु आसुरसृष्टेराधिक्यम् दैवलोके च दैवप्रकृत्यात्मकानि पिण्डानि बाहुल्येन भवन्ति । तथा मृत्युलोके त्रिविधपिण्डोपलब्धावपि तत्तत्कालीनसमष्टिकर्मानुसारेण कदाचिद् दैव्याः कदाचनासुर्य्याः कस्मिंश्चन काले राक्षस्याश्च प्रजाया आधिक्यं जायते ।

अतश्चासुरलोकेषु दैवसम्पद्विशिष्टानां जीवानां सम्भवे नानुपपत्तिः। तपोधर्मश्च जीवेषु अलौकिकीं शक्तिं सञ्चारयति । तपोधर्मैश्च साधकोऽसम्भवमपि सम्भवं सम्पादयितुमर्हति। स्वर्ग-पाताल-मृत्युलोकेषु च याऽलौकिकी-शक्तिरैश्वर्य्यञ्चासाद्यते तच्च सर्वं तपसैव संसाध्यते। अतश्च देवेष्वसुरेषु च तपःप्रवृत्तिप्रसक्ति र्नास्वाभाविकी। तत्तपोऽनुष्ठानाय चास्याः कर्मभूमेर्मर्त्यलोकस्य योग्यतया देवा असुरा अपि स्वतपःसंसिद्ध्यै इमामेव कर्मभूमिमाश्रयन्ति। तपोमहिमा च शास्त्रेषु भूरिशस्तुतो विद्यते ।—

यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम्,
सर्वं तु तपसा साध्यं तपो हि दुरतिक्रमम्। ( मनु० अ० ११ श्लो० )

## एक-पञ्चाशत्तमपद्यात् षट्पञ्चाशत्तमपद्यावधि वर्णित-
## सङ्गीत-विज्ञान-रहस्यम् ।

एतद्धि सङ्गीतविज्ञान-रहस्यं विज्ञेयम्, यद् ये हि निषादर्षभगान्धार-षड्जमध्यमधैवतभेदेन सप्तसङ्गीतस्वराः समष्टिरूपोङ्कारतो व्यष्टिस्वरूपेण विनिर्गताः सन्ति। एषामेव तीव्र-मन्द कोमलमध्यादिभेदा भवन्ति। ग्रामशब्दा हि श्रेणिवाचकोऽप्यस्ति रागरागिणीनां जातेः श्रेण्या वा मेल इत्यभिधानं विद्यते। अस्यैव मेलस्य सप्त भेदाः सप्त ग्रामरागा उच्यन्ते। सप्तगीतात्मिकाया देशीयविद्याया अनुसारेण प्रतिभेदात्मको रागरागिणीनामुत्पादको मेल इत्यभिधीयते।

यथा हि धर्म्माङ्गानां सप्तति भेदा अभिधीयन्ते तथैव रागरागिणीनामपि सप्तति-मेलात्मका भेदाः सन्ति। येषाञ्च भिन्नानि नामानि सन्ति। सप्तस्वरानुसारेण प्रतिमेलं भिन्ना ग्रामा भवन्ति। इत्यत एवेह सप्त ग्रामरागा उच्यन्ते। इमे हि सप्तविधानां गान-पद्धतीनां सप्त भेदाः सन्ति। इमे सप्तापि भेदा मार्ग्यां विद्यायां तथा देशीयविद्यायां प्रधानतो विद्यन्ते। लौकिक्यामपि विद्यायामेषां छाया समुपलभ्यते।

यत्र हि स्वराणां स्थैर्यं भवति तत्रैव मूर्छनायाः प्रादुर्भावः। मूर्छना एव हृदयान्यासञ्जयन्ति। यद्यपि तासामेकविंशति भेदा विद्यन्ते तथापि प्राधान्येन सप्तैव गृह्यन्ते। रागरागिणीनां निर्माणे यदाकर्षणं भवति। तदेव 'तान' शब्देनोच्यते। तस्य तानस्य सत्स्वपि बहुषु भेदेषु ऊनपञ्चाशदेव 'कूटतान' शब्दवाच्याः प्रधानतो भेदाः शास्त्रेषु गीयन्ते। एभिरेव वस्त्रालङ्कारस्वरूपै रागा विभूष्यन्ते। उदार-मुदार-तारशब्दतस्त्रयः सङ्गीतग्रामाः सन्ति। चतुर्भिश्च पदैः गीत-

विस्तारस्य पूर्णता भवति। यथा हि ध्रुवपदेऽस्थाय्यन्तरासञ्चार्य्याभोगा मन्यन्ते इति।

यद्यपि देशीयविद्यायां शतशस्तालानि वाद्यन्ते किन्तु मार्ग्यां विद्यायां त्रीण्येव प्रधानतस्तालानि सन्ति। तालं नियमबद्धं विधातुं यद्धि सूक्ष्म-विज्ञानं विद्यते तदेव लयशब्दवाच्यं भवति। तस्यापि द्रुतमध्यविलम्बितभेदेन त्रयो भेदा उच्यन्ते। यतिर्हि विरामस्य नाम। अस्या अपि प्रधानतः त्रयः प्रकाराः, तत्र प्रथमा स्वरयतिर्यत्र मूर्च्छना प्रादुर्भवति, द्वितीया लययतिर्यत्र लयस्य ह्रासो वृद्धिर्वा क्रियते, याभ्याञ्च ह्रासवृद्धिभ्यां लयस्य शुद्धिश्च सम्पाद्यते। तृतीया च रागयतिः यत्र रागविरामं कृत्वा सङ्गीतरूपान्तर मारभ्यते।

तोद्यापरपर्य्यायं वाद्ययन्त्रमपि चतुर्धा भवति। प्रथमं—मिजरावनामकानि-अङ्गुलिवाद्यानि यन्त्राणि द्वितीयं—दण्डताड्यानि सारङ्गीत्यादीनि यन्त्राणि। तृतीयं—फूत्कारवाद्ययन्त्राणि। चतुर्थम्—आघातजन्यशब्दविशिष्टान्याघातेनैव वाद्यन्ते। उदाहरणञ्च क्रमशो वीणा, सारङ्गी, वंशी मृदङ्गमिति ज्ञेयम्।

स्वरायत्तो नादोऽस्ति स्वरमयी सृष्टिरपि तदधीनैव। इदं स्वरात्मकं हि ब्रह्मणः स्वरूपम्। व्यञ्जनतो हि वेदानां शास्त्रादीनाञ्चोत्पत्तिः, यद्धि मन्त्रस्वरूप-मुच्यते। इदमेव वाच्यवाचकयोरभेदतत्त्वमभिधीयते ॥ ५२-५६ ॥

**त्रयोविंशतितमेऽध्याये समुपनिबद्धगाथारहस्यम्—**

तत्र गाथायां मुख्यतः पर्य्यालोचनीया इमे विषया विज्ञेयाः। तथा हि—मातापित्रोरादर्शः प्रेममयस्य पत्युः सत्याश्च पत्न्या आदर्शः। दैवसम्पत्सम्पन्नानां मानवानां स्वाभाविकपरोपकारव्रतादर्श इत्यादयः। ईदृशानामादर्शजीवनानां प्रतिकल्पमाविर्भावः प्रकृतेः पूर्णता-परिचायक इत्यसन्दिग्धम्।

अन्यच्चात्र गाथायां श्रीसरस्वत्या देव्या जगद्धात्रीस्वरूपायाः स्वरूप-विज्ञानं विमर्शनीयं विद्यते। जगन्मातु र्ब्रह्मशक्तेः स्वरूप-विज्ञानञ्च यद्यपि पुराणेऽस्मिन्नग्रेऽन्यत्रापि विस्तृतं वर्णितं समुपलप्स्यते। तत्र च तदीय-विज्ञान-रहस्यमप्यस्माभिर्यथासमयं विवेचयिष्यत एव। तथापीहाध्यायेऽवश्यमिदं वक्तव्यं विद्यते, यद् अत्र जगन्मातुरध्यात्मभावसम्वलितं श्रीसरस्वत्या देव्याः स्तोत्रमुपनिबद्धम्। यतो हि महालक्ष्मी–महाकाली–महासरस्वतीरूपतः प्रतिपादितस्य भावत्रयस्य मध्ये महासरस्वतीभावस्यैव द्योतिकेयं स्तुतिः प्रतीयते।

अन्यच्चेहाध्याये संक्षिप्तं संगीतशास्त्ररहस्यं मार्गीरूप-सङ्गीत-विद्यया-सम्बध्नाति-न तु देशीय-लौकिकसङ्गीतक्रियाभ्यामिति विभावनीयम्। अपर-

अत्रनागराजफणातो मदालसाया लौकिक्या भाषयोपनिबद्धं समुत्पत्तिवर्णनं यद्विद्यते तस्येदं रहस्यमूह्यम् । यद् देवलोकासुरलोकेषु न मृत्युलोकवन्मातृगर्भतो जीवानां समुत्पत्ति र्भवति । तत्र त्वकस्मादेव पूर्णावयवा सृष्टिः स्वभावत एव सम्पद्यते ॥ १११, ११५ ॥

## चतुर्विंशतितमेऽध्याये समागतनागराजचरितरहस्यम्—

नागलोको हि सप्तानां पाताललोकानामेवान्तर्गतो गीयते । पाताललोक वासिनोऽपि देवयोनिगा एव जीवाः कथ्यन्ते । यद्यपि सप्तस्वपि पाताल-लोकेषु असुराणामेव वसतिर्विद्यते, तथापि असुराणाम् देवयोनिविशेषत्वेन सृष्टेश्च भावत्रयात्मकतया असुरलोकेष्वपि तेषु दैव–सम्पच्छालिनां जीवानां स्थितौ न काप्यनुपपत्तिः । यतो हि नागराजस्य तत्पुत्राणाञ्च प्रकृतिर्दैवदुर्लभै-वासीदिति सुनिश्चितमेव । अस्या घटनायाः प्रादुर्भाव-कल्पेऽसुरदेवमृत्युलोकेषु वर्तमानकल्पापेक्षया परस्परं महान् घनिष्ठः सम्बन्ध आसीदित्यपि निर्विवाद-सिद्धम् ।

## मदालसाचरित–रहस्योपवर्णनमुखेनात्मज्ञानिनामवस्थानिदर्शनम् ।

अस्मिन्नध्याये महाराज्ञ्या मदालसाया अद्भुतं विस्मयकरं जीवनचरित-मुपनिबद्धं दृश्यते । तथा हि—विषयभोगरताया महाराज्ञ्या अपि सत्याः तस्या इत्थं स्वपुत्राय वैराग्यशिक्षादानं कथं सम्भवति? कथञ्च पत्युरुत्तरदाना-वसरे अद्वैतात्मभावस्य व्याख्यानं स्त्रिया सत्यापि तया विहितमित्यादिवर्त-मानयुगीयजनसम्भाव्यमानशङ्कासमुत्तरणधियैव मूले महर्षिणा वेदव्यासेन "पुण्यक्षयाकाङ्क्षिणी" इत्यादि तस्या विशेषणं दत्तम् ।

यतो हि आत्मज्ञानिनः स्वरूपस्थितस्य पुंसो नार्य्या वा जीवन्मुक्तदशायाः चतस्रः खलु अवस्था भवन्ति । तत्र प्रथमाऽवस्था तावत् ब्रह्मणस्तच्छक्ति-रूपाया मूलप्रकृतेर्नामान्तरतो मायाया वा उभयोरेव सत्तायाः पार्थक्येन दर्शनं, प्रकृतेश्च लीलाविलासे स्वासक्तिं विहाय एवं स्वस्वरूपोपलब्धि-धृतेः पौनःपुन्येनासादनम् इति ।

उदाहरणतो यथा—श्येनो नाम शकुन्तो रश्मिनिबद्धो लक्ष्योपरि धावितो लक्ष्यं निपात्य पुनः स्व-पोषकस्य व्याधस्य करतलाश्रितो भवति नान्यत्र कुह चनोड्डीय पलायते; तथैव प्राथमिको जीवन्मुक्तो नरो विदधदपि सांसारिकं कृत्यं न विस्मरति स्वस्वरूपोपलब्धिम् ।

द्वितीया च जीवन्मुक्तावस्थेयमुच्यते यत् कर्मविपाकानुकूलं प्रारब्ध-

कर्मणो विषयभोगेन विलयं कुर्वाणः स्वस्वरूपसंलग्नताया न विच्युतो भवतीति । यतस्तस्यामवस्थायां न विषयजुगुप्सा भवति, नापि स्वस्वरूपच्युतेरेवावसर आसाद्यते । अनयोरुभयोरप्यवस्थयोः प्रारब्धकर्मवेगवशात्कर्मविपाकः परिपच्यमानो भवति । यतश्च जीवन्मुक्तः पुमान् नारी वा भवेत् वा मृत्युलोकस्थो वा स्याद् देवलोकजो वा भवेत्, तत्र कर्मविपाकतीव्रतया विविधोपभोगसम्बन्धभाक् तिष्ठत्येव । किन्तु स्वकर्म-विपाकात्मकोपभोगः पूर्वार्जितपुण्योपक्षयार्थमेव भवतीति नाणुरपि सन्देहो विधेयः । यतो हि मानवपिण्डे वा देवपिण्डे वा विना प्रारब्धपूर्णोपभोगं नैव मुक्तिरुदेतीति ।

"प्रारब्धकर्मणां भोगादेवक्षयः" ।

तृतीया सा जीवन्मुक्तावस्था कथ्यते यत्र स्वयमेव कर्मविपाको भोगेन क्षीणतनु भूत्वा सत्स्वपि, सन्निहितविषयेषु विरागमेव जनयति नोपरागम् । इत्थञ्चेमां दशामाश्रिता महात्मानो नरा नार्य्यो वा विषयसान्निध्यभाजोऽपि विषयाणामाधिभौतिकावस्थया न विमुग्धा भवन्ति । किन्तु तेषामाध्यात्मिकस्वरूपे समुन्मज्जमानास्ते ब्रह्मानन्दमनुभवन्तीति प्रशस्तामिमां दशां समश्नुवानाः साधका रागात्मिकां भक्तिसरणिं परित्यज्य परां भक्तिमधिकुर्वते ।

चतुर्थी सा जीवन्मुक्तावस्था विज्ञेया यत्रात्मज्ञानसम्पन्नो जीवः सर्वास्वप्यवस्थासु सर्वदैव देशकालपात्रोपस्थितौ सत्यामपि सर्वथाऽद्वैततत्त्वचिन्तनपरोऽद्वैतभावनिमग्नो न किञ्चिदपि विगुणं चेष्टते । यस्य कृते ।

"नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता"

इत्यादि श्रीगीतोपनिषदि समुदीरितम् ।

महाराज्ञी मदालसा हि देवकन्यास्वरूपे कर्मविपाकवशादवतीर्णः कश्चिदारूढपतितो जीव आसीदिति तु निर्विवादसिद्धम् । यतो हि सा स्वर्गे प्रथमजन्मनि देवकन्यावस्थायां जीवन्मुक्तदशायाः प्राथमिकसन्धिमुपेताऽसीत् । ततश्च कर्मविपाकेनैव नागलोके द्वितीयं जन्मासादयन्ती जीवन्मुक्तावस्थायाः स्वत एव द्वितीयं सन्धिमधिगतवतीति । एवञ्च स्त्रीशरीरेऽपि सा क्रमशस्तृतीयां चतुर्थीञ्च जीवन्मुक्तावस्थामाददाना ब्रह्मपदमाश्रित्य नन्दन्ती कृतकृत्या बभूवेति ॥ १—१८ ॥

## षड्विंशतितमेऽध्याये मदालसाया आदर्शगृहिणीत्वोक्त्या नारीधर्ममर्मप्रख्यापनम् ।

जगति यत् किञ्चिदपि दृश्य-प्रपञ्चजातमुपलभ्यते तद्धि सर्वं प्रकृतिदेव्या

एव विलसितम् । पुरुषस्तु निर्लिप्त उदासीन एव गीयते । इति स्वाभाविक-नियमानुसारेणैव गृहिण्याः सर्वाङ्गपूर्णतामेव सांसारिकाऽभ्युदयानन्दसमुदयोऽवलम्बते । बहुशः संस्तुतोऽयमर्थः शास्त्रकारैः—तथा हि—

"भार्य्यात्रिवर्गकरणं शुभशीलयुक्ता"

"अर्धं भार्य्या मनुषस्य, भार्य्या श्रेष्ठतमः सखा
भार्य्यामूलं त्रिवर्गस्य, भार्य्या मूलं तरिष्यतः" ।

सर्वमपीदमादर्शगृहिणीस्वरूपं महाराज्ञ्या मदालसाया जीवन-चरिते सर्वाङ्गपूर्णं समुपलभ्यते । अत्र हि देव्या मदालसाया आदर्शजीवने स्त्रीभावस्य पूर्णता, सतीधर्मस्य सम्पूर्णो विकाश; प्रवृत्तिनिवृत्यात्मकयोरुभयो-रप्याश्रमधर्मयोः समुचिता समृद्धिः, गृहिणीधर्मस्य मातृधर्मस्य च चरमसीमो-पस्थानम्, ज्ञानस्य च परकाष्ठाश्रयणं समुपलभ्यते । अतश्च सर्वासामप्यार्य्य-महिलानामनुकरणीयोऽयमलौकिको मदालसाजीवनादर्शः ॥ १—३६ ॥

## सप्तविंशतितमेऽध्याये—राज्ञः कर्तव्यनिदर्शनप्रसङ्गेन षष्ठपद्यस्थ-सप्तव्यसनवर्णनम् ।

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे ।
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत् त्रिकं सदा ।
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद् व्यसनमात्मवान् ॥

## तत्रैव सप्तमपद्यस्थाष्टविधमन्त्रि-रहस्यम् ।

प्राचीने कालेऽष्टौ राजमन्त्रिणो भवन्ति स्म । तेषाञ्चाधस्तना इमे भेदा विज्ञेयाः । १ क्रुद्धः, २ अक्रुद्धः ३ लुब्धः ४ अलुब्धः, ५ भीतः, ६ अभीतः, ७ अपमानितः, ८ अतिमानितः, इति, एभ्यश्च सर्वेभ्योऽपि मन्त्रिभ्यो राज्ञाऽप्रमत्तेन सदा सतर्केणैव भाव्यमिति कौटिल्यस्यार्थशास्त्रे समुपदेशः ।

## तत्रैवाध्याये दशमपद्यगतषड्गुणकीर्तनम् ।

सन्धिश्च विग्रहञ्चैव यानमासनमेव च
द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत्सदा, इति ।

## ऊनत्रिंशदध्याये गार्हस्थ्यधर्मप्रसङ्गतः पञ्चमहायज्ञ-रहस्यम् ।

पञ्च महायज्ञा गृहस्थानामवश्यकर्तव्यत्वे निरूपिताः । अस्मिन्नध्याये समागताः कर्तव्यपद्धतयः पञ्चमहायज्ञसम्बन्धेनैव निरूपिता ज्ञेयाः ।

तत्र ज्ञान-राज्य-सञ्चालकानां नित्यर्षीणां तृप्तिविधानेन ब्रह्म-यज्ञः सम्पाद्यते । तेन ब्रह्मयज्ञेन जगति ज्ञान-राज्यविवृद्धिर्भवति ।

यागाद्यनुष्ठानेन दानादिपुण्यकर्मणा अग्निहोमेन च देवयज्ञोऽनुष्ठीयते । अनेन च देवयागेन संवर्द्धमाना देवाः संसारेऽस्मिन् धर्माधर्म्मव्यवस्थां कर्म-शृङ्खलाञ्च यथायथं सुदृढ़ां समुचितां संस्थापयन्ति ।

श्राद्धादिकर्मणा च पितृयागोऽनुष्ठीयते । तेन च नित्यपितरो (देवविशेषाः) नैमित्तिकपितरश्च ( परलोकगाः पूर्वपुरुषाः ) आप्यायन्ते । येषाञ्चाप्यायनेन स्थूलजगतः स्थूलशरीरस्य च व्यवस्थानं सुदृढं भवति, कुलपवित्रता सन्तति-सुरक्षा च सम्पाद्येते ।

भूतबलिभिश्च विविधानां भूतसंघसञ्चालकानां देवानां तृप्तिर्भवतीत्यत एव तस्य भूतयज्ञ इति संज्ञा सङ्गच्छते। तेन च भूतयज्ञेन मानवा भूतर्णतो विमुक्ता भवन्ति । तेषामन्तरात्मा च सर्वप्राणिप्रेमास्पदत्वं गच्छन् व्यापको भवति ।

अतिथिसत्कारादिना तथास्मिन्नध्याये वर्णितेन चान्यान्यगार्हस्थ्यधर्मेण नृयज्ञः सम्पाद्यते । येन च तदनुष्ठानपरायणो धर्मभावापन्नो गृहस्थः समाजीय-सर्वर्णविमुक्तो भवति । इत्थञ्चात्राध्याये समुद्दिष्टाः सर्वेऽपि धर्माः पञ्चमहायज्ञा-न्तर्गता एव विज्ञेयाः । इमे च पञ्च महायज्ञाः साधारणधर्मकोटिमाश्रिता आर्य्यानार्य्यैः सर्वैरपि मानवैरनुष्ठातुमर्हाः । सर्वजनीनहिताधायकतया साधा-रणधर्मस्येत्थमेव माहात्म्यं यत्तं सर्वेऽप्यनुष्ठातुमधिकारिणो भवन्तीति ।

## साधारणासाधारणादिधर्म्मस्वरूपप्रतिपादनम् ।

दानधर्मस्य त्रयो भेदाः ३, तपोधर्मस्य च त्रयो भेदाः ३, कर्मयज्ञस्य षड् भेदाः ६ उपासनायज्ञस्य नव भेदाः ९, ज्ञानयज्ञस्य च त्रयो भेदाः ३, एषां चतुर्विंशतिभेदवतां धर्म्माङ्गानां सात्त्विक-राजस-तामसभेदेनापि द्वासप्तति र्भेदाः साधारणतया कर्म्ममीमांसाशास्त्रे परिगणिताः । इतोऽप्यन्यानि धर्म्मस्वरूपाणि यज्ञ-महायज्ञात्मना समष्टिव्यष्टिभावेन प्रोक्तानि, सत्य-ब्रह्मचर्य्य-क्षमा प्रभृतीनि च साधारणधर्मस्य यावन्ति उपाङ्गानि अभिहितानि, तानि सर्वाण्यपि पुरुषस्त्री-भेदविचारमन्तरा आर्य्यानार्य्यविवेकव्यतिरेकेणैवानुष्ठानयोग्यानीति शास्त्रकृतां निर्णीतः पन्थाः ।

परन्तु ब्राह्मण-क्षत्रियादि-चतुर्वर्णधर्म्माः, ब्रह्मचर्य्यगार्हस्थ्यादि-चतुरा-श्रमधर्म्माः, गृहस्थानां प्रवृत्तिमूलकधर्माः, संन्यासिनां च निवृत्तिमूलकधर्माः, पुरुषधर्माः, स्त्रीधर्माः, आर्य्यधर्माः, अनार्य्यधर्माश्चैतादृशा अन्येऽपि धर्मा विशेष-

धर्म-कोटावन्तर्गताः सन्ति । एषु च धर्मेषु यथाधिकारमेवानुष्ठानम् । यस्य यत्राधिकारस्तेनैव सोऽनुष्ठेयो नान्येनेति विशेष-धर्मस्य विशिष्टो महिमा । अस्मिन्नध्याये साधारणविशेषयोर्धर्मयोः समुच्चयेनाभिधानेऽपि अधिकारतारतम्यादनुष्ठान-पार्थक्यमस्त्येव । गृहस्थधर्म्मस्य सत्यपि विशेषधर्मत्वे महिमातिशयवर्णनरहस्यन्तु एतदध्यायोक्तालौकिकरूपक वर्णनत एव स्पष्टीभवति । तच्च तत्रैव पुराणे द्रष्टव्यम् ।

## महाराज्ञ्या मदालसायाश्चरित-रहस्यवर्णमुखेन सतीधर्मरहस्यकथनम् ।

इत्थञ्चेदानीं महाराज्ञ्या मदालसाया जीवनचरितविषये तत्कृतस्वपुत्रोपदेशाधिकारविषये चानेकधा शङ्काः समुदेतुमर्हन्ति पुराणाध्यायिनां चेतसि ।

तथा हि-महाराज्ञ्या मदालसायाःस्त्रियाः सत्या अपि आचार्यवदुपदेशदाने कथमधिकार इति ? सृष्टिचक्रे च पुरुषधारायाः स्त्रीधारायाश्च पार्थक्यात् मीमांसा-शास्त्रानुसारतः स्त्रीधारायाः पुरुषधारायां संमिश्रणेनैव मोक्षोपलब्धेः फलतः स्त्रियाः पुरुषत्वप्राप्तिं विना मुक्तिलाभोपपत्ते रभावात् कथं मदालसायां स्त्रियां सत्यामपि मुक्तात्मलक्षणसम्भवः ? एतादृश उच्चाधिकारः स्त्रीषु सम्भवति न वा ? इत्यादिसमुचितशङ्कासमुदायाः सम्भवन्त्येवेति तेषामुत्तरण मावश्यकम् ।—

शास्त्रेषु यथा सतीनां चत्वारो भेदा निगदिता ब्रह्मशक्तिस्वरूपाया मूलप्रकृतेर्यथा स्थूल-सूक्ष्म-कारण-तुरीयभेदेन चतस्रोऽवस्थाः प्रतिपादिताः याश्चाग्रे स्फुटं विवेचिता भविष्यन्ति । इत्थमेव स्त्रीजातीनामपि चत्वारोऽधिकारास्तत्त्वदर्शिभि र्मुनिभि र्निरूपिताः ।

तत्रैकस्तु विकृतिमूलकस्त्रयोऽन्ये प्रकृतिमूलका अधिकारा ऊहनीयाः । जगति इन्द्रियभोगसम्बन्धेनेन्द्रिय-सुखेच्छामूलको यः साधारण स्त्रीणामधिकारो निरूपितः स हि विकृतिमूलक उच्यते, न स प्रकृतिमूलकः । यतो हि अनार्य्यनारीषु तस्यैवाधिकारस्याभ्यर्हितत्वं विद्यते । अद्यत्वे तु आर्य्यनारीष्वपि अस्याधिकारस्य बाहुल्यमुपलभ्यते तत्र कलिकाल एव हेतुः । अयं हि स्त्रीणामधिकारोऽधमश्चतुर्थश्चरमोऽतः पुरुषस्यैहलौकिकसुखेच्छां लक्ष्यीकृत्य या हि नारी प्रवृत्तिमार्गेऽग्रे सरति सा हि स्त्रीजातेरुत्तमं तृतीयाधिकारमधिकरोति । एवमेव या हि नारी पत्यु-रैहलौकिक-पारलौकिकाभ्युदयमीहमाना नैजं तपोमूलकं धर्मं पालयति सा हि द्वितीयाधिकारं ततोऽप्युन्नततरमधिकरोति ।

नारीजातीनां प्रथमः सर्वोत्तमोऽधिकारस्तु महान् विलक्षणो विद्यते । या हि अलौकिकशक्तिसम्पन्नाऽसाधारणधर्माधिकारवती सती नारी पत्युः स्वस्य च

निःश्रेयसार्थं स्वमनःशरीरे नियोजयति सा हि अलौकिक-धर्मिणी सर्वोत्तमा सती स्त्री सर्वैरपि सम्पूज्यते । अयञ्च नारीजातीनां सर्वप्रथमोऽभ्यर्हिततरोऽधिकार उच्चदेवीष्वेव विराजते, तथा स्वर्गेऽप्यस्यासम्भवो दौर्लभ्यञ्चोपलभ्यते ।

## स्त्रीपुरुषसाधारणतया मोक्षोपलब्धिकथनम् ।

सांख्यशास्त्रस्याऽयं सिद्धान्तो विद्यते यत् ज्ञानारूढावस्थया कार्य्यप्रवाहेष्वात्मसमर्पणेन चोभयथाऽपि मुक्तावुत्तिष्ठते जनः । सा चेयं मुक्तिः स्त्रिया-वा पुरुषेण वोभाभ्यामपि लब्धुम्पार्य्यते । तथा च दम्पत्योरुच्चतमावस्थायां यदा नार्य्याम् उन्नतकर्मविपाकोदयो भवति, अपरतश्च तस्या अलौकिकतपस्याया आत्मज्ञानस्य चोदयो भवति, अस्यामेवावस्थायां नारी मदालसातुल्याध्यात्मस्थितिं विन्दते ।

कर्मगतिर्हि विचित्रा दुर्ज्ञेया च विद्यते । कर्मभिश्च सम्भाव्यासम्भाव्यमाने उभे अपि कर्मणी साधिते सम्भवतः । इत्यतश्च कर्मणां लोकातीताऽचिन्त्यशक्तिप्रभावेण एकस्मिन्नेव जन्मनि स्त्रीपुरुषधारायां भेदप्रतीतिर्विनष्टा भवति । ततश्च प्रकृति-पुरुषयोर्यथार्थपार्थक्यं पिण्डब्रह्माण्डयोरुभयोरप्यनुभूयमानं सत् नारी लोकातीतामिमावस्थां प्राथमिकीं प्रापयत्येवेति निःसन्दिग्धः पन्थाः । यतो हि अस्यां दशायां लौकिकदृष्ट्या नारीशरीरं स्थूलात्मकं सदपि आत्मज्ञानप्रभावेण सूक्ष्मशरीरं विपरिवर्तते कारणशरीरमपि निर्बीजं भूत्वैव तिष्ठतीत्यतो नास्ति नारीणामात्मज्ञानोपलब्धौ तत्कर्तृकोपदेशदानादीनामनधिकारत्वप्रतिपादनादिशङ्कावसरः । दशेयमसाधारणीत्यप्यवश्यमवगन्तव्यम् ।

अतोऽत्र नारी-पुरुषाणां समानधर्मसमानाधिकार-प्रतिपादकानां जल्पवितण्डापरायणानामाधुनिकानां वावदूकानां चञ्चुप्रवेशावसरोऽपि नास्ति । नारीणां कृते साधारणतया सतीधर्म एव निरापदध्वाऽवसेयः । यतो हि सतीधर्मस्यैकान्तानुष्ठानेन नारी स्वप्राकृतिकसंस्कारशक्तिमासादयन्ती स्वत एव स्वाऽभ्युदयनिःश्रेयसाधिकाराभिमुखी भवति इति सोऽयं निष्कण्टको मार्गः । अनेनाध्वनाग्रेऽग्रे व्रजन्ती नारी स्वपुण्यपरिपाकवशात् क्रमश ऐहलौकिकपारलौकिकोभयाभ्युदयमुपभुञ्जानाऽन्ततः स्त्रीधारां विहाय पुरुषधारामुपेता निर्वाणपदमृच्छतीति सुविदितमेव विदुषाम् ।

किन्त्वसाधारणधर्माधिकारिणी उन्नततमाधिकारमधिगता नारी त्रिविधशुद्ध्यधिकारमेकदैवासाद्य एकस्मिन्नेव जन्मनि सर्वदुर्लभपदमुपलभत इति निर्विवादसिद्धम् । यदा हि नारी वा पुमान् वा प्रकृति पुरुषयोर्भेदज्ञानमनुभूय

स्वरूपस्थितिं लभते तदा तौ मुक्तौ भूत्वा धर्मोपदेश-ज्ञानोपदेशादौ सर्वत्रैवाधिकारमासादयतः । नास्ति तत्र विचारावसरः । उक्तञ्च शास्त्रकृद्भिः ।

"पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसन् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः" इति ।

"निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इति

मदालसायाः पुत्रोपदेशस्तु मातृत्वपदादपि सर्वाभ्यर्हितात् सिद्ध एवेत्यत्र तु शङ्कावसर एव नास्ति । १—४६ ।

## कर्मविपाकवर्णनप्रसङ्गेन चतुर्विंशतिकर्मगतीनां श्राद्धतत्त्वस्य च रहस्यविवरणम् ।

कर्मणो हि प्राधान्येन शारीरिक,—मानसिक-बौद्धिकभेदेन त्रयो भेदा निरुक्ताः । तत्र बौद्धं कर्माऽध्यात्मिकमुच्यते मानसिकञ्चाधिदैविकं कथ्यते शारीरं कर्माधिभौतं रूपं धारयति । एभिरेव त्रिभिःकर्मभिः संस्कारस्य त्रिधा गतयो विभिद्यन्ते । तैरेव संस्कारैः कर्म-विपाकश्रृङ्खला निर्मीयते । तेषाञ्च कर्मविपाकानां दिव्यदृष्टिशालिभि र्महर्षिभि श्चतुर्विंशति र्भेदा अङ्गीकृताः । ते चेत्थमूहनीयाः । तथा हि—त्रिविधा देवयोनिप्राप्ति र्भवति तत्रोर्ध्वं देवयोनिरधोऽसुरयोनिर्मध्ये च पितृयोनिस्तिष्ठति । ऋषिदेवपितृभेदतः त्रिविधदेवश्रेण्यः सन्ति तासां श्रेणीनां पूर्वं विस्तृतं वर्णनकृतमास्ते । नरक-प्रेतलोक-मूढयोनिगजीवभेदेन त्रिविधा दुःखदा योनयः सन्ति । चतुर्णां भूतानामपि त्रयो भेदाःसन्ति । स्वर्गीयाः पशुपक्षि वृक्षादयश्चेत्येको नरकस्थाश्चत्वारो भूतसंघा, इति द्वितीयः मनुष्यलोकस्थाश्चारूढपतितभूतसङ्घा इतितृतीयः । सुखिजीवा मध्यश्रेणिगा दुःखिनश्चेति तिस्रो मानवश्रेणीनामवस्थाः । स्वास्थ्यविचारणया शरीरसम्बन्धेनापि मनुष्यपिण्डानां तिस्रोऽवस्था भवन्ति । ज्ञानवान्, विषयी, ज्ञानहीनश्चेति ज्ञानप्रसङ्गेन च मनुष्याणां तिस्रः श्रेण्यः सन्ति । मोक्षपद्धत्या लोकान्तरोपस्थितौ सालोक्य-सामीप्य-सारूप्यात्मक भेत्रयात्मिका तिस्रः समुन्नतावस्थाश्च सन्ति । इत्थञ्च कर्मविपाकफलाऽनुसारेण पापपुण्ययोश्चतुर्विंशतिप्रकाराः परिणतयोऽभिहिताः । एतद्विपाकवैचित्र्यानुसारमेव परलोकगतयोऽनिवार्य्याः । तस्यामेव कर्मविपाकदशायां सुखिनां जीवानां प्रसन्नतायै दुःखिनाञ्च सर्वथा साहाय्यसम्पादनाय सनातनधर्मशास्त्रादिषु श्राद्धकर्मोपदेशः पुरुषार्थत्वेन समुदीरितः । अत्र श्रद्धाया एव प्राधान्यम् । यतो हि योग्यौ मनोमयप्राणमयकोशौ द्वारीकृत्य योग्यब्राह्मणसाहाय्यञ्च पुरस्कृत्य अत्रैव

# सूर्योदयः ।

सप्तमे वर्षे } फाल्गुनस्य पूर्णिमा सं० १९८८ । { नवम-संख्या

## सम्पादकीया अभिप्रायाः ।

### पुराणमहिमा ।

—०:ॐ:०—

ब्रह्मा दक्षः कुबेरो यमवरुणमरुद्वह्निचन्द्रेन्द्ररुद्राः
शैला नद्यः समुद्रा ग्रहगणमनुजा दैत्यगन्धर्वनागाः ।
द्वीपा नक्षत्रताराररविवसुमुनयो व्योम भूरश्विनौ च
संलीना यस्य सर्वे वपुषि स भगवान् पातु वो विश्वरूपः ॥

पूर्णावतारेण भगवता आनन्दकन्देन श्रीमता श्रीकृष्णचन्द्रेण दिव्यचक्षुः— प्रदानपूर्वकं यत् किल विश्वरूपम् अर्जुनमुद्दिश्य प्रदर्शितम्, तद्धि भगवता श्रीमता वेदव्यासेन पुराणद्वारा आबालवृद्धं स्त्रीपुरुषाणां कृते सुलभीकृतम् । संसारे भूते वर्त्तमाने भविष्यति वा काले तादृशं किमपि तत्त्वं नास्ति यत् खलु व्यासदेवरचितेषु पुराणेषु न विद्यते । अत एव सद्विचारशालिभिः पण्डित-प्रकाण्डैर्महापुरुषैरिदमुच्यते—

"व्यासोच्छिष्टं जगत् सर्वम्" इति ।

पुराणेषु देवानां देवीनां च ललितललिता लीला बहुविधाः कथाश्च, ऋषि-महर्षि-ब्रह्मर्षिब्रह्मचारि-गृहस्थवानप्रस्थ-संन्यासि-यति-मुनिप्रभृतीनाम् उपाख्यानानि, पुण्यश्लोकानां प्रातःस्मरणीयमहापुरुषाणां जीवनचरित्राणि, इतिहासाः, काव्यानि, धर्मसमाजराजनीतयः, अध्यात्मज्ञानानि व्यावहारिकविज्ञानानि, सर्वविधा विद्याः, विविधानि कलाकौशलानि, च विद्यन्ते, तादृशं च वाङ्मयरूपं साहित्यं तेषु दृष्टिगोचरतामुपयान्ति, येन साधारणाः, समुन्नताः, उच्चतमाः सर्वे हि अधिकारवन्तः स्वाधिकारानुरूपं लाभमासादयितुमर्हन्ति ।

पुराणभाषा सरलसरला, पुराणेषु प्रतिपादितानि तत्त्वज्ञानानि सुबोधानि तेषु चित्रितानां नायकनायिकानां स्वभावा उत्युदात्ताः चरित्राणि च सुतरां विचित्राणि ।

प्रसादगुणगुम्फितत्वात् तेषामध्ययनाध्यापने न कदापि मानसं निराकाङ्क्षतामासादयति, एतद्धि प्रसादगुणस्य सर्वोत्कृष्टं निकषस्थानं मन्यामहे । इदानीं समये निखिलेष्वपि भूमण्डलेषु प्रचारगोचरतामासादयन्तीषु बहुविधासु भाषासु अनेकानि नाटकानि बहव उपन्यासाः विविधाः कथाश्च रचितानि, उपन्यस्ताः निबद्धाश्च समुपलभ्यन्ते; तेषां वारद्वयाभ्यासेनैव न पुनरध्ययनसमीहा पाठकानां समुदेति; परन्तु न जाने पुराणेषु कीदृशमलौकिकत्वं विद्यते यत् तेषां पौनःपुन्येन पठनेनापि तदीयमाधुर्य्यमहिमा नवं नवमिवाकारं प्राप्नुवन् प्रतिक्षणमेव पाठकानां मानसानि सन्तोषयति शान्त्वयति सम्मोहयति च । आसहस्रात् संवत्सरेभ्यः संख्यातीताः सुधियो बारशतात्मकं पुराणानि, पठन्ति, पाठयन्ति, शृण्वन्ति, श्रावयन्ति च; किन्तु पुराणानां नवीनत्वं न विनश्यति । पुराणानि पुराणान्यपि निरन्तरं नूतनायन्ते ।

पुराणानां सार्वजनीनता सर्वहितैषिता व्यापकता च जगति न तुलां बिभर्ति । श्रुतिः, स्मृतिः, पुराणं चेति प्राधान्येन श्रेणीत्रयविभक्ताः सनातनधर्मस्य प्रमाणिकानि पुस्तकरत्नानि । श्रुतेर्हि साक्षात् परब्रह्मणो निःश्वसितरूपत्वात् तदीयं रहस्यं न साधारणैरवगन्तुं शक्यते । अन्तर्दृष्टिसम्पन्ना महात्मन एव वैदिकविज्ञानपरिज्ञाने समर्थाः । येषां महापुरुषाणामधिमानसं वेदरूपः सर्वज्ञानमयः सच्चिदानन्दस्वरूपो भगवान् सदैव विराजते त एव याथातथ्येन वेदार्थरहस्यमवगन्तुमर्हन्ति ।

वेदार्थमनुसरन्तीनां धार्मिकीणामाज्ञापरम्पराणां स्मरणमेव स्मृतिरित्यभिधीयते । बहुधाविप्रतिपन्नविधिनिषेधात्मकत्वात् जटिलतामासादयतां स्मृतिशास्त्राणामपि-यथार्थरहस्यं साक्षात्कृतधर्मस्वरूपा महात्मान एव विज्ञातुमर्हाः ।

पुराणेषु तु न तथा विलोक्यते । तेषु किल बहुविधैरनेकरूपैस्तत्त्वज्ञानैः साकमनेका मनोरञ्जिकाः कथाः, चित्तचमत्कृति–कृति–कुशलानि उपाख्यानानि हृदयहर्षक–चित्ताकर्षक–घटनावल्यश्च निरतिशयरमणीयरोचकरूपेण निर्दिष्टाः सन्ति । अत एव सर्वविधा अपि अधिकारिणः समनोनिवेशमधीयते तानि, विनोदं चाभ्युपगच्छन्ति ।

पुराणानामभ्यसनेन कोमलमतयो बालकाः सुशीलाः सन्तो निजस्य भाविनो जीवनस्य शिवान् पथो निर्द्रष्टुं शक्नुवन्ति, युवानः कर्त्तव्यपरायणाः सम्भवन्ति, जरन्तश्च निःश्रेयसमार्गं निष्कण्टकं कुर्वते, महनीया महिलाश्च गृहिणीधर्मरताः पतिव्रतपरायणाः सत्यः सत्यः संजायन्ते । सर्वविधा अधिकारिणो

नैजं मनोभिलषितं फलं प्राप्नुवन्ति । राजनीति र्हि प्रायेण यथासमयंपरिवर्त्तते । समीचीनमुट्टङ्कितवान् कोऽपि नीतिनिर्णेता—

"वेश्याङ्गनेव नृपनीतिरनेकरूपा" इति ।

किञ्च पुराणप्रतिपादितानि राजनीतिरूपाणि च सर्वसाधारण-हिताधायकान्यपि स्थिरसिद्धान्तानि त्रिकालावाधितानि च विज्ञेयानि । भूमण्डलस्य समस्तानामपि देशानामतीताया वर्त्तमानायाश्च राजनीतिकपरिस्थिते र्यदि परिशीलनं क्रियेत, तर्हि तदीयकार्यकारणरहस्यं पुराणेषु नूनमेव दृग्गोचरीः भवेत् । सामाजिकविज्ञानस्यापि सर्वे मौलिकाः सिद्धान्ताः पुराणेषु सूत्रनिबद्धा सन्ति । आदर्शस्वरूपं समाजव्यवस्थाविवेचनमपि पुराणव्यतिरेकतोऽन्यत्र सुदुर्लभमेव ।

पूर्णज्ञानमयस्य भगवतो वेदस्य भाष्यरूपत्वात् पुराणानामाध्यात्मिकत्वमेव प्राणाः । सांसारिकविविधदुःखदग्धमानवकल्याणपरायणास्त्रिकालदर्शिनो महर्षयो हि मुक्तिमेव मनुष्यसमाजस्यान्तिमसुद्देश्यम् निश्चिक्युः । सकलोऽपि लोकसमुदायः सुखमेव समीहते, न दुःखम् । ऋते मुक्ते रात्यन्तिकः सुखाधिगमो दुःखनिरासश्च शशविषाणायते, खपुष्पायते वा । यत् किल भारतवर्षनिवासिनो मुक्तिमेवान्तिमं स्वजीवनलक्ष्यमङ्गीकृतवन्तस्तदपि पुराणानामेव माहात्म्यविजृम्भितम् ।

धरित्रीतलेऽस्मिन् अन्यत्र प्रादुर्भावमुपगता अन्या अतीतसंख्या मनुष्यजातयो लौकिकमभ्युदयमेव स्वजीवनसर्वश्रेष्ठलक्ष्यं निर्द्धारयन्तो मदोन्मत्ताः कालकवलिताश्च श्रूयन्ते । परन्तु भारतवर्षवासिनीयमार्यजातिश्चिराय स्वकीयमुत्कृष्टस्वरूपं रक्षन्ती निजास्तित्वविजयवैजयन्तीं दोधूयमाना विराजतेतरां सुतरामिति नवीनः प्राचीनश्चेतिहासः सप्रमाणमूर्द्ध्वबाहुर्विरौति । आर्यजातौ चिरजीवनशक्तिसञ्चारणं पुराणान्येव विहितवन्ति । किम्बहुना, ऐहलौकिकानां पारलौकिकानां वा अभ्युदयानां निःश्रेयसस्य वाधिगमने पुराणान्येव सर्वतः सुलभसाधनान्यवगन्तव्यानि ।

मानवमात्रहितबुद्ध्या पुराणानि प्रणीय महामहिमशाली महर्षि र्भगवान् वादरायणो भक्तिभावितान्तःकरणः साश्रिदमवोचत्—

रूपं रूपविवर्जितस्य भवतो ध्यानेन यत् कल्पितम्
स्तुत्याऽनिर्वचनीयताऽखिलगुरो दूरिकृता यन्मया ।
व्यापित्वं च निराकृतं भगवतो यत् तीर्थयात्रादिना
क्षन्तव्यं जगदीश तद्विकलतादोषत्रयं मत्कृतम् ॥"

विश्वरूपवत् पुराणानां लौकिकदृष्ट्या समुद्रोपमानताऽपि सुतरां संगच्छते। पुराणमहोदधिमन्थनेन हालाहलं विषमपि निःसार्य्यते, अमरत्वकारणममृतमपि, सुराऽपि समुद्भाव्यते जनमनोमोददाता सुधांशुश्चापि, लक्ष्मीरपि समुत्पाद्यते, शुल्कः शङ्खश्चापि। पुराणविषये—

"यादृशी भावना यस्य सिद्धिर्भवति तादृशी"

इत्यभिधातुं शक्यते। यादृशः साधको यादृशया भावनया भावितः पुराणमहोदधिमवगाहितुमिच्छति, तेन तादृशं स्ववासनानुरूपमेव फलमासाद्यते।

पुराणपठनसमये चैका विशेषदृष्टि नितरामावश्यकीया। यतो हि भगवता वेदव्यासेन—

"समाधिभाषा प्रथमा लौकिकीति ततः परा।
तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता॥"

इति शास्त्रीयं प्रमाणमनुसृत्य भाषात्रयस्यापि प्रयोगो विहितः पुराणेषु। रहस्यमिदमबुध्वा केवलं स्थूलदृष्टयो ये हि पुरुषाः पुराणानि समाक्षिपन्ति, तैस्तु नूनं पुराणसागरमथनेन हालाहल-शुक्ति-प्रभृतीन्येव लभ्यन्ते,न हि सुधा, नापि च सुधांशुः, न चापि लक्ष्मीरिति।

न केवलं पुराणनिन्दकानामेवात्र महान् दोषः, किन्तु तेषामपि दोषातिशयोऽत्र, ये किल पुराणरहस्यं जानन्तो विद्वांसः। यतो हि न हि सर्वे मनुतनुजनुषो हठधर्मित्वग्रहग्रस्ताः, नापि वा दुराग्रहग्रहिला भवन्ति। बहवो जिज्ञासवः स्वीयशङ्कासमाधानाभावेन पुराणेष्वश्रद्धालवो भवन्ति। तेषामेवोपकारार्थमस्माभिः सूर्योदयेऽत्र धारावाहिकं पुराणरहस्यं प्रकाश्यते। अस्तु। सैव सर्वशक्तिमती जगदम्बा सर्वेभ्योऽपि पुराणपाठकेभ्यः सुबुद्धिं प्रयच्छतु, येन पुराणोद्भवः शङ्कालवोऽपि न मनागपि पाठकानामधिमानसमाविर्भवेदिति।

तमोगुणविनाशिनी सकलकालमुद्योतिनी
धरातलविहारिणी जडसमाजविद्वेषिणी।
कलानिधिसहायिनी लसदलोलसौदामिनी
मदन्तरवलम्बिनी भवतु कापि कादम्बिनी॥

## श्रीमहामण्डलडाइरेक्टरी ।

——:※:——

करुणावरुणालयस्य परमपितुः परमात्मनः परमया करुणया "महामण्डलडाइरेक्टरी"—नामधेयस्य वार्षिकपुस्तकस्यैतस्य सप्तमीं संख्यां समालोचयतो मम मनसि समुत्पद्यते महानानन्दसन्दोहः । आङ्गलभाषायां प्रान्तीयभाषायां च डाइरेक्टरीनामकानि बहूनि वार्षिकपुस्तकानि प्रकाश्यन्ते । परन्तु राष्ट्रभाषायां हिन्द्यां तदभावः खटखटायतेस्म । श्रीभारतधर्ममहामण्डलेन तदभावस्य पूर्त्तिं विधाय महोपकारः साधितः ।

पुस्तकमिदं पञ्चदशैः खण्डैर्विभक्तम् । तत्तत्खण्डानाञ्च महामहिमशालिनो विद्वांसः पृथक् पृथक् सम्पादकाः सन्ति । पञ्चदशखण्डात्मकं सदपि तत् एकमेव । पञ्चदशसु खण्डेषु किं किं वर्त्तत इति संक्षेपतो निर्दिश्यते—

( १ ) प्रथमखण्डस्तु भूमिकात्मकः । अत्र बहूनां ज्ञातव्यविषयाणामुट्टङ्कनमवलोक्यते ।

( २ ) द्वितीये धर्मखण्डे मङ्गलाचरणम्, कालविवरणम्, देशविवरणम्, महासंकल्पः, धर्मविवेचनम्, उपासनादिव्यदेशाः, पीठरहस्यम्, पूजोपचाराः, उपासनाभेदाः, कर्मकाण्डः, पञ्चमहायज्ञमहात्म्यम्, व्रतोत्सवकथाः सामान्यधर्मकृत्यम्, दशविधसंस्काराः, गोत्रप्रवरादिः, अशौचनिर्णयः, सन्ध्याविधिः, देवपूजनविधिः, तुलसीपूजनविधिः, सूर्यनमस्कारविधिः, इत्येते विषयाः सन्ति ।

( ३ ) आयुर्वेदखण्डे-ऋतुचर्या, मासिकचर्या, आशुचिकित्सा इत्यादि ।

( ४ ) संस्कृतखण्डे-अखिलभारतवर्षीय-संस्कृत-विश्वविद्यालयः, प्राचीनविद्यापीठानि, अन्यानि च स्थानानि सूपवर्णितानि ।

( ५ ) ज्यौतिषखण्डे—कालमानम्, भचक्रमानम्, दिशाज्ञानम्, कोणस्थितिः, मासाः, कालभेदः, पक्षः, नवग्रहाः, राशयस्तत्स्वामिनश्च, वारप्रवेशसमयः, नक्षत्राणि, योगाः, करणानि, ऋतवः, अयनं, गोलः, उच्च-नीचज्ञानम्, अवकहड़चक्रम्, नक्षत्रवर्णाः, नक्षत्रराशयः, ग्रहमैत्री, दृष्टिज्ञानम्, कुण्डलीस्थद्वादशभावानां फलानि, भावानां विशेषसंज्ञा, दिनरात्रिमानम्, सूर्योदयः, सूर्यास्तः, इष्टकालसाधनम्, तिथ्यादि ज्ञानम्, ग्रहराशिनवमांशज्ञानम्, लग्नसाधनम्, कुण्डलीलेखनम्, फलज्ञानं, साधारणनियमाः, गोचरफलम्, चन्द्रचार-दिक्शूलज्ञानम्, योगिनीवासः, वरवधू-जन्मपत्रमेलापनम्, वर्ण-

वश्य-तारा-योनि-ग्रहमैत्री-गण-भकूट-नाड़ी-परिहारादीनां परिज्ञानम्, मुहूर्त-प्रकरणम्, प्रथमरजस्वलास्नान-पुंसवन-सीमन्त-जातकर्म-नामकरण-सूतिकास्नान-जलपूजा-अन्नप्राशन-कर्णवेध-मुण्डन-अक्षरारम्भ-उपनयन-विवाह-वधूप्रवेश-द्विरागमन-स्त्रीभूषणपरिधान—जलाशयारम्भ-पशि-रोगिप्रथमस्नान-दत्तकपुत्रग्रहण—यात्रा-वारवेलादीनां परिज्ञानम्, अक्षांशसमयनिर्णयः, स्वप्नछिक्काशकुन-नेत्र-बाहुस्फुरणा-पल्लीपतन हस्तरेखाफलपरिज्ञानम्, राशीन् लक्ष्यीकृत्य मास-फलम्, वार्षिकपर्वदिनानि, वर्षफलम्, इत्यादि ।

( ६ ) भारतयात्रा खण्डे—भारतस्य ५१ पीठस्थानानि, तीर्थस्थानानि, द्वादशज्योतिर्लिङ्गनामानि, धर्मशालाडाँकबंगला—तीर्थपुरोहित भारतीय मुख्य-नगराणां विशिष्टः परिचयः ।

( ७ ) समाजसुधारखण्डे—स्वजातिनाम महत्त्वम्, पातिव्रत्यं, स्वधर्म-विचारः, शुद्धाशुद्धविवेकः, देवमन्दिरप्रवेशाधिकारः, कूपादितो जलग्रहणवि-चारः, नेतॄणां कर्त्तव्यानि, सहविवाह—सहभोजन—विदेशगमनादीनां विमर्शः ।

( ८ ) हिन्दी साहित्यखण्डे-हिन्द्याः संक्षिप्त इतिहासः, शब्दज्ञानार्णव-श्चेति ।

( ६ ) संस्थाखण्डे—ब्राह्मणमहासम्मेलन-क्षत्रियमहासभा-भारतीय-राष्ट्रीयमहासभा—शान्तिनगर प्रभृतीनां बहूनां संस्थानां परिचयः ।

( ८ ) राजखण्डे-सम्राट् परिवारः, वृटिशभारतशासनप्रणाली, भारतीय-नरेशानां शतघ्नीसम्मानम्, सनातनधर्मावलम्बीनि देशीय राज्यानि च ।

( ६ ) गोरक्षा—( १० ) कृषिखण्डे—वाणिज्यशिल्पखण्डे च स्वदेशीय-वस्तुनिर्मातॄणां नामानि, संकेताश्च, स्वदेशीय वस्त्रवयनयन्त्राणां नामानि चेति ।

( ११ ) नियमखण्डे—रेल—डाँक-नोटप्रभृतीनां नियमाः । महामण्डल-समाजहितकारिकोषनियमाश्च ।

( १४ ) महामण्डल खण्डे—सर्वेषामपि चतुस्त्रिंशत् संख्यकानां महा-मण्डलविभागानां विशिष्टः परिचयो विद्यते ।

( १५ ) पञ्चाङ्गखण्डे—निखिलोऽपि पञ्चाङ्गविषयः समुपवर्णितः ।

एतेषां विषयाणामुट्टङ्कनेन पाठकाः ज्ञास्यन्ति यत् 'महामण्डल डाइरेक्टरी' कथमिव समुपादेया वर्त्तत इति । मूल्यं पुस्तकस्यास्य द्वादश आणकाः प्रेषण-व्ययः पृथक् प्राप्तिस्थानम् "श्रीभारतधर्ममहामण्डल, जगत्गंज, बनारसकैंट" ।

# ज्ञातव्यविषयाः ।

—:०:※:०:—

१६३१ खिस्ताब्दीयमानवगणनानुसारं भारतीया जनसंख्या ३५१५००००० मिता वर्त्तते । तत्र प्रायः २६००००००० ऊनत्रिंशत्कोटितोऽप्यधिका ग्रामवासिनः । शिष्टा नागरिकसंख्या विज्ञेया ।

× × × +

जनानां भारतीयानां व्यवसायविवरणम् निम्ननिर्दिष्टरूपमवगन्तव्यम्-

( १ ) कृषिविभागे २३ कोटिः ( २ ) चायसंज्ञकपदार्थविभागे १५ लक्षम् ( ३ ) अरण्यविभागे १५ लक्षम् ( ४ ) खनिविभागे ५ लक्षम् ( ५ ) दारुकार्य विभागे ३६ लक्षम् ( ६ ) वस्त्रवयनविभागे ७४ लक्षम् ( ७ ) गृहनिर्माणकर्मणि १७ लक्षम् ( ८ ) धूम्रयानविभागे १ लक्षम् ( ६ ) विभिन्नविषये ७ लक्षम् ( १० ) पत्र-तड़ित्पत्रालय विभागे २ लक्षम् ( ११ ) भोजनालय-( होटल ). विभागे ७ लक्षम् ( १२ ) रक्षा-( पुलिस ) विभागे ४ लक्षम् ( १३ ) राजकीयभृतक कार्ये १ कोटिः ( १४ ) आधिकरणिक-वाकील-कर्मणि—४ लक्षम् ( १५ ) डाक्टर-वैद्य-विभागे ७ लक्षम् ( १६ ) वस्त्रविक्रयकार्ये ८ लक्षं च मानवा विविधविधेय विधानमाचरन्ति ।

× × × ×

विवाहिताविवाहितस्त्रीपुरुषसंख्या भारतेऽत्र अधोलिखितरूपाऽवगन्तव्या ।

विवाहितपुरुषाणां ७ कोटिः, ११ लक्षं च संख्या, अविवाहितानां पुरुषाणां तु ८ कोटिः, ६ लक्षं च संख्या । १ कोटिः किल विधुराः सन्ति ।

विवाहितानां नारीणां तु ७ कोटिः, १५ लक्षं च संख्या, अविवाहितानां तासां तु ५ कोटिः, ४८ लक्षं च संख्या । २ कोटिः, ६८ लक्षं च विधवाः सन्ति ।

पञ्चवर्षतोऽपि न्यूनवयस्कानां बालविधवानां संख्या तु २० सहस्रतोऽपि समधिका श्रूयते ।

× × × ×

निम्ननिर्दिष्टनाम्नां सप्तानां महादेशानां प्रतिवर्षं प्रतिमनुष्यं च अधोलिखितरूप आयोऽवगन्तव्यः—

( १ ) अमेरिकायां प्रतिवर्षं प्रतिमानवं च १०८० मुद्रात्मक आयः,

( २ ) आष्ट्रेलियायां प्रतिवर्षं प्रतिमानवं च ८१० मुद्राणामायः,
( ३ ) आङ्गलस्थाने प्रतिवर्षप्रतिमानवं च ७५० रूप्याणामायः,
( ४ ) केनाडास्थाने प्रतिवर्षं प्रतिपुरुषं च ४५० रूप्यकात्मक आयः,
( ५ ) फ्रांसप्रदेशे प्रतिवर्षं प्रतिमनुष्यं च ४५० रूप्यकाणामायः,
( ६ ) जर्मनीप्रदेशे प्रतिमनुष्यं प्रतिवर्षं च ४५० मुद्राणामायः,
( ७ ) भारतवर्षेतु प्रतिवर्षं प्रतिमनुष्यं च केवलं १०० मुद्रा आयः,

× × × ×

इदानीं समयात् प्रायः सप्ततिवर्षेभ्यः पूर्वमेव जर्मनी देशस्य सुप्रसिद्धो विद्वान् मैक्समूलरमहोदयः स्वकीये व्याख्याने व्याहृतवान् आसीत्यत्हस्त-लिखित संस्कृतपुस्तकानां १०००० मिता संख्या भारतवर्षस्य प्राचीनतायाः समुन्नतेश्च परमं प्रमाणमिति । परन्तु विषयस्यैतस्य सुप्रसिद्धः संशोधको विपश्चित् श्रीमान जे० आर० राय-महाशय ऐवम एव सूचितवान् यत् भारतवर्षे एव केवलं हस्तलिखित-संस्कृतपुस्तकानां कुत्र कियती संख्या वर्तते इति, संक्षेपेयं नीचैर्निर्दिश्यते—

( १ ) पञ्चाम्बुनद्विश्वविद्यालयपुस्तकालये ६४००, ( २ ) काशी-सरस्वतीभवनपुस्तकालये ४५०००, ( ३ ) लवपुर-दयानन्द आङ्लोवैदिक कालेज-पुस्तकालये ६४००, ( ४ ) कलकत्ताएशियाटिकसोसाइटी पुस्तकसद्मनि ५०००, ( ६ ) मद्रास-ओरियंटल ग्रन्थागारे ३००००, ( ७ ) तञ्जोर-राजकीय पुस्तकालये १२०००, ( ८ ) देवेन्द्रम्-राजकीय पुस्तकनिलये १००००, ( ९ ) महीशूर राजकीय-पुस्तकभवने १६०००, पूनाभाण्डारकरपुस्तकगेहे ३००००, पूना-आनन्दाश्रम-मन्दिरे-१६०००, बड़ौदाराजकीय-पुस्तकालये ८०००, संख्यकानि हस्तलिखितपुस्तकानि निभाल्यन्ते । एतदतिरिक्तस्थानेष्वपि यथा—नैपाल-बीकानेर-अलवर-जयपुर-उदयपुर-प्रभृतिराजकीयपुस्तकमन्दिरेषु तालपत्र-भूर्ज-पत्रादिषु चर्मोपरि च सुलिखितानि बहूनि प्राचीनपुस्तकानि समुपलभ्यन्ते । अनुमानतः सम्पूर्णेऽपि भारतवर्षे हस्तलिखित-प्राचीनसंस्कृतपुस्तकानां संख्या ७००००० मितेति निश्चीयते ।

———

# संस्कृते नीति—'कुण्डलियाः।'

ले० भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः।

या काचिद्भाषा भवतु—परं तस्यां भाषायामुपनिवद्धानां छन्दसां शक्तिरद्भुता भवेदिति सत्यम्। यद्यपि समर्थकविसंघटितौ शब्दार्थावेव सहृदयचेतोहरणायाऽलम् परं संगीतलयानुषङ्गी छन्दसां निबन्धनभङ्गीगतः कश्चिदतिशयस्तमेव वर्णनीयविषयं शतगुणीकर्तुं शक्नुयादिति को वा मार्मिको न स्वीकुर्यात्। काव्यलक्षणमुपपादयन्तः कतिचित्पाश्चात्यपण्डितास्तु—"संगीतमयभाषायां मनोविकाराणां समुचितनिबन्धनमेव काव्यम्।" इत्याहुः। भाषा च तावत्संगीतमयी छन्दःप्रबन्धेनैव भवतीति पांसुलपादोऽपि बोद्धुं प्रभवेत्। तथा च तेषां मतेन छन्दोनिबन्धनं विना काव्यत्वमेव न भवति। इदानीं दृश्यतां, कविताराज्ये छन्दसां कीदृशमासनमिति।

संस्कृतभाषा यथा अन्यान्येषां ज्यौतिषायुर्वेद-शिल्पतन्त्रादि-विषयाणां जननी, एवं छन्दसामपि सर्वतः प्रथममियमेव जन्मदात्री। अस्यां हि सहृदयमनोहारीणि बहूनि छन्दांसि, इमानि छन्दांस्यपि वर्णनीयविषयानुसारं निजमहिमानं पुनः प्रगुणीकुर्वन्तीति जानन्त्येव साहित्यमार्मिकाः। काश्मीरिककविचूडामणिना क्षेमेन्द्रेण तदिदं विस्तरतो वर्णितं 'सुवृत्ततिलके'।

संस्कृतकविभिर्निबद्धान्येव सर्वाणि छन्दांसि, परम्-एतस्य किंचित्कालानन्तरमेव ब्रजभाषायामपि बहूनि छन्दांसि तथा प्रचारमापयुर्येषां प्रभावः सहृदयानां सुप्तां मनस्तन्त्रीं ध्वनयामास। तेष्वेव छन्दस्सु एकतममिदं 'कुण्डलिया' नामकं छन्दः। कर्णयोर्धारणीयं कुण्डलं यथा आद्यन्तयोर्भागयोरेकीकरणेन आद्यन्तमिलिताकारं भवति, तथैव अस्य वृत्तस्य आरम्भे यत्पदं भवति अन्तेपि तदेव पदमावृत्तं भवतीति तदिदं छन्दोपि 'कुण्डलिया' नाम्ना प्रोच्यते। यस्यां व्रजभाषायामस्य छन्दसो बहुलः प्रचारस्तत्र तदिदं छन्दः सुन्दरेषु वृत्तेषु परिगणितं भवति। विशेषतश्चेदं छन्दः सुवर्णे सौरभमिव नीतिनिर्वाचने असाधारणं माधुर्यमावहतीति तत्त्वविवेचका जानीयुः। अत एव गिरिधरस्य दीनदयालुगिरेश्च कुण्डलियानां हिन्दीसाहित्ये सुस्थिरं स्थानम्। तदिदं कुण्डलिच्छन्दः सहृदयवृन्दाभिनन्दनीयायामस्यां वृन्दारकभारत्यामपि कां सुषमामनुगच्छतीति परीक्षार्थमहमन्यच्छन्दोनिबन्धनकौतु-

केन प्रावर्तिषि। तदयं मे प्रयासः कियत्सफलोऽऽभवदत्र सहृदयानां हृदयमेव परीक्षानिकषः।

आङ्गलसंस्कृतोभयभाषासाहित्यपारगामिनो डाक्टराद्युपाधिमण्डिता अपि केचिन्नामाङ्किताः पण्डिता अनेन नवीनच्छन्दोग्रहणेन संस्कृतच्छन्दसामपमानमिव भावयन्ति। किंवा, संस्कृतच्छन्दांसि शनैः शनैर्विरलप्रचाराणि वा भवेयुरिति मनसि कुर्वन्ति। तदिदमसाम्प्रतम्—न हि नवीननवीनच्छन्दसां संकलनेन पुरातनानि लुप्यन्ते नाम छन्दांसि। यदीदमभविष्यत् तर्हि संस्कृतभाषायामेव स्रग्धरा-उपजाति-शार्दूलविक्रीडितादीनां नानाछन्दसां दर्शनं नोऽभविष्यत्। नवीनस्य प्रचारे पूर्वतनस्य विलोपप्रसंगात्। परं नेदमस्ति। नाना विधान्यप्यमूनि छन्दांसि कविताराज्ये तथा विधामपूर्वतामाविर्भावयन्ति यथा नानाविधेषु वर्णनीयेषु नाना रुचीनां जनानां मनांसि जतुश्लेषं श्लिष्यन्ति। स्वभावत एव म नुषस्य तादृशं मनो यत्प्रतिदिनं नानाविधं स्वादमन्विष्यति। एकमेव प्रतिदिनमास्वाद्यमानं सरसमपि वस्तु लोकानां विरागमुत्पादयति। अतएव नवीनच्छन्दसां संस्कृते परिग्रहो न पूर्वच्छन्दोविलोपाय, प्रत्युत नवनवाऽऽस्वादेन जागृतसाहित्यरुचीनां सहृदयानां तत्तेषु छन्दस्सु अभि नवरुचिपूर्वकं प्रवर्तनायैव।

किंच—"स्रग्धरा-उपजाति-वसन्ततिलकादिषु येषां माधुर्यं न प्रतीतं भवति, त एव अन्यभाषाच्छन्दस्सु प्रवर्तन्ते, न ज्ञातरसा अन्ये।" एतदपि न विचारसहम्। येषां किल संस्कृतच्छन्दांसि मधुराणि भान्ति तेषां किं व्रजभाषाच्छन्दः शिरःशूलमुत्पादयेत्? मोदकाः किल येषां कृते मधुरा भवन्ति, तेषांकृते किं पायसं कटु भवति? अस्तु पृथक् पृथक् किल वस्तूनामास्वादः। एवमेव नानाछन्दस्सु नानाविधं माधुर्यम्। न किल एकम् अमधुरमस्तीति कृत्वा अन्यत्र लोकानां प्रवृत्तिः, किन्तु रसान्तरसंग्रहाय। अन्यथा यस्य किल स्रग्धरा मधुरा जाता, सहि वसन्ततिलकं स्पृशेदेव किम्। तथा च संस्कृत एव नानाविधच्छन्दांसि सुन्दोपसुन्दन्यायेन प्रतिहतान्येव भवेयुरित्यलं मान्येष्वविनयेन।

(शेषं पुनः)

# सखिसङ्घावलम्बनम् ।

सखे ! धैर्य ! महावीर्य ! न त्यज्येय यदि त्वया ।
आपन्नोऽपि न मन्येय स्वात्मानं पदमापदः ॥ १ ॥
गतस्याऽप्युन्नतिं जातु न मेऽधः पतनं भवेत् ।
यतोऽवश्यं तदाऽपि त्वामालम्बेय क्षमे ! सखि ! ॥ २ ॥
यदि वाक्यपटुते ! कण्ठं श्लिष्टा स्याश्चटुले ! सखि ।
सभायां विदुषां स्थित्या स भायामपि किं भयम् ? ॥ ३ ॥
नाऽप्यहं बिभियां तस्मात् कालात् कवलिताखिलात् ।
शरीरमुररीकुर्यां त्वद्रूपं चेद् यशः ! सखे ! ॥ ४ ॥
सखे ! व्यसन ! सच्छास्त्राभ्यसने यदि मे भवेः ।
मूर्खतायाः कथं सत्ता दुःखदाया ममाऽऽत्मनि ? ॥ ५ ॥
रुन्धन्तु युद्धभूमध्ये योद्धारः सर्वतोऽपि माम् ।
का भीर्विक्रम ! तेभ्यो मे ? नोपेक्षेथाः सखे ! यदि ॥ ६ ॥
किन्त्वस्मिन् विषये प्रार्थ्यः परमात्माऽखिलाश्रयः ।
नित्यमेव ममाऽऽत्मा स्वे महत्त्वे राजतामिति ॥ ७ ॥
धैर्य ! क्षमे ! वाक्पटुते ! यशो ! व्यसन ! विक्रम ! ।
प्रकृत्यैव भवद्भिर्मे सखिभिर्येन भूयते ॥ ८ ॥

—श्रीमाधवप्रसादशर्मा देवकूटा,
( नेपाल-प्रान्त पाल्पा ।)

# धर्म-महिमा ।

ब्रह्माण्डस्याऽप्यखण्डस्य यतः सृष्टिः स्थितिर्लयः ।
चरन्ति च निराधारे तोषाद् येन ग्रहादयः ॥ १ ॥
जन्म रक्षां प्रणाशं यो धत्ते पिण्डस्य जन्मिनाम् ।
उद्भिज्ज-स्वेदजन्मादे र्मनुष्यत्वं च राति यः ॥ २ ॥
मनुष्यो भिल्लतादिभ्य स्तथा परमहंसताम् ?
येनाऽऽप्नोत्यपि चाऽत्यर्थं तोषं लोकद्वयीप्सितम् ॥ ३ ॥
उक्तेन बहुना किं वा जगतः शर्मवर्मणे ।
धर्मायाऽस्तु नमस्तस्मै यः साक्षाद् भुक्तिमुक्तिदः ॥ ४ ॥

—श्रीमाधवप्रसादशर्मा, ( नेपाल । )

# "टु डे" स्मृतिः ।*

( 'माधुरी'त उद्धृता )

प्रणेता—'अज्ञातः'

उद्धर्त्ता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।

## प्रस्तावना ।

एकदा 'चेयरा' ऽऽसीनं 'टुडे' धर्म्मविदां वरम् ।
महर्षिं 'फैशनाचार्य्यं' 'जैएटलमैनाः' समभ्ययुः ॥ १ ॥
सम्यग् ध्रुत-'सिगारा' स्ते स-बूटा' 'हैट' पाणयः ।
'गुड् मार्निङ्ग्' इति प्रोच्य स्थित्वाऽपृच्छन् सुसादरम् ॥ २ ॥
भवान् 'टुडे' धर्म्मविदां वरिष्ठो
'न्यू फैशना' ऽगाधसमुद्रमन्थः ।
रिफार्मराणां' धुरि कीर्त्तनीयोऽ-
स्मान् ब्रूहि सर्व्वं कलिधर्म्मतत्त्वम् ॥ ३ ॥

### 'फैशनाचार्य्य' उवाच—

शृणुताऽवहिताः सौम्याः ! 'टुडे' धर्म्मान् कलिप्रियान् ।
'एवोल्यूशनथ्यूर्या' ये नित्यं 'गिर्गिट' रूपिणः ॥ ४ ॥

### सृष्टिक्रमः ।

जलेषु 'हर्कतो' जज्ञे मत्स्या 'हर्कत' सम्भवाः ।
त एव जातो मण्डूका अथ ते पक्षिणाऽभवन् ॥ ५ ॥
पक्षिभ्यः पशवो जातास्तेऽपि वानरतां गताः
घृष्टपुच्छा वानरास्ते नरा लोकेऽस्मदादयः ॥ ६ ॥

### धर्म्माचार्य्याः ।

'लूथरो' 'डार्विन' श्चैव 'वेनो' 'रायश्च' 'कापड़ी' ।
'गौड़ः' 'शारद' एतेहि कलिधर्म्मप्रवर्त्तकाः ॥ ७ ॥

* सूर्योदयस्य फाल्गुनसंख्यायां होलिकावसरे इयमपूर्णाऽपि केवलं पाठकानां विनोदाय उद्धृता ।

### धर्म्मलक्षणम्।

'लेडी' 'फ्रैण्ड्स' 'समाचाराः' 'स्वस्य च प्रियमात्मनः'।
एतच्चतुर्विधं प्राहुः 'टुडे' धर्म्मस्य लक्षणम्॥ ८॥

### प्रामाण्याप्रामाण्ये।

'मन्थली' 'वीकली' 'डेली' पत्रै'र्यूरोप' निःसृतैः।
यत्किञ्चिल्लिख्यते तद्धि स्वतः प्रामाण्यमर्हति॥ ९॥
वेदशास्त्रपुराणेषु 'ओल्ड फैशन' मानवैः।
यदुक्तं तन्न संसेव्यं 'टुडे' धर्म्मविरोधि तत्॥ १०॥

### वर्णविचारः।

विप्रक्षत्रियविट्शूद्रा वर्णा ये 'पोप' कल्पिताः।
'अनेचरत्वाद्' 'डर्टि' त्वादप्रत्यक्षाद् वृथैव ते॥ ११॥
श्वेतश्यामौ तु वर्णौ द्वौ 'नेचुरल्' परिकीर्त्तितौ।
'यूरोपे' लभ्यते 'श्वेतः' 'इण्डियादिषु' 'श्यामकः'॥ १२॥
तयोर्धर्म्मान् प्रवक्ष्यामि यथाशास्त्रं निबोध तान्।

### गौरवर्णधर्म्माः।

'श्वेत' श्च जायमानो हि पृथिव्यामधिजायते।
उत्पत्तिरेव 'श्वेत' स्य मूर्त्तिर्धर्म्मस्य शाश्वती॥ १३॥
'ह्विस्की' च 'मीट' 'डांसा' नि 'नो विकेंसी' च 'साइनः'
आज्ञादानं परेभ्यश्च षट्कर्म्मा 'गौर' उच्यते॥ १४॥
यक्षरक्षः-पिशाचान्नं मद्यं मांसं सुरासवम्।
गौराङ्गानां न दाषाय वह्नेः सर्व्वभुजो यथा॥ १५॥

### कृष्णवर्णधर्म्माः।

'गौरो'च्छिष्टं 'पलेटे' षु भोजनं 'प्लीज' 'येस् सरः'
गौरानुकरणायासः 'श्याम'कर्म्म स्वभावजम्॥ १६॥
सर्व्वेषामेव दानानां 'थैंक यू' दानं विशिष्यते॥ १७॥

इति श्री'फैशनाचार्य्य'कृतायां 'टुडे'स्मृतौ
सामान्यधर्म्मनिरूपणं नाम प्रथमोऽध्यायः॥

× × ×

### अथ दिनचर्या। प्रातः स्मरणम्।

कराऽरविन्देन 'सिगार' वृन्दं
मुखारविन्दे विनिवेशयन्तम्।

'स्पृङ्गदार' सच्-'चेयर'के शयानं
'गौरं' महः 'सर्विस'दं नमामि ॥ १८ ॥

## प्रभातकृत्यम् ।

प्रातरुत्थाय मञ्चस्थो 'लाला'-क्लिन्नमुखः पुमान् ।
'टी' 'काफी' 'बिस्कुटं' 'केकं' सेवयेन्नित्यमेव हि ॥ १९ ॥
पुनः शयीत उषसि आयुरारोग्यकाम्यया ।
'आफिसः' 'टाइमो' यावन्नभवेत्तावदेव हि ॥ २० ॥

## मलमूत्रत्यागविधिः ।

यथाकालं समुत्थाय कराभ्यां चक्षुषी मृजन् ।
'उत्तिष्ठन्' मूत्रविट्त्यागं कुर्य्यात् 'पिटककूबरे' ॥ २१ ॥

## शुद्धिप्रकारः ।

छिन्नैश्च 'कर्ग्गलैः' पश्चाद् गुदं संशोधयेद्बुधः ।
न करेण स्पृशेन्नीरं यदीच्छेच्छुभ मात्मनः ॥ २२ ॥

## नित्यकर्म ।

'बूटे' 'सलीपरे' 'शूजे' 'पंपे' 'चपकले तथा ।
'फुलसलीपर' 'गुर्गाभ्यां, नित्यं कुर्य्यात् 'सुपालिशम्' ॥ २३ ॥

## क्षौरे मतद्वयम् ।

'सेफ्टीरेजर' यन्त्रेण श्मश्रु कृन्तेत् सकूर्च्चकम् ।
'नासारन्ध्राग्रदेशे वा रक्षयेन्मक्षिकासमम् ॥ २४ ॥

## स्नानविधिः ।

साप्ताहिकं शीतकाले ग्रीष्मकाले यथारुचि ।
नग्नः 'टीनटबे' कुर्य्यात् स्नानं 'सोप' समन्वितम् ॥ २५ ॥

## दन्तधावनम् ।

आश्वैराश्वतरैर्वालैर्गार्दभैर्निर्म्मितेन वा ।
'ब्रुशेन' घर्षयेद्दन्तान् मूलतः शोधनेच्छया ॥ २६ ॥

## 'जैण्टिलमैन' कवचम् ।

ततो 'जैण्टिलमैनेन' कवचेनाऽऽवृतो भवेद् ।
येन गुप्तोऽन्यथासिद्धः पञ्चमोऽपि महीयते ॥ २७ ॥
पादौ 'बूट' धरः पातु गुल्फौ 'जुर्राब' जूडितः ।
नितम्बौ जानुनी जङ्घे पातु मे 'पतलून' धृक् ॥ २८ ॥

कटिं 'पेटं 'पेटिका' च 'सेफ्टीलेद्र' गुह्यकम् ।
'तस्मै तग' ततः स्कन्धौ, हृन्मे 'वैस्टेरण्ड वाच्' तथा ॥ २६ ॥
'टाई' 'बो' 'कालर' ग्रीवां 'दस्ताने' पान्तु चाङ्गुलीः ।
मणिबन्धं 'रिस्टवाचः' करौरो 'बटन' 'स्टडे' ॥ ३० ॥
मुखं मे 'पौडरः' पातु, नेत्रे 'न्यूफ्रेम ऐनकः' ।
काकपुच्छोऽवताद् भालं मूर्द्धानं 'हैट' रक्षतु ॥ ३१ ॥
कायं 'कोटकमीज़ौ' मे सर्व्वतः पातु 'ओवरः'
नासामलं 'रुमालश्च' घ्राणम् 'ओटोलवेण्डरौ' ॥ ३२ ॥

इति श्रीफैशनाचार्य्यकृतायां 'दुडे'स्मृतौ दिनचर्य्यानिरूपणं नाम द्वितीयोऽध्यायः ।

× × × ×

## भक्ष्याऽभक्ष्यनिर्णयः ।

यद्दुत्थानयितुं शक्यं क्षेप्तुं निर्गलितुं तथा ।
तत्सर्वं "नेचुरल्" भक्ष्यमभक्ष्यं त्वितरन्मतम् । ३३ ।
'टेबलं' पुरतो धृत्वा 'चेयर' स्थगुदः पुमान् ।
'सूटिडो' 'बूटिडो'ऽश्नियात् 'छुरिका-कण्टका'ऽन्वितः । ३४ ।
'बराण्डीं' 'बिस्सकीं' 'पेगं' मध्ये मध्ये पिबेन्मुहुः ।
कुक्कुटाण्डञ्च फलवद् ग्राह्यं सर्वेषु कर्म्मसु ॥३५ ॥

## इतरे आचाराः ।

न शिखां धारयेत् प्राज्ञः 'टेनिसे' हास्यकारणीम् ।
न सूत्रं बिभृयात् स्नाने सोपमर्दनरोधकम् । ३६ ।
'पपी पपी' समुच्चार्य्य प्रेम्णा 'सिटी' समन्वितः ।
करेण चुटकीं दत्त्वा रक्षेत् कुक्कुरशावकम् । ३७ ।
न वदेद् 'भारतीं' भाषां प्राणैः कण्ठगतैरपि ।
हस्तिना ताड्यमानोऽपि न गच्छेद् 'देवमन्दिरम्'* । ३८ ।

* यदि केनचिन्महोदयेन अस्या अवशिष्टांशो माधुर्य्यां प्रकाशितो दृष्टः स्यात्; तर्हि स प्रकाशनाय 'सूर्य्योदये' प्रदेयः ॥ अस्माभिरीदृक्स्मृति—प्रकाशनाय अज्ञातमहाभागो भूयो धन्यवादास्पदीक्रियते ।

# होलापञ्चकम् ।

[ ले०—पं० श्रीभूपनारायणझा शर्माः ]
( व्याकरण–न्यायाचार्यः साहित्यरत्नञ्च )
प्रधानाध्यापकः हाजीपुरीयरत्नाकरसंस्कृतविद्यालयस्य ।

—:०:०:※:०:※:०:०:—

भङ्गाऽऽधानादभङ्गादुपचितमदतस्त्वङ्गदङ्गारढकाः
दिक्कान्ता स्वान्तमुत्कं विरचयितुमिवोदीरिताश्लीलवाक्याः ।
उत्कीर्णैरक्तचूर्णैररुणितगगनानादनिन्द्याम्बुमुक्ताः ।
ढक्काः सन्नाद्य रथ्यास्वहरहरधुना मानवाः प्रोल्लसन्ति ।। १ ।।
वर्षीयांसः शिशूनां सरभसमरुणीभावयन्ते कपोलं-
स्कन्धावारुह्य तेषां सितचिकुरचयं तेऽपि संरञ्जयन्ति ।।
यूनां किंवर्ण्यमुद्यन्मदनमदभरादुद्धतानान्तु, होला—
वेलायामस्ति भेदस्तरुणिमजरसोः शैशवात् को न जाने ।।२ ।।
श्रुत्वाऽऽयान्तं वसन्तं किमुत तदुचितस्वागतं कर्त्तुकामाः ।
शृङ्गारेणाभिरामाः श्रवणसुखकिरः सङ्गिरन्तो गिरः स्वाः ।
साकं स्वीयैः सुहृद्भिः समुरजमधुरध्वानमध्वानमध्या-
रुह्याऽऽनेतुं विदूरात्सुतरुणनिवहाः साम्प्रतं संयतन्ते ।। ३ ।।
दम्पत्योरङ्गसैन्यैर्निजशयनतलप्राङ्गणान्तर्निकामे-
संग्रामेऽन्योन्यकीर्णाः सकुतुकमरुणारेणवोरोद्धुमक्ष्णी ।।
श्रावंश्रावं निशेशाधिकतरसुषमां संदिदृक्षूणि साक्षा-
न्नक्षत्राणीव सूक्ष्माण्यभियुवतिमुखं भान्ति खादापतन्ति ।। ४ ।।
दृग्द्वन्द्वे विन्दमाने क्षणमरुणरजोरोधमम्भोरुहाक्ष्याः ।
संलक्ष्याशून्नतीहोजनि युगमरुणीभावितं नायकेन ।।
तद्वक्षश्चारुवक्षोपरि परिलसितं लोहितं पाकयोगाद्-
भोगायेवाप्यकाले सुकृतशतवतो भाति चूतप्रसूतम् ।। ५ ।।

श्राद्धकर्मणि परमोपयोगिनी निगद्यते। ब्राह्मणानामात्मबलं यजमानं श्राद्धकर्तारं दत्तावलम्बं करोति, एकत्रिंशत्तमेऽस्मिन्नध्याये नचिकेतस उपाख्यानं यदुपवर्णितं विद्यते तस्याप्यलौकिकं रहस्यं कठोपनिषद्भाष्ये समुपनिबद्धमस्माभिरतस्तद्दिदृक्षुभिस्तत्रैव कर्णेहत्य द्रष्टव्यम् ॥ १६-२९ ॥

## श्राद्धतत्त्वे ब्रह्मचर्य्यभङ्गदोषरहस्यम् ।

एकत्रिंशत्तमेऽध्याये श्राद्धभोजिनां श्राद्धकर्तॄणाञ्च संयमनियमादिविधाने बहु विस्तृतं विवेचनं कृतं विद्यते। तस्येदं रहस्यमवगन्तव्यम्—तथाहि—श्राद्धे सर्वस्यापि कर्तुर्भोक्तुर्वा प्राणमयकोषस्य मनोमयकोषस्य च साहाय्यं नितान्तमपेक्षितं भवतीत्यत एव वीर्य्यधारणादि-संयममहिमाख्यानं प्राधान्येनोपात्तम् ॥ ३०-३५ ॥

## द्वात्रिंशत्तमाध्याये समुपात्त--वार्द्धीनसशब्दव्याख्यानम् ।

वार्द्धीनसो नाम छागविशेषः जलपानावसरेऽयं कर्णनासिके अपि जले पातयित्वा जलं पिबति। लक्षणमस्येदं शास्त्रे समुपलभ्यते—

त्रिपिबन्तं कृतक्लीवं श्वेतं वृद्धमजापतिम् ।
वार्द्धीनसं तु तं प्राहुर्मुनयो यज्ञकर्मणि ॥

## श्राद्धीयद्रव्यादिविज्ञानम् ।

द्वात्रिंशत्तमेऽध्याये श्राद्धोपयोगिपदार्थविज्ञानवर्णनप्रस्तावे प्रसङ्गतः प्रमावश्यकीयविषयाणां शङ्कासमाधाने प्रतिपादयति। वेदाः शास्त्राणि चान्तर्दृष्टिपरिपूर्णानीत्यतो द्रव्यविशेषे मांसविशेषे च गुप्तरूपतो निहितान् गुणविशेषान् लक्षयित्वैव श्राद्धीयपदार्थानां विशिष्टमहिमानं लक्षयन्ति। यतश्च लोकान्तरे विशिष्टगुणशालिनः पदार्था विशिष्टान्येव फलानि सञ्जनयन्तीति विज्ञानाभिप्रायकमेव श्राद्धे पदार्थविशेषोपादानम् भवति, इत्यभिप्रायेणैव ब्राह्मणानां योग्यायोग्यत्वविचारो विद्यते। यतो हि योग्यब्राह्मणसत्त्वे तदीयप्राणमयमनोमयकोषशक्तिसाहाय्योपलब्ध्या मृतस्य परलोकान्तरितस्य जीवस्योपकारातिशयः सम्पाद्यते। योग्यब्राह्मणाभावे निवृत्तिपरस्य सन्यासिनोऽनधिकारिणोऽपि सतः श्राद्धे पूजनं विहितम्। यतो हि प्रवृत्तिकर्मणि श्राद्धे निवृत्तिप्रधानस्य संन्यासिनो निषेधो विज्ञानसिद्ध एव। तथापि तत्र तस्य पूजनस्येदमेव तात्पर्यम् यदन्तर्दृष्टिसम्पन्नानां ब्राह्मणानामभावे सन्यासिनामेवान्तर्दृष्ट्या संयमितमनोमयप्राणमयकोशाभ्यां तत्र कर्मणि लाभः स्यादिति

तथैवास्मादेव विज्ञानात् योगिनामपि तत्र श्राद्धे पूजनं प्रशस्तं गण्यते। यतो हि योगिनां समाहितं योगक्रियासम्पन्नमन्तःकरणं स्वभावत एव शक्तिशालि व्यापकञ्च भवतीति तदुपादानं सर्वाभ्यर्हितम् ।

योगिनामन्तःकरणं योगबलोपेतं सत् प्राणसंयमात्मनसश्चैकतत्त्वानुसन्धानादतिदृढं भवति । यद्बलेन योगी लोक-लोकान्तरेष्वपि स्वमनोगतिं प्रेरयितुं समर्थो भवति। आहोस्वित् योगप्रभावोपहितं समाहितं तदीयं चित्तं धारणाबलात्स्वत एव लोकान्तरमृच्छति । इत्थञ्चेदृशप्रभावोपपन्नस्य योगिनः परलोकान्तरितजीवकल्याणकामनोदयो भवतु वा न भवतु तस्य तत्र श्राद्धे तृप्तिलाभेनैव यजमानस्य श्राद्धसम्बन्धिन उद्देश्यस्य पूर्तिरवश्यम्भाविनीति विज्ञानमूलकमेव श्राद्धे परलोकान्तरितजीवपरमकल्याणकामनया, योगिनः पूजनतर्पणमाहात्म्याभिधानम् ।

## पितृगणकृपया मोक्षाधिगमरहस्यम् ।

इह द्वात्रिंशत्तमेऽध्याये पितृणां स्वस्यामुक्तत्वेऽपि स्वयजमानाय मुक्तिप्रदत्वम् यदुपनिबद्धम् तत्कथं सम्भवतीति शङ्कायाः समाधानमाह ।

यथा काशीमधिवसन् कोऽपि दुराचार आत्मज्ञानविरहितोऽपि पुमान् दैववशात् कदाचित्तत्र पञ्चत्वमापद्येत चेत्सोऽवश्यं मुक्तो भवति। तद्वदेव अमुक्तेभ्योऽपि पितृगणेभ्यो यजमानस्य मुक्तौ न कोऽपि सन्देहो विधेयः । काश्यां मरणकाले काशीपति-सदाशिवानुग्रहेण तथा काश्या आकाशस्य वायुमण्डलस्य च शक्तिविशेषेण काशीमृतस्य प्राणिन आत्मा मरणान्तकाले ज्ञानालोकमृच्छति । ततश्च सजीवो ज्ञानाधिकारी भूत्वा मोक्षमधिगच्छति, तथैव परम्परारूपेण साहाय्यमाश्रित्य यजमानः स्वसेवया प्रसन्नेभ्यः पितृगणेभ्यः समुपलब्धप्रसादेन निजाज्ञानमलं दूरीकृत्य श्रद्धया च पितृलोकाधिपतिं यमं धर्मराजं प्रसन्नं विधाय तदीयानुग्रहेण स्वविक्षेपात्मकञ्चाज्ञानं विनाश्य जन्मान्तरे तत्त्वज्ञानी भवन् स्वावरणं सर्वथा विलीनं विदधत् ध्रुवं मोक्षपदमधिगच्छतीति नाणुरपि सन्देह इहानुसन्धेय इति ॥ ३१—३८ ॥

तृतीयाध्यायटीकायामिदं प्रमाणितमस्माभिर्यत् पितृयज्ञात्मकश्राद्धकर्मानुष्ठानेन लोकान्तरवासिनः पितृपितामहादयः कथमाप्यायन्ते कथञ्च तैः श्राद्धयज्ञफलमासाद्यते, कथञ्च तेन तेषां तृप्तिरिति । तदतिरिक्तानामन्यासामपि कतिपयानां श्राद्धकर्मसम्बन्धिनीनां शङ्कानां समाधानमपि तत्रैव विहितम्। इदानीन्तु तदतिरिक्तानामन्यासामपि सम्भाव्यमानानां

शङ्कानां समाधानं जिज्ञासुचित्तपरितोषाय विधातव्यमिति परमोवश्यकं मत्वा संक्षेपेणोपक्राम्यते —

श्राद्धं हि अर्य्यमादि-नित्यपितृगणानां नानुष्ठीयते यतो हि पञ्चमहायागान्तर्गतपितृयागेनैवार्य्यमादिनित्यपितृगणानां साक्षात्सम्बन्धसत्वात् तत एव ते तृप्तिमनुभवन्ति । पूर्वाध्याये यच्छ्राद्धवर्णनं विद्यते तद्धि परलोकगामिभिर्नैमित्तिकपितृभिरेव सम्बध्नाति । यावद्धि जीवो गतागतचक्रेण परिभ्राम्यंल्लोकाल्लोकान्तरमृच्छति, तावत्सोऽवश्यं पौनःपुन्येन मर्त्यलोकेऽस्मिन्मातृगर्भवासमनुभवति । अतश्चेह मृत्युलोके स्थूलशरीरप्रदयोर्मातापित्रोरेव प्राधान्येन तत्सम्बन्धिनाञ्चान्येषां गौणतया श्राद्धकर्मणा सम्बन्धः प्रतीयते । एवञ्च नैमित्तिकपितृगणानां प्रसन्नतया जीवश्चतुर्वर्गप्राप्तौ साहाय्यमधिगच्छतीति सुनिश्चितम् । विशेषतिथिनक्षत्रादिविशिष्टकालेषु श्राद्धानुष्ठानस्य वर्णितं विशेषफलं यद्यपि रोचनार्थकवद्विभाति; तथापि कर्मविपाककर्म्मशक्त्योरलौकिकतया तस्य तथ्यफलावाप्तौ नाणुरपि सन्देहः ।

इत्थञ्च श्राद्धकर्मणो वैशिष्ट्यविधाने पुराणपाठकानां बहुशः शङ्काः समुदेतुमर्हन्ति । तथा हि—श्राद्धकर्मणि मांसदानस्य विधानं किंमूलकमिति ? विविधपशूनां मांसार्पणस्य पृथक्विभिन्नफलविधानं किन्निदानकमिति ? कथञ्च विशिष्टपर्वतिथिवारादिषु श्राद्धानुष्ठानस्य विशेषफलकीर्तनम् ? कथं वा श्राद्धसमये दैवकर्मसमूहस्याननुष्ठाननियमः ? कथञ्च श्राद्धकर्मणा द्वैविध्यविधानम् ? कथञ्च श्राद्धकर्तुर्देहस्रुतजलेन ब्राह्मणानामाचमनोदकचरणोदकाभ्याञ्च पितृगणानां तृप्तिरिति ? इत्यादिसमुद्भूतानां समुचितानां शङ्कानां समाहितिरावश्यकी । यतो हि विनैतादृशीनां शङ्कानां समाधानं श्राद्धप्रकरणस्य विस्पष्टार्थकत्वं नैव प्रकाशत इति ।

सूक्ष्मदृष्ट्या जीवजगतः पर्य्यालोचनयेदं स्फुटं प्रतीयते यज्जीवैर्जीवान्तराणां रक्षा पुष्टिश्च भवत इति । उक्तञ्च श्रीमद्भागवते—

"जीवो जीवस्य जीवनम्" इति ।

जीवबलिमन्तरा जीवजगतो रक्षा नैव सम्भवतीति सर्वतन्त्रसिद्धान्तः । जीवो हि जीवान्तरस्य रक्षको भक्षकः पोषकश्चोच्यते । जीवेषु परस्परं रक्ष्य-रक्षकभावो भक्ष्य-भक्षकभावः पोष्य-पोषकभावः सर्व एवास्ति सम्बन्धः । एको हि जीवो जीवान्तरस्यान्नमुच्यते । यतो हि प्राणस्थापकस्यैव वस्तुनोऽन्नमिति संज्ञानम् । एवञ्च येनावस्करादिनोद्भिज्जजगतः पुष्टिर्भवति, तद्धि द्रव्यजातं जीवजगतः

एव परिणाम उच्यते। स्वेदजजीवेषु यदा रोगप्रदकीटाणूनां बली रोगघ्न-कीटाणुभिरनुष्ठीयते तदैव सृष्टिसामञ्जस्यं समेधते।

नारीरजःकीटाणवो यदा पुंवीर्य्यकीटाणूनात्मसात्कुर्वन्ति तदा सृष्टि-समुद्गमो भवति। जलवायुव्यवहारेणानन्तानां स्वेदजकृमीणां प्रतिक्षणं क्षय-करणमन्तरा न केऽप्यण्डज-जरायुज-मनुष्ययोनिजाः जीवाः प्राणितुमर्हन्ति। यतो हि एकस्मिन्नपि क्षणे श्वासप्रश्वासाभ्यां यावत् बहिस्थो वायुः प्राणमाप्याययति तावदेवागणिताः स्वेदजाः कृमयो विनाशमायन्ति। इत्थञ्च यो हि जल-बिन्दुरुदरे गच्छन्प्राणक्रियायां सामञ्जस्यमादधाति तस्मिन्नेकस्मिन्नेव सहस्रशः स्वेदजाणवो विनाशमनुभवन्ति।

उक्तञ्च—"सूक्ष्मयोनीनि भूतानि तर्कगम्यानि भारत,

पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्य्ययः" इति

वर्तमान-विज्ञान-यन्त्रेण विषयोऽयं प्रत्यक्षीकृत एव विद्यते। नास्त्यत्रा-णुरपि सन्देहावसरः। एवं सति हि सात्त्विकशिरोमणिः संयमप्रधानोऽहिंसका-ग्रणीरपि पुमान् येन केनापि दध्ना, दुग्धेन, गोधूमेन, चणकेन, तण्डुलेन, फलेन, मूलेन, शाकेन, वनस्पतिपत्रादिना वा स्वप्राणरक्षां विदधाति तत्र सर्वत्रैव जीव-सत्ता नैव व्यभिचरति। ते सर्वेऽपि पदार्थाः प्राणभृतः तेषामभ्यवहरणेनावश्यं जीव-हिंसा भवत्येवेति निर्विवादसिद्धम्। इत्यादिविमर्शजातेनेदमेव सिध्यति यद्विना जीवबलिदानेन कस्यापि जीवस्य जीवनयात्रा क्षणमपि न प्रचलितुमर्हतीति। अपरतश्च जीवबलिमन्तरा सृष्टि-सामञ्जस्यमपि न रक्षितुं पार्य्यते। तथा हि व्याघ्रसिंहादयो जन्तवो यथा मृगादिक्षुद्रजन्तूनां हिंसकास्तथा मृगादयोऽपि वनस्थोद्भिज्जजन्तूनां विनाशकाः। वनेषु व्याघ्राणां रक्षा व्याघ्रैश्चारण्यरक्षा भवति। इत्थञ्चोद्भिज्जयोनिगजीवै मृगैः व्याघ्रादिभिश्च परस्परं खाद्यखाद-कभावसम्बन्धोपज्ञमेवारण्यसृष्टिसामञ्जस्यं समेधते।

एवं सति कथमहिंसासार्थक्यमित्यवान्तरप्रश्नोऽत्रोपतिष्ठते। तस्य समाधानमपीदमवधानीयम् यद्—मनोवाक्कायकर्मभिः कस्यापि प्राणिनः क्लेशोपलम्भाभाव एवाहिंसा निगद्यते। तथा चानेन विज्ञानेन निम्नजीव-जगतोऽहिंसाऽपेक्षिकतारतम्येनैव विज्ञातुं शक्यते। यत्र हि जीवबलिरनिवार्य्य एव प्रतीयते। तत्रोच्चश्रेणिगजीवान् विहाय निम्नश्रेणिगजीवविहिंसया स्वकार्य्य-निर्वाह एवापेक्षयाऽहिंसा भवति। इत्थञ्च यद्यपि तण्डुलाद्यन्नग्रहणेऽपि हिंसा विद्यते परन्तु तत्र मृगादिमांसापेक्षया हिंसाया न्यूनत्वमित्यसन्दिग्धम्। प्रस-ङ्गतोऽत्रेदमप्यभिधातुं शक्यते यदितरमानवश्रेणिभिः सहापरमनुष्यश्रेणीनां

युद्धनिर्घोषेणापि सुप्रिसामञ्जस्यमेव सुरक्ष्यते। तत्र युद्धस्य हिंसाप्रधानतया युद्धान्तरापेक्षया धर्मयुद्धे शस्त्रात्मकेऽशस्त्रात्मके वा आपेक्षिकी अहिंसा विद्यत एव। तद्वद्धि पूर्वोक्तविज्ञानानुसारं यदि मांसप्रयोगः संस्कारपूर्वकः स्यात्तर्हि न स धर्मविरुद्धो भवति। जीवानां स्वाभाविकोऽस्वाभाविकश्चो-भयोऽपि संस्कारो जीवहिंसामूलक एवेति। मनुष्ययोनावपि भोग-सम्बन्धतो-ऽन्नरूपेण सर्वत्रैव मांसग्रहणं दृश्यते। अनादिकालतश्चैतद्व्यवहारप्रवृत्या मांस-ग्रहणं भोगस्यैकं प्रधानमङ्गं गण्यते इत्यत्र नास्ति सन्देहलेशः।

यद्यपि मनुष्यलोके सात्त्विकाचारवृत्तिधारणादिविशिष्टेषु ब्राह्मणादिषू-न्नतवर्गेषु मांसनिरोधः सर्वथोपलभ्यते। तथापि भोगस्वातन्त्र्यकाले तस्य प्राचीनस्य भोगसंस्कारस्य पुनरुदये नाणुरपि सन्देहः।

मृत्युलोकेऽपि सर्वथैवेदमुपलभ्यते यद् राजसिका जना मांसभक्षण-प्रवृत्तौ स्वतः प्रवृत्तिभाजो भवन्ति। ईदृशमेव सूक्ष्मेषु दैवलोकेष्वपि यत्र भोगपरायणायाः सर्वस्या अपि इच्छाशक्तेः प्राबल्यं समुज्जृम्भते, तत्र पूर्वाभ्य-स्तमांसभक्षणसंस्कारदार्ढ्येन तद्भक्षणार्थं परलोकगतानां तादृशानामात्मनां प्रकृतिप्रवृत्तिसमुद्रेकोऽप्यावश्यक एव। अतश्च तादृशानां स्वर्गतानां नरकलोका-श्रितानां प्रेतयोनिभाजामप्यात्मनां तृप्त्यै मांसवस्तु पर्य्याप्तत्वेन गण्यत इत्यत्र कः शङ्कावसरः? तत्रापि सर्वोच्चलोकेषु ये समुन्नता ऋषिदेवादियोनयो जीवा विराजन्ते, तेषां न भवतीदृशानां राजसिकभोगानामावश्यकत्वम्, किन्तु भोग-परायणानां तत्रैव राजसिकतामसिकजीवानां परलोकवासिनां मांसार्पणमाव-श्यकमेव।

मत्स्य-मांसयोरुभयोरपि मांसान्तर्भावेऽपि प्रतिप्राणि मांसपरमाणुभेदस-त्त्वेन प्राणिनां प्रकृति-तारतम्येन शक्तितारतम्यसत्त्वात् विविधप्राणिमांसानां पृथक्तया फलभेदः श्रूयते। अतश्च श्राद्धे मांसप्रयोगो मीमांसाशास्त्रानुकूल एव ज्ञेयो न प्रतिकूलः। तस्मिन्नेव श्राद्धविधौ यत्र मांस-विधानं विद्यते, तत्रैव हविष्यान्नदुग्धफलादीनामपि विधिरुपलभ्यत इति श्राद्धे श्राद्धकर्तुः प्रकृति-प्रवृत्यानुकूल्यमेव हेतुर्मांसप्रदानाप्रदानयोः।

अन्यतश्च हिंसाविषये समाधानमिदमवधेयं विद्यते यत् जीवहिंसया पापोद्रेकस्त्वावश्यकस्तथापि पितृयज्ञदेवयज्ञयोः बलित्वमुपगतस्य पशोरभ्यु-दय एव भवति। यथा अच्छेद्यस्यापि अश्वत्थवृक्षस्य याज्ञिकाः यज्ञहेतवे छेदनं कुर्वन्त्येव। तेन कर्म्मणा न याज्ञिकानां क्षतिर्भवति प्रत्युताश्वत्थगस्य जीवस्य तेन यज्ञीयेन कर्मणाऽभ्युदय एव भवतीति विभावनीयम्। विशेष-

तश्चैवंविधानां हिंसाजन्यपापानां भूतयज्ञद्वारा परिहारोऽपि भवतीत्यपि शास्त्रीयः सिद्धान्तः ।

श्राद्धकर्मणि मृत्युतिथिः पर्वतिथिश्चेति द्वे अपि तिथी शास्त्रसम्मते स्तः । तदीयं विज्ञानमधो विव्रियते । तद्यथा देशेन सह कालस्य कालेन सह प्रकृतेः प्रकृत्या चात्मनः पारस्परिको घनिष्ठः सम्बन्धो वरीवर्ति । तेन च तत्र मृतकस्य जीवस्य मृत्युतिथौ श्राद्धानुष्ठानेन श्राद्धक्रियायामवश्यं साफल्यमुपैति । यतो हि तस्यास्तिथेरधिष्ठातृदेवो यथायथं तत्र श्राद्धक्रियायाः साफल्यविधानार्थं सर्वथा यतते । अपरतश्च पर्वतिथेः पुण्यजनकतया तत्र पुण्यवृद्ध्या तत्तत्पर्वणोऽधिष्ठातृदेवानामनुग्रहेण च तत्र श्राद्धक्रियायां विशिष्टशक्तिसञ्चारो भवतीति सुनिश्चितोऽध्वा ।

समाहितचित्तेन पुंसा श्रद्धया भक्त्या च विहितं श्राद्धकर्म सर्वस्मिन्नपि काले देशे वा तन्मानसबलमादाय साफल्यमधिकं समश्नुते । यतो हि पञ्चकोशानां सर्वव्यापकतया योगयुक्ततया समाहितं मनः सद्यदेव एकस्मात्पञ्चकोशकेन्द्रात्पञ्चकोशान्तरकेन्द्रं संसर्पितुं द्रुतमेव प्रभवति । अतश्च श्राद्धक्रिया पर्वतिथिमृतकतिथिव्यतिरिक्ते यस्मिन्कस्मिन्वा दिने सत्यां श्रद्धायामनुष्ठातुं शक्यत एवेति संक्षेपः । अत्र हि मनसो विशिष्टसंयमापेक्षेति निर्विवादसिद्धम् ।

बहुशः खलु पितृलोकदेवलोकयोरान्तर्य्यं पूर्वमुक्तमस्माभिः । पितृलोकदेवलोकसम्बन्धिनो राज्ञोः प्रजयोः प्रकृत्योश्च पार्थक्यसत्त्वात् तत्सम्बन्धिनोः कालयोरपि पार्थक्येन एकदैव तयोर्द्वयोरपि सम्बर्द्धनक्रियासमुद्रेकासम्भव एव । अत एव पितृश्राद्धावसरे देवकार्य्यं प्रायो निषिध्यत एव । नित्यपितृसम्बन्धिनां नान्दीमुखादि-श्राद्धानामनुष्ठानन्तु देवकार्य्यैः सह क्रियत एव । यतो हि वरुणादिदेववदर्यमादिपितृगणा अपि देवश्रेणिगा एव गण्यन्ते । केवलं वास एव तेषां विभिन्नो विद्यते । तथा हि नित्यदेवानां वासो देवलोके नित्यपितॄणान्तु पितृलोक इति ।

ननु पितृकर्मणि पितॄणां कृते देवकर्मणि देवानां च कृते यद् ब्राह्मणवरणं भवति तस्य कोऽभिप्रायः ? इति प्रश्ने समुत्तरयति—जीवो मृत्वा प्रेतयोनिगो भूत्वा मृत्युलोके भ्रमति, अथवा पितृलोके नरकलोके वा गत्वा तत्स्थसुखदुःखे अनुभवति । आहोस्वित्तिर्य्यग्योनिगो भवन् कर्मफलमुपभुङ्क्ते । सर्वेऽपीमे धर्मराजस्य भगवतो यमस्यैवाधीना गण्यन्ते । आहोस्विद् बहवस्तु मृत्वा उन्नतेषु स्वर्गलोकादिषु गच्छन्ति । यत्र भगवान् इन्द्रोऽधिकारी कथ्यते । इत्थं च मृतकस्य जीवस्य परलोकनिवासनिश्चयाभावात् श्राद्धकर्मणः

प्रधानयन्त्रस्थानीयानां ब्राह्मणानां वरणे देवपितृभेदेन विधिद्वैविध्यमाश्रीयते। अस्मादेव पार्थक्यभावात् श्राद्धादिषु पितृकर्मसु यथा देवानामावाहनं न भवति तथाग्निष्टोमादिषु दैवकर्मसु पितृणामपि आवाहनं नैव भवतीति।

इदञ्च प्रागेव प्रमाणितम् यत्पञ्चस्वपि कोशेषु प्राणमयमनोमययोरेव कोशयोः पितृकार्य्येणातिशयः सम्बन्धः। अतश्च श्राद्धकर्त्ता यजमानो यदि स्वयमबलेन प्राणमयकोशं सात्त्विक्या श्रद्धया च मनोमयकोशमुभयमपि तत्र नियोजयेच्चेत् तदा शरीरात्मकस्यान्नमयकोशस्य क्रिया तु सुतरां तादृश्येव भविष्यतीति निर्विवादसिद्धम्। तदा हि तदीयशरीरजलेन वस्त्रजलेनापि पितृक्रिया सुसम्पन्ना स्यादित्यत्र कः सन्देहः। इदमपि निरूपितमेव पूर्वं यत् श्राद्धादिकर्मणां स्थूलाः क्रियाः स्थूलाः पदार्था वा तेनैव रूपेण परलोके नोपतिष्ठन्ते, किन्तु प्राणमय-मनोमयकोशसाहाय्येन रूपान्तरमाश्रित्यैव तेषां तत्रोपस्थानं भवति।

द्वितीयतश्च श्राद्धकर्मणि व्रियमाणानां ब्राह्मणानां त्रिविधशुद्धिशालितया सत्यब्राह्मणत्वसत्वे तेषामध्यात्मशुद्ध्या स्वान्तःकरणस्य सदैव स्वस्वरूपात्मकब्रह्मपद-लीनतया तेषां ब्रह्मीभूतस्थूलशरीरसम्बन्धभाजा चरणोदकेन सर्वविधानामपि पितृगणानां तृप्तिर्भवतीत्यत्र कः सन्देहः ॥ ८–१६ ॥

## विराड्ब्रह्मणोऽर्चास्वरूपनिरूपणेन सह सदाचारविज्ञानरहस्यप्रकाशनम्।

अस्मिन्नध्याये प्रथमतः भगवतो विराड्रूपस्य पूजनाचाराणां स्वरूपदिग्दर्शनं कारयित्वा गृहस्थाश्रमस्य सामान्याचारा निरूपिताः सन्ति। जगतो ब्रह्मात्मकत्वमवधार्य्य परोपकाराय परमोपकाराय च यानि साधनान्यभिहितानि तान्येव विराड्ब्रह्मणः पूजनमभिधीयते। पञ्चमहायज्ञप्रभृतयो यावन्तो हि स्थावरजङ्गमजीवसाहाय्याधायका महायज्ञाः सन्ति ते सर्व एव विराड्ब्रह्मणोऽर्चनमुच्यते। धर्मानुकूलशारीरिकव्यापाराणामेव आचारः सदाचारो वेति संज्ञानम्। यैश्च शारीरिकव्यापारैस्तमोगुणवृद्धिनिरोधेन सत्त्वगुणानां वृद्धिर्भवति त एव सदाचारशब्दवाच्या अभिधीयन्ते। दार्शनिकदृष्ट्या निरीक्षणेनेदमेव स्फुटं सिध्यति यदुपरि निर्दिष्टा यावन्त आचारा अभिहिताः सन्ति तेषां सर्वेषामेव पालनतः साधकेषु तमोगुणस्य ह्रासः सत्त्वगुणानाञ्च वृद्धिर्भवत्येवेति निश्चप्रचम्। ते च साधकाः स्वत एव धर्मपथपथिका अपि भवन्त्येवेति निःसन्दिग्धम्। एषु च सदाचारेषु केचन आचाराः तमसो ह्रासकारकत्वेन निबद्धाः, केचन सत्त्वगुणानां वृद्धिलक्ष्यतया प्रतिष्ठापिताः। केचन तु उभयदृष्ट्यैव निबद्धाः सन्ति। प्रतिसदाचारं दार्शनिकदृष्ट्या गवेषणायां

कृतायामयमेव सिद्धान्तोऽवसीयेत । अतश्च सदाचारानुष्ठानं सर्वस्यैव मानवसमाजस्याभ्युदयसाधकमित्यवश्यकर्तव्यम् ॥ १–११८ ॥

## सनातनधर्मस्य विश्वव्यापकतानिरूपणप्रसङ्गतः तदीयसदाचाराणां धर्माधर्म्मप्रसवकत्वविज्ञानम् ।

सनातनधर्मस्य सर्वव्यापकत्वं सर्वशक्तिशालित्वञ्च प्रसिद्धमित्यस्मादेव हेतोः तत्र धर्मे भक्ष्याभक्ष्यस्पर्शास्पर्श-शुद्धाशुद्धादिविचारव्यवस्थायां पाने वस्त्र-परिधाने आभरणादिधारणे सर्वत्रैव तमोगुणसतोगुणयोः ह्रासवर्द्धनविधया-ऽधर्मधर्म्मव्यवस्थानं शास्त्रप्रतिपन्नं परिदृश्यते । उपरिनिर्दिष्टद्रव्यशुद्धि-विज्ञानमूलभित्तावपि इममेव सिद्धान्तमाश्रित्य शुद्धिक्रियाया विधानवैचित्र्यं विद्यते । इदमेव विज्ञानं लक्ष्यीकृत्य भोजने स्पर्शे च दोषगुणानुकीर्तनं शास्त्रे समुपलभ्यते, दोषाणाञ्च तदनुगुणं प्रायश्चित्तमप्युपलभ्यते । इत्थमेव स्त्री-समुचितानां सदाचाराणां गृहकृत्यानां समाम्नानम् विभूतिमद्वनस्पतिपूजनम् बालाचारादिक्रियाकलापः, इत्यादीनां सर्वेषामपि दैवसम्बन्धतः सत्त्वगुण-वद्धर्कतया तमोगुणह्रासकत्वेनैवानुष्ठानं विहितं विद्यते । सर्वमपीदमन्त-र्दृष्टिसम्पन्नैः महर्षिभिर्लोककल्याणबुद्ध्यैवोपनिबद्धम् । एवञ्च मानवानां पातित्याशौचादिविज्ञानमपि अन्तःकरणेषु सम्भाव्यमानतमोगुण-सत्त्वगुण-प्रभाव-तारतम्यविचारेणैव वर्णितम् । सर्वमपीदं विज्ञानं मीमांसाशास्त्रे विस्तरेण विवेचितम् । अन्तःकरणे आवरकत्वेन पापस्य कीदृक्तमःपरिणामः प्रतिफलति, कीदृक् च आशौचशक्तिरन्तःकरणाकाशे विक्षेपावरणे उभे अपि जनयति, इत्यादि सर्वमेव विज्ञानं कर्ममीमांसाशास्त्रे समुद्धावितं विद्यते । सनातनधर्मीयानि स्पर्शास्पर्श-शुद्ध्यशुद्धि-भक्ष्याभक्ष्यविज्ञानानि मृताशौच-जननाशौचादिविज्ञानानि सदाचाररहस्यविज्ञानानि च अधर्मवर्द्धकस्य तमसो धर्मवर्द्धकस्य सत्त्वस्य विवेकेनैव कर्तुः शरीरान्तःकरणयोरुत्पद्यमानं तत्प्रभावपरिणामं विमृश्य त्रिकालदर्शिभिर्धर्माचार्यैरुपनिबद्धानि सर्वथा निर्णीतानि च ॥ १—५८ ॥

## हिन्दुसंस्कृतेः सार्वभौमस्वरूपपरिदर्शनम् ।

हिन्दुसभ्यता, वैदिकी संस्कृतिः, वैदिकञ्च विज्ञानं कियदौदार्य्यपूर्णं, सर्व-व्यापकं सर्वाङ्गपरिपूर्णमिति मदालसाचरितपर्य्यालोचनेन स्फुटं परिलक्ष्यते । या हि स्त्रीजातिः तपोमूलकधर्मानुष्ठानविधानेन पराधीनतया सर्वथा शास्त्रा-दिषु अस्वतन्त्रैव प्रतिपादिता तस्यामेव स्त्रीजातौ आर्य्यनारीरत्नस्यानोया श्रीमती

सनामीमांसात्मकस्य दैवीमीमांसाशास्त्रस्य सिद्धान्तोऽयमेवोद्घुष्यते यद्—योगसाधनबलेन चित्तवृत्तिनिरोधमधिगच्छन्नन्तःकरणान्तरायांश्च दूरीकुर्वन् भक्तेरचिन्त्यप्रभावप्रभावितो भूत्वा जीवोऽन्तर्जगति प्रवेशमातनुते। तत्र च क्रमशो भगवत्सान्निध्यमधिगत्यात्मज्ञानप्राप्त्या निर्वाणपदमृच्छति। एतच्च श्रीमता भगवता श्रीगीतोपनिषदि स्फुटमुदीरितम्—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥
बहूनां जन्मानामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥

(गीतोपनिषद् अ० १२)

कर्मकाण्डानुष्ठानसाहाय्येनाधिभौतिकीं शुद्धिमाश्रयता उपासनाकाण्डेन चाधिदैविकीं शुद्धिमधिगत्य ज्ञानमधिगच्छता ज्ञानिना परमात्मानञ्च "ब्रह्मैव जगदिति" जगदभिन्नत्वेन परिपश्यता उपर्युक्तभगवद्वाक्यसाफल्यमासाद्यत इति तात्पर्य्यमवसेयम्।

अपौरुषेयस्य वेदस्योपासनाकाण्डपरिपुष्टिकामनया परमकारुणिकेन महर्षिणाङ्गिरसाऽस्य दर्शनविज्ञानस्याविर्भावः सम्पादितः। ततश्च महर्षिणा शाण्डिल्येन भगवता शेषेण चाप्यस्य दर्शनविज्ञानस्य जगति प्रचारोऽप्यधायीत्युपलभ्यते।

उन्नतिपथपथिको ज्ञानसम्पन्नः पुमान् यदान्तर्जगति प्रवेशमातनुते, तदा दार्शनिक-दृष्ट्यैव स स्वगन्तव्यपदमासादयतीति सुनिर्णीतः पन्थाः। वेदा अभ्रान्ता इति तदीयदार्शनिक-विज्ञानमपि सर्वाङ्गसम्पूर्णमिति निर्णयः। इत्थञ्च-नियतविभागविभक्तानां तेषां दर्शनानां सप्तज्ञानभूम्यनुसारेण सप्ताख्यात्मकत्वमपि निश्चितमेव। तासां सप्तानां ज्ञानभूमीनां नामानि सलक्षणानि निर्दिष्टानि महर्षिभिः।

ज्ञानदा ज्ञानभूमेर्हि प्रथमा भूमिका मता।
संन्यासदा द्वितीया स्यात्तृतीया योगदा भवेत्॥
लीलोन्मुक्तिश्चतुर्थी वै पञ्चमी सत्पदा स्मृता।
षष्ठ्यानन्दपदा ज्ञेया सप्तमी च परात्परा॥

यत्किञ्चिदासीज्ज्ञातव्यं ज्ञातं सर्वं मयेति धीः।
प्रथमो भूमिकायाश्चानुभवः परिकीर्तितः।
त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः।
प्राप्या शक्तिर्मया लब्धाऽनुभवो हि तृतीयकः॥
मायाविलसितं चैतद् दृश्यते सर्वमेव हि।
न तत्र मेऽभिलाषोऽस्ति चतुर्थोऽनुभवो मतः।
जगद्ब्रह्मेत्यनुभवः पञ्चमः परिकीर्तितः।
ब्रह्म एव जगत् षष्ठोऽनुभवः किल कथ्यते॥
अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम्।
ब्रह्माहमस्मीति मतिः सप्तमोऽनुभवो मतः॥
इमां भूमिं प्रपद्यैव ब्रह्म सारूप्यमाप्यते।

सर्वेषु शास्त्रेषु प्रधानशास्त्राणि चतुर्व्यूहविभागसुरक्षितानि। तत्रेदमुपासनाकाण्डीयं दैवीमीमांसादर्शनमपि तन्नियमानुसारेण चतुर्व्यूहविभागसुरक्षितमित्यवगन्तव्यम्।

तथा हि सृष्टि-स्थिति-प्रलयस्वरूपनिरूपणमित्येको व्यूहः, एतत्त्रितयहेतु प्रतिपादनमिति द्वितीयो व्यूहः, भक्तिस्वरूपनिदर्शनमिति तृतीयः मुक्तिकारणाभिधानमिति चतुर्थो व्यूहः। चत्वारो व्यूहा इह दैवीमीमांसादर्शने संनिवेशिता इत्येतेषां चतुर्णामाश्रयेणैव मुमुक्षवो मानवा भवाब्धिपारमुत्तर्तुमर्हन्ति।

यथा हि पदार्थवादिनो नैयायिका वैशेषिकाश्च पदार्थ-विज्ञानेनैव तत्त्वज्ञानमुपदिशन्तो मुक्तिपथं परिष्कुर्वन्ति, योगदर्शनप्रणेता महर्षिः पतञ्जलिश्च योगदर्शनेनैकतत्त्वमुपदिशन् समाधिमार्गेण कैवल्यमादिशति। सांख्यमार्गोपदेष्टा कपिलोऽपि दुःखत्रयापसारणद्दिशैव प्रकृतिपुरुषभेदमुपदिश्य तद्द्वारा च पुरुषं प्रकृतिबन्धनान्मोचयितुमीष्टे। यथा कर्ममीमांसादर्शनं संस्कारशुद्धया क्रियाशुद्धया च मुक्तिमार्गं परिष्कृतं सम्मनुते तथैवेदं मध्यमीमांसादर्शनमपि भक्तिप्रधानतया श्रीमद्भगवद्भक्तिसाहाय्यबलेन त्रिविधामपि आध्यात्मिकाधिदैविकाधिभौतिकशुद्धिमुपदिशन्मुक्तिद्वारमुद्घाटयतीति सरलेयं सरणिः सर्वेभ्योऽपि मोक्षाभिधायिभ्यो दर्शनेभ्यः।

अन्तारा-यो-बहीराज्यापरपर्य्यायियोः सूक्ष्मस्थूलराज्ययोर्मध्यभागस्थितिशालितया योगदर्शनं यथा सर्वाविरोधितया सर्वजनीनहिताधायकं भवति, तथैवेदं दैवीमीमांसादर्शनमपि कर्म्मकाण्ड-ज्ञानकाण्डरूपोभयकाण्डमध्यवर्तितया सर्वाविरोधि सर्वहितकृच्चोच्यते।

यद्यपि दर्शनेषु प्रस्थानभेदनिमित्तमुपादाय परस्परं सिद्धान्तभेदो व्याक्रियत एव। तेषु चान्यतमेनान्यतममतखण्डनमपि क्रियमाणं परस्पर-ज्ञानभूमिभेदान्नैव विरुध्यते। तथापि दैवीमीमांसादर्शनेन कस्यापि दर्शनस्य किमपि मतं किञ्चिदपि न विहन्यत इत्येतस्य दर्शनस्य सार्वभौमाधिपत्या-त्मकं महत्त्वं सर्वाविरोधित्वरूपञ्च वैशिष्ट्यं प्रशंसनीयमेव।

यथा हि समतलात्मिकायां भूमौ पर्य्यटनशीलः पथिकः पार्वत्याधित्यका-पर्य्यटनकर्तृपथिक-भ्रमणक्रियां विनिन्द्य समतलीयभूमिभ्रमणं स्तुवीत, तद्वच्च पर्वतीयप्रदेशपर्य्यटनकुशलः पुमान् समतलस्थलाटत्स्यमानमानवक्रियां विगर्ह्य स्वभ्रमणकौशलं प्रशंसेच्चेन्नानयोः कस्यापि काऽपि हानिर्भवति, प्रत्युत देश-काल-पात्र-भेदादुभयोरपि भ्रमणोपदेशपद्धती विशेषोपकारिण्यावेव भवतः। तथा हि एकं दर्शनं दर्शनान्तरस्य प्रतितन्त्र-सिद्धान्त-सिद्धं पदार्थमाहो तदीयां विशेष-प्रतिपाद्यामेव वा सरणिं खण्डयद्दोषोद्धाटनमातन्वीत, तेन च तस्य निषेध्यस्य न काऽपि हानिः प्रत्युत—

"नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्ततेऽपि तु स्तुत्यं स्तोतुम्"

इति न्यायानुसारं तस्य दर्शनस्य समर्थनीयपक्षपुष्टिरेव भवति। अधिकन्तु तया पद्धत्या तदीय-सिद्धान्तस्य दार्ढ्यमेव जायते। एवं सत्यपि दैवी-मीमांसाऽपराख्येऽस्मिन्नुपासनादर्शने नैव काऽपि खण्डनमण्डनसरणिः सम-र्थिता। किन्तु स्वप्रतिपाद्यमेव सारल्येन स्फुटं मञ्जुलमसृणभाषया विवृतमिति सर्वदर्शनाभ्यर्हितत्वं सार्वभौमदृष्टिविस्तरणमस्य दर्शनस्यावश्यंप्रशंस्यं मह-त्त्वपरिपूर्णञ्च। सर्वस्यापि शास्त्रस्याऽयं सर्वतन्त्रसिद्धान्तसिद्धोऽर्थो विद्यते यत्—

"ब्रह्माद्या ऋषिपर्य्यन्ताः स्मर्त्तारो न तु कारकाः"

इति सर्वेऽपि ब्रह्मप्रभृतयो महर्षिपर्य्यन्ताः शास्त्रप्रणेतारस्तेषां शास्त्राणां स्मर्तार एव न हि ते कारकास्तेषाम्। यतो हि पूज्या महर्षयः समये समये धरातलेऽवतीर्य नित्यज्ञानराज्यान्तर्गताभ्रान्तवैदिकशास्त्रसङ्घस्य केवलमा-विष्कारमेव विदधति। चक्रायमाणस्य कालस्य तीव्रावर्तेन केषाञ्चन शास्त्राणां निष्पेषणात्मकस्तिरोभावः केषाञ्चनोद्वर्तनात्मक आविर्भाव एव भवति स चाविर्भावो नित्यर्षिणामवतारैर्महर्षिभिरेव सम्पाद्यते।

यथा हि जैमिनिभरद्वाजमहर्षिप्रभृतिभिराविष्कृतस्य कर्ममीमांसादर्श-नस्य विज्ञानावगतिमन्तरा विचित्रं विशालं दुरूहं कर्मविज्ञानरहस्यं नैव हृदयङ्गमं कर्तुम्पार्य्यते, तथैव भक्तिशास्त्रस्यास्य दैवीमीमांसादर्शनस्याऽपि विज्ञानावगतिमन्तरा कस्यचिदपि सम्प्रदायस्योपासकः स्वाधिकारानुसारं

नैव साफल्यमधिगन्तुमर्हति। नापि सूक्ष्मस्य दैवराज्यस्य महत्त्वमलौकिकव्यवस्थानं वाऽधिगन्तुं समर्थो भवतीति स्फुटमवगमनीयम्। अस्य दर्शनस्य ज्ञानमन्तरा साम्प्रदायिकाः स्वाधिकारप्राप्तितो भग्नमनोरथाः सन्तो विषण्णवदना एव लक्ष्यन्ते। बहवस्तु साम्प्रदायिकोपासका दैवीमीमांसीयं रहस्यमनवगच्छन्तः पथभ्रष्टा भवन्तः कदाचन कर्ममार्गे स्वाधिकारविरुद्धं चेष्टन्ते। कदाचिच्च ज्ञानमार्गेऽनधिकारचर्चामातन्वते येन स्वाऽध्यात्मिकोन्नतिपथं स्वयमेव कण्टकाकीर्णं कुर्वन्तः "इतो नष्टास्ततो भ्रष्टा" इति लौकिकीं गाथां चरितार्थयन्तः कर्मज्ञानपथप्रच्युता गर्ते निपतन्ति। इत्थञ्च यथा कर्ममीमांसादर्शनं सर्वस्यैव स्वशाखीय-कल्पसूत्रीयस्मार्तानुशासनस्य सहायकं तथैवेदं दैवीः मीमांसादर्शनमपि सकलस्यैवोपासकसम्प्रदायस्य परममाश्रयणीयमिति सुनिश्चितोऽध्वा विज्ञेयः।

श्रौतस्य काण्डत्रयस्यानुसारेण मीमांसात्रयमपीदं परस्परं नैकट्यसम्बन्धभाक् तस्य त्रितयस्य ज्ञानभूमयोऽपि परस्परं घनिष्ठसम्बन्धभाजः। परन्तु तस्य त्रितयस्यापि पुरुषार्थभेदः स्फुटं पृथक्तयैवोद्घुष्यते। तथा हि कर्ममीमांसादर्शनं कर्मैव मुक्तिसाधनमाख्याति, दैवीमीमांसादर्शनञ्च भक्तिमेव मुक्तिनिदानत्वेन स्तौति, ब्रह्ममीमांसापराह्वं वेदान्तदर्शनं हि ज्ञानमेवैकमद्वितीयं मोक्षकारणं निर्वक्ति, इत्थञ्च ज्ञानभूमिभेदेन दर्शनेषु पुरुषार्थभेदस्यावश्यकत्वमिति। तत्र दर्शनानां परस्परभेदविज्ञानरहस्यं विदद्भिर्मुमुक्षुभिः शङ्कावसरो नासाद्यते। यतो हि-अन्नमय-कोषात्मकस्यास्य स्थूलशरीरस्य पोषणविषयमादाय तद्विज्ञान-रहस्यवित् कश्चित् शारीरिकयन्त्रेषु देहपरिपुष्ट्यै मुखमेव प्रधानमित्यभिदधीत, तत्रैव कश्चन पाकस्थल्या एव प्राधान्यमुद्घोषेत, अपरश्च कोऽपि तृतीयो हृदययन्त्रस्यैव प्राबल्यमुपदिशेच्चेन्न केऽपि तत्र वितथवचसो भवितुमर्हन्ति। प्रत्युत सर्व एव शारीरिकविज्ञानरहस्य-ज्ञातारोऽभ्यर्हणीया एवेमे विद्वांसो भवन्ति।

यतश्च अभ्यवहरणीयमन्नं प्रथमतो मुखद्वारैव पाकस्थल्यां प्रविशति। तत्र च रसरूपेण परिणतं भूत्वा हृदययन्त्रे स्थानमासाद्य ततः सर्वत्र शरीरेषु रुधिरात्मना प्रवहति। तदनन्तरं तत्तत्क्रियाभिस्तां तामवस्थामासादयत् धातुत्वेन परिणम्यते। येन शरीरपुष्टिस्तत्तदङ्गानां परिपोषश्च सम्पद्यते। एवञ्चैकस्मिन् यन्त्रेऽन्नप्रवेशानन्तरं द्वितीयादियन्त्रक्रियाः स्वयमेवारब्धा भवन्तीति त्रिषु यन्त्रेषु पार्थक्येन तत्तद्यन्त्रप्रशंसकानां सत्यत्वे न काऽपि सन्देहावसरः। तथैव कर्मभक्तिज्ञानात्मका इमे त्रयोऽपि योगाः अन्योन्याश्रयसम्बन्धसमाश्रिता ज्ञेयाः। एषाञ्च परस्परभेदव्यपदेशतो न काऽपि क्षतिर्भवतीति ध्रुवमूहनीयम्।

जीवोऽहि स्वकर्म्मानुष्ठाने स्वाधीनो भवति। अपि च "अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" इति सिद्धान्तानुसारं योगिनीनामुपासकः योगिनीनां कृपया उपासनासंसिद्धौ सत्यां तत्फलत्वरूपेण तास्ता योगिनीरधिगच्छति। फलतः अत्युत्कटकर्म्मानुष्ठानपरायणः कर्म्मणि स्वाधीनः साधकः निजां कर्म्मफलसिद्धिं दैवैरिहैव जन्मनि समनुष्ठापयति। ततो हि योगिनीभिः सार्द्धं विहितेन व्यवहारेण समुन्नतान् सत्संस्कारान् गृह्णन् मुक्तावुत्तिष्ठते। वामाचारे किल स्वीयपूर्व्वजन्मार्जितकर्म्मसंस्काराद्वा श्रीगुरुदेवकृपावशाद्वा साधकेन लौकिकी शक्तिः समधिगम्यते।

उपर्य्युक्तेषु त्रिषु भावेषु प्रधानं मातृभाव एव। यतो हि मातृजनितः स्नेहोऽलौकिकः स्वार्थशून्योऽकृत्रिमश्च। "कुपुत्रो जायेत क्वचिदपि कुमाता न भवतीति" श्रीमच्छङ्कराचार्य्यप्रतिपादितत्वात्। भगिनीस्नेहो द्वितीयश्रेणिगः पत्नीप्रीतिस्तु तृतीयकोटिगा।

मातृभावस्य प्राधान्ये अन्यदप्येकमसाधारणं कारणम्, तथाहि ब्रह्ममय्या जगदम्बायाः परब्रह्मस्वरूपतः मातृभावस्य सम्बन्धः। अतश्च माता पुत्रस्य गुरुर्भवितुमर्हति "गुरुर्ब्रह्म न संशय" इतिशास्त्रोपदेशात्। भगिन्याः पत्न्याः वा सम्बन्धः ब्रह्ममय्याः जगदम्बाया ईशभावेन ईश्वरीभावेन वा स्वीकर्त्तुं शक्यते। निःश्रेयसात् जगतः सृष्टिस्थितिप्रलयेभ्यश्च साक्षात्सम्बन्धनिबन्धनत्वात् मातृभावो हि सर्व्वोत्कृष्टः।

स्नेहसम्बन्धात् भगिनीभावः मातृभावसमकक्षोऽपि सन् स हि विशेषेण स्वीयं पुत्रमनुसरतीति कारणात् न मातृभावसमानतामर्हति। अतएव ब्रह्मणोऽध्यात्मभावेन भगिनीभावसम्बन्धं न प्रदर्श्य अधिदैवभावेनैव सम्बन्धं प्रदर्शितवानस्मि।

शिवशक्त्येकरूपिणीभावत एव पत्नीभावस्य सम्बन्धः। स च भावः ब्रह्मणोऽधिदैवस्वरूपस्य ईशभाव—ईश्वरीभावापरनामकस्य साक्षात्स्वस्वरूपोऽवगन्तव्यः।

मातृभावो हि आध्यात्मिकं ज्ञानं प्रदाय साधकं निःश्रेयसपदे प्रतिष्ठापयति। यतो हि तस्य ब्रह्ममय्या जगदम्बायाः परब्रह्मस्वरूपेण साक्षात्सम्बन्धो वर्त्तते। पत्नीभावस्तु पतिमुक्तौ सहायकः सन् पत्नीमपि स्त्रीधारातः पुरुषधारायां प्रापयन् मुक्त्यभिमुखीं करोति। भगिनीभावस्य मुक्तिभूमेर्नास्ति कोऽपि सम्बन्धः, केवलं लौकिकसुखेनैव तस्य सम्बन्धो विज्ञेयः। यतो हि तस्य निजेनैव पतिना सह पत्नीभावात्मकसम्बन्धो विद्यते। अत एव भगिनीभावस्य साधनं मुक्तिकामनया नानुष्ठीयते।

त्रयाणां भावानामेषां यथामति विवेचनमनुष्ठितम्। साधक उपासनाया एतस्या दुरूहं विषयं गवेषं गवेषं परमानन्दसन्दोहमनुभविष्यतीति नाऽत्र सन्देहः।

जगन्मात्रे नमः।

# संस्कृते नीति-कुण्डलियाः ।

( ले०-भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः । )

( क्रमागता )

—※०※—

इदानीं कवितानिकुञ्जान्तर्गतस्य 'साहित्यवैभवस्य' 'नीतिवीथेः' समुद्धृतानि कानिचि'त्कुण्डलिया' पद्यानि परीक्षानिमित्तमधस्ताद्दीयन्ते—

'कविसूक्तिं नवनिर्गतां श्रवसि कुरुत कुतुकेन ।
कवितारसविज्ञान् विना साऽऽद्रियतां किल केन' ? ॥
साऽऽद्रियतां किल केन येन विज्ञो गुणवेदी ।
अपटुजनः कुटिलाशयेन कविमानसभेदी ॥
भवदभिमुखमुपढौकितां[1] नु परिमृशत मदुक्तिम् ।
नूनं क्षणमवधाय बुधाः शृणुयुः कविसूक्तिम् ॥ १ ॥

## माया ।

माया[2] मित्र-महीप-यति-गुरुजन-गुरुवनितासु ।
भिषगनुगत-भृत्येषु न हि कार्या [3]शिष्य-सभासु ॥
कार्या शिष्य-सभासु नैव मायाऽतिथिलोके ।
विश्वस्ते पुरुषे च मायया क्षयमवलोके ॥
कवयो हृदयमयन्ति तेषु माया विच्छाया[4] ।
मञ्जुनाथ तदमीषु मित्र ! न विधेया माया ॥ २ ॥

## मुद्रा ( धनम् )

मुद्रा यदि करगा[5] भवेन्नर ! गाहस्व मुदैव ।
संसारम्, यदि न करगा, हर गार्हस्थ्यमिहैव ॥
हर गार्हस्थ्यमिहैव, कैव लोके तव गणना ?
गुणशतगुर्वी भाति रजतमुद्राणां रणना ॥

---

१ विज्ञेतरो जनः कुटिलाशयेन कवेर्मानसं पीडयति ।

१ उपस्थापिताम् । २ माया कपटव्यवहारः । ३ शिष्येषु सभासु चेतिद्वन्द्वः ।
४ अशोभना । कृतापि माया तेषां चातुर्यवशात्स्फुटमशोभमाना भवतीत्यर्थः ।

५ मुद्रा यदि हस्तगता भवेत्तर्हि मुदैव संसारं गाहस्व ( संसारे व्यवहर ) यदि न

मञ्जुनाथ निश्चितं सर्वसामग्री क्षुद्रा ।
दूरे सकलमपास्य मित्र ! सम्पाद्या मुद्रा ॥ ३ ॥

## साध्वी पत्नी ।

नारी निर्धनतादिने निजदयितं प्रीणाति ।
सुखयन्ती निजसेवया पतिहृदयं[६] क्रीणाति ॥
पतिहृदयं क्रीणाति, याति तस्यैव च वचसा ।
गृहसंकटमपनीय रमयति प्रमुदितमनसा ॥
मञ्जुनाऽथ[७] चरितेन भवेत्प्रियसुहृदुपकारी ।
गृहार्णवनौकेव[८] भाति बत साध्वी नारी ॥ ४ ॥

## चातकः ।

चातक ! चतुरम्भोधयः परितः सरितः सन्ति ।
कति कति वा जगतीतले जलाशया न लसन्ति ॥
जलाशया न लसन्ति, निःस्पृहो नयसे कालम् ।
हन्त महान्तो ह्रदा अपीमे तृप्त्यै नालम् ॥
मेघमेकमचलम्ब्य दुरिताऽभ्यर्थनपातक ।
महतामपि शिक्षाप्रदाऽस्ति दृढता तव चातक ॥५॥

## मेघः ।

जलधर ! धावसि दूरतो वहसि भूरितरवारि ।
केन नाऽभिनन्दिष्यते कार्यमेतदुपकारि ॥
कार्यमेतदुपकरि वारि यत्परितो वर्षसि ।
श्राम्यसि लोकहिताय तेन भूमावुत्कर्षसि ॥
किं बहुना, त्वदधीनमेव जीवनमित्यवधर ।
भूमेर्भर्ता सत्यमेव धन्यस्त्वं जलधर ॥ ६ ॥

## सौगन्धिकः ।

सौगन्धिक ! पामरपुरीमुपगतवानसि केन ।
बकुल-कुसुमसारं सखे ! प्रकटितवानसि केन ॥

---

करगता, तर्हि इहैव अभावपरिज्ञानक्षणे एव गृहस्थभावं त्यज । रूपप्रकाणां क्षणत्कारो गुण-शतादपि गुरुः ॥ ३ ॥

६ वशीकरोति । ७ निर्मलेन चरितेन उपकारकः प्रियसुहृत् संपद्यते ।

८ गृहस्थाश्रमरूपस्य अर्णवस्य नौका इव ॥ ४ ॥

प्रकटितवानसि केन, केन तव वार्ता पृष्टा ?
सुरभितसकल[1]दिशापि केन सामग्री दृष्टा ?
मञ्जुनाऽथ गन्धेन नेह फलमल[2]मभिसन्धिक ।
व्यर्थं ताम्यसि, विरम सखे हंहो सौगन्धिक ॥ ७ ॥

## मल्लिकावृक्षश्च वानरश्च ।

वानर ! या नरमण्डली[2]मण्डनमवनौ भाति ।
सा खरनखरैस्तावकैर्मल्ली क्षयमुपयाति ॥
मल्ली क्षयमुपयाति, याऽतिरम्या रमणीनाम् ।
कुचकलशे द्युतिमेति हन्त नवहार[1]मणीनाम् ॥
सौरभमस्याः सौकुमार्यमविदन्[2] रभसाऽऽकर !
पाटितवानसि निर्दयं नु किमु हे हतवानर ॥ ८ ॥

## लेखिनी ।

लेखिनि ! तव मुखनिःसृता मसी-बिन्दवोऽप्यद्य ।
दैववशाद्दधते द्युतिं मौक्तिकतामवपद्य ॥
मौक्तिकतामवपद्य चकासति चित्रं लोके ।
सत्यरुचिं [3]प्रथयन्ति सर्वतो ज्ञानाऽऽलोके ॥
तदिह तथा ह्यवितथा चलेरयि रोचितलेखिनि !
मसिमुखलेपं[4] कोऽपि नाक्षिपति ते सखि लेखिनि ॥ ९ ॥

---

१ सुरभिताः सकलाः दिशा यया सा । २ अलम् अभिसन्धिः यस्य, पर्याप्तविचारशालिन् ! इत्यर्थः ॥ ७ ॥

२ नरसमाजस्य भूषणम् ।

१ कुचकलशे नवीनानां हारमणीनां द्युतिं याति । ३ हे रभसाकर ! ( अविचारितकारक ! ) अस्याः सौरभं सुकुमारतां च अविदन् अजानन् किम् उत्पाटितवानसि ॥ ८॥

४ सर्वतः सत्यस्य रुचिं कान्तिं, सत्यां रुचिं च । ५ मसीलेपेन कृष्णमुखया लेखन्या स्वस्वरूपोचितमेव लिखितमिति यथा कोऽपि त्वामाक्षिपति तथेत्याशयः ॥ ९ ॥

# करुणाष्टकम् ।

## [ द्रुतविलम्बितवृत्तम् । ]

—०:ॐ:०—

परमदुस्तरमत्र भवाम्बुधिं
सहजमुत्तरितुं दृढमिच्छतः ।
अतुलपापकृतः सकलागसां
प्रशमनं नमनं भवते क्रियात् ॥ १ ॥
न च कदापि कृतं सुकृतं मया
तव तु नाम्नि दृढा विहिता रतिः ।
कथमिदं तव नामरसायनं
ननु हरे न हरेन्मम किल्बिषम् ॥ २ ॥
अपि कृताः क्रतवश्चरितं तपो
वसु तथा विततं यदि वाऽर्थिषु ।
अखिलजन्म तथाऽपि वृथा गतं
यदि रतिः परमा न रमावरे ॥ ३ ॥
ननु नरो जगति प्रगति-प्रियः
प्रयततेऽनुदिनं सुखमीहते ।
न लभते तु तदैहिकवस्तुषु
भवसि राम ! विरामपदं तदा ॥ ४ ॥
तव सकृद्भजनं सुखभाजनं
तव नमस्करणं जयकारणम् ।
तव कृपाऽऽवरणं भववारणं
न तव विस्मरणं मरणं वरम् ॥ ५ ॥
अहरहः स्मरतो भवतो गुणा-
नसुकृतं बहु मे विलयं गतम् ।
प्रणतनाथ ! यदुर्वरितं भवे-
त्तदपि सत्कृपया ह्यपयापय ॥ ६ ॥
मदमयं दमयन् बत कालियं
त्वममलं कृतवान् यमुनाजलम् ।
मम तथैव नियम्य मनोभवं
मतिमिमां सरलां विमलां कुरु ॥ ७ ॥
पतितपावन हे परमेश्वर !

सकरुणं शृणु मे करुणाष्टकम् ।
प्रणमतो भवबन्धविमोचनं
द्रुतमिदं कुरु ! माऽस्तु विलम्बितम् ॥ ८ ॥

—दिगम्बरकाशीनाथगर्दे ।

---

## जीवनानुशासनम् ।

अयि जीवन ! भव कुसुमसमानम् ।
अयि जीवन ! भव कुसुमसमानं सममखिलानां कुरु सुखदानम् ।
मा वह किञ्चित् स्वार्थनिमित्तं रचय परार्थं सर्वं वित्तम् ॥ १ ॥
अयि जीवन ! भव कुसुमसमानम् ।
स्वच्छहृदयतो गच्छ विकासं सर्वेषां हर मन आयासम् ।
किञ्चन माऽञ्च तदप्यभिमानं प्राप्नुहि सकलादथ संमानम् ॥२॥
अयि जीवन ! भव कुसुमसमानम् ।
कठिने पतदपि कण्टकपुञ्जे दारुणदुःखक्रीडनकुञ्जे ।
मा कुरु वृत्तौ मतिचाञ्चल्यं मा च विकासे व्रज वैकल्यम् ॥३॥
अयि जीवन ! भवकुसुमसमानम् ।
रुचिरं रूपं रचय परार्थं शुभगन्धं वह न च तत् स्वार्थम् ।
मधुरं धर रसभरमितरार्थं तेनाऽऽत्मानमवेहि कृतार्थम् ॥४॥
अयि जीवन ! भव कुसुमसमानम् ।
कर्त्तुं कश्चिज्जीवनदानं कश्चन वा पदलवनविधानम् ।
आगच्छेतां किन्तु प्रियेदं सौरभमुभयोर्देयमभेदम् ॥५॥
अयि जीवन ! भव कुसुमसमानम् ।
त्वयि मधुबोधाद् दूरायाना मा भूवन् विमुखाः प्रतियाताः ।
एतत् ते परमं व्रतमास्तां येन यशः सुकृते जगति स्ताम् ॥ ६ ॥
अयि जीवन ! भव कुसुमसमानम् ।
वर्णमनोहरपत्रनिवेशं हृदयप्रकटनपटुतावेषम् ।
वह सौरभवितरणनैपुण्यं नवरसपरिपायन साद्गुण्यम् ॥७॥
अयि जीवन ! भव कुसुमसमानम् ।
उक्तैरन्यैरपि गुणनिकरैराशिशुवृद्धजनप्रमदकरैः ।
विबुधानामपि शिरसा धार्यं यथा भवेः कुरु तथाऽनिवार्यम् ॥८॥
अयि जीवन ! भव कुसुमसमानम् ।

वन्यमपि त्वां वेषविचित्रं शिक्षावञ्चितमपि सुचरित्रम् ।
यततां कश्चन नगरं नेतुं मा वह तदपि मदं खलकेतुम् ।९।।
अयि जीवन ! भव कुसुमसमानम् ।
एवं सुमनोधर्मिणि जाते त्वयि प्रिय ! तिष्ठतु चिन्ता का ते ?
सहि वनमाली निजमालायां दास्यति तेऽपि स्थितिमनपायाम् ।।१०।।

श्रीमाधवप्रसादशर्मा देवकूटा,
नेपाल-प्रान्त पालपा

## शारदापञ्चकम् ।

यत्पादपद्ममकरन्दकृते मिलिन्द—
भावं समाश्रयति सन्ततमञ्चितोऽपि ।।
तामिन्दुसुन्दरमुखीमभिवाद्य शाम्तां -
कान्ताम्विधेरिति निवेदयते जनोऽयम् ।। १ ।।
मातस्त्वदीयजितदाडिमवीजदन्ताः ।
सन्तापमाददति सद्भ्य इति प्रतीमः ।।
यत्साम्प्रतं दुरितसिन्धुनिकृन्तनाय ।
दंष्ट्राकरालवदनावसरोऽयमस्ति ।। २ ।।
चञ्चन्मणिप्रकरदीप्तिमतीमिदानीम् ।
सन्त्यज्य "सारिगम" गानमनोज्ञवीणाम् ।।
खङ्गं गृहाण निशितन्तमनन्तमूर्ते !
अन्तर्मदोल्लसितनेत्रवती सती त्वम् ।। ३ ।।
यत्पुस्तकं तव कराम्बुजवर्ति मात-
र्मह्यं समर्प्य समनीषमकिञ्चनाय ।।
रिक्तेन तेन भुवनेश्वरि ! धत्स्व कुन्तान् ।
कुन्तामनन्यशरणां परिपालयस्व ।। ४ ।।
हंसोमृणालकवलीनबली त्वदीयो—
नैवाऽधुनाऽऽश्रयितुमेनमतो यतस्व ।।
चीत्कारकम्पितदिगन्तगजान्तकोऽयम् ।
तत्स्थानिताम्व्रजतु केशरिराजराजः ।। ५ ।।

—बलभद्रमिश्रः, व्याकरणाचार्यः, आयुर्वेदशास्त्री ।
हिं० वि० वि० काशी ।

# ग्रीष्मगरिमा ।

वर्णनीयविषयानुसारं यथा छन्दसां माधुर्यमधिकतां भजते एवमेव कानिचित्कानिचिच्छन्दांस्यपि तं तं वर्णनीयविषयमधिकतरं मनोहरमापादयन्तीत्यपि माननीयं स्यात्। संस्कृतभाषा छन्दसां जन्मदात्री। तस्याश्छन्दांसि यथा भूयस्तराणि तथाऽत्यन्तम् मनोहराणि। अत एवाऽन्यान्यास्वपि भाषासु एतस्याः सेयं छन्दःसम्पत्तिः सुतरामादरमधिगतवती। यद्यपि सन्ति व्रजभाषा यामन्यान्यानि बहूनि कवित्तसवैयादिच्छन्दांसि, तथापि संस्कृतच्छन्दसां माधुर्याऽवकृष्टा व्रजभाषाकवयोऽपि शिखरिणी-भुजङ्गप्रयात-मालिनी-प्रभृतीन्यस्याश्छन्दांसि ससमादरमद्यापि व्यवहरन्ति। एवमेव व्रजभाषायामपि सन्ति तादृशानि च्छन्दांसि यानि वर्णनीयविषयमतितमामलङ्कुर्वन्ति। कस्मिंश्चित्कस्मिंश्चिद्विषये त्वेषां प्रभावो भूयस्तरामवलोक्यते।

एवंविधेष्वेव छन्दस्सु तदिदं घनाक्षरीछन्दः परिगण्यते यस्य हि ऋतुवर्णनविषयेऽधिकतमं सफलताऽवलोक्यते। व्रजभाषाकवयो यदा हि सुमधुरस्वरमिदमुच्चारयन्ति तदा पद्यपाठस्याऽवसान एव वर्णनीयस्य ऋतोर्मूर्तिरिवोपतिष्ठते। संस्कृते ऋतुवर्णनं न कस्या अपि भाषाया अपेक्षया न्यूनम् परं तस्याश्छन्दांसि प्रायो नाधिकदीर्घकायानि। अतएव एकद्वाभ्यां छन्दोभ्यां सर्वापि विभावसामग्री नोपस्थापयितुं शक्या। कवित्तछन्दस्तु ऋतौ वर्णनीयं भूयांसं विषयमधिकरोति। ततश्च संस्कृतभाषायामपि तदेतच्छन्दो निर्वाहयितुं शक्यं न वेति परीक्षां हृदि कृत्वा प्रवृत्तवानस्मि।

अद्य प्रवर्तमानस्य ग्रीष्मर्तोः कानिचिद् घनाक्षरी-पद्यानि 'कवितानिकुञ्जा' दुद्धृत्य पाठकानां पुरत उपस्थापयामि। वसन्त-वर्षादिवर्णनवद् ग्रीष्मस्य वर्णनं कविभिर्न तथाऽभिरोच्यते, तथापि यथाशक्ति मनोहरतामापादितं तदिदमस्ति—

मेदुरमिहिरमहामहसां[1] प्रहेता वर—
वारिजविनेता[2] नवसरसां समेधते।
जाड्यजालजेता घनघर्मपरिचेता तिग्म—
तापसमुपेता[3]ऽनलवेगवानुपैधते॥
मञ्जुनाथ वेपितवियोगिजनचेता मञ्जु—

१ सान्द्रसूर्यतेजसां प्रेरकः। २ नवसरोवराणां कमलपूरकः। ३ तीव्रतापयुक्तस्य अनिलस्य वेगो यस्मिन्नस्ति सः।

अस्मिन्नपि समये सहस्ररश्मिभासमयेऽ—
मुष्मिन् हिमगेहे जलधारा वर्षिता सेयम् ॥
मञ्जुनाथ कंटकिय[1]वसमांसलाऽऽवरणैः—
ग्रीष्मरोधमेत्योत्प्रेक्षा मञ्जुमर्षिता सेयं ।
भीष्ममिव भीषणगभीरगुरुभावधरं,
ग्रीष्ममिह नव्या शरशय्या दर्शिता सेयम् ॥ ४ ॥

### ग्रीष्मरजनी ।

भृङ्गारक[2] शीतसुख-सलिल-निषिक्ता रति—
रङ्गायोपयुक्ता मही तुङ्गालयगामिनी
इन्दुकरसङ्गादतिशीतलतमाऽसौ वाति
सौरभाऽनुषक्ता मरुल्लहरी सुधामिनी[3] ।
मञ्जुनाथ मज्जनसुश्रृङ्गारितदेहलता
भाति पुष्पशय्यो[4]त्सङ्गसङ्गा वरकामिनी
[5]विहरदनङ्गागमसागरतरङ्गा याति
धृतरतरङ्गाऽसौ निदाघलघुयामिनी ॥ ५ ॥

### ग्रीष्मस्य नरेशरूपकम् ।

जोष[6]मृतुराजसन्धिसीमामभिलङ्घ्य बलाद्
गोपरयरोपितप्रचण्डभा—सनाथोयम्
तिग्म[7]करतापितसमस्तजनता हृदयो

---

१ कंटकयुक्तानां यवसानाम् ( 'जवासा' ) मांसलैः आवरणैः स्थूलाभिर्वृतिभिः ( 'टट्टी' ) ग्रीष्मस्य रोधम् आ-ईक्ष्य सेयम् उत्प्रेक्षा मञ्जु यथा स्यात्तथा मर्षिता (विचारिता) का सा तामाह—

महाभारते मुमूर्षते भीष्माय तथा शरशय्याऽर्जुनादिदर्शिता, तथा कण्टकियवासवृत्तिरूपा शरशय्या ग्रीष्मार्थं कल्पिता ॥ ४ ॥

२ भृङ्गारकस्य गलन्तिकायाः ( 'झारी' ) सलिलैः सिक्ता तुङ्गहर्म्यगता मही रतिरङ्गार्थमुपयुक्ता । ३ सुन्दरधामसम्बन्धिनी मरुल्लहरी वायुलहरी । ४ पुष्पशय्याया उत्संगे ( मध्यभागे ) सङ्गो यस्याः सेति व्यधिकरण बहु० । ५ विहरन्तः । अनङ्गागमरूपस्य सागरस्य तरङ्गाः यस्याम् । धृतः रतरङ्गः यस्यां सा च ॥ ५ ॥

६ जोषं यथा तथा ऋतुराजस्य सन्धिसीमामधिलङ्घ्य प्रचण्डभासेन सनाथः । अन्योपि राजा प्रतिपन्थिनो राज्ञः सन्धिसीमानमुल्लंघ्य प्रचण्डो भवति । ७ तीक्ष्णः किरणः, असह्यानि मुल्कानि च ।

हन्त निर्दयोचितनिरूढ [1]शस्यमाथोयम् ।
मञ्जुनाथ सौरभसुरञ्जितशिरीषमनु
गुञ्जदलिपुञ्जबन्दिगीतगुणगाथोयम्
[2]ज्येष्ठजवलम्बनतो भूरिभाविडम्बनतो
भासते विजृम्भणतो ग्रीष्मनरनाथोऽयम् ॥ ६ ॥

### ग्रीष्मे प्रवत्स्यत्पतिका ।

दीपितदिनेशदूरदीधिति विकासमये
तापोयं समस्तलोकवलयेऽनुलीयते
रभसरयेद्धा वान्ति तापविधयेऽमी मुहु-
र्मारुताः, सुषी[3]मताऽधोनिलये निलीयते ।
मञ्जुनाथ वेपितवियोगिवनिता-हृदये
नित्यनिर्दयेऽस्मिन् दरदुः[4]स्थितिरुदीयते
भूयो विनये किम्, दव[5]दारुणदुरासमये
ग्रीष्मसमये किं कान्त ! गन्तुं व्यवसीयते ? ॥ ७ ॥

भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः ।

---

## संस्कृत-साहित्याकाशस्य कानिचिदुज्ज्वलनक्षत्राणि ।

—०:❀:०—

यद्यपि संस्कृत-साहित्याकाशः बहूनां द्युतिमतां नक्षत्राणाममर-रचना-प्रकाशेन प्रकाशितो विद्यते, यद्यपि तस्मिन्नेवालोके सर्वे उन्नतिपथे अग्रेसरा अभूवन्, भवन्ति च, तथापि तेषामालोकप्रदातॄणां सम्बन्धेऽस्माकं किमपि ज्ञानं नास्तीति महान् विषादावसरः । प्रायः दृश्यते पाश्चात्यदेशेषु तत्साहित्य-निर्मातॄणां 'विलियम शैक्सपियर', 'बायरन्', 'कीट्स', प्रभृतीनां जीवन-सम्बन्धि-साधारण-वृत्तेनापि सर्वे परिचिता भवन्ति, किमुतासाधारणेन ?

---

१ निरूढं शस्यानाम् उन्मथं येन । ग्रीष्मो घोरतापेन शस्यानि उन्मथति । राजापि प्रतिपन्थिनोऽभियाने मार्गस्थानि शस्यानि मथ्नाति । २ ज्येष्ठमासस्य, स्वापेक्षया श्रेष्ठस्य राज्ञश्च वेगस्य चाश्रयणेन ॥ ६ ॥

३ शीतलता अधोनिलये नीचैस्तनगृहे लीयते । ४ दरदुःस्थितिः भयेन दुरवस्था, ईषद्दुरवस्था वा । ५ दवस्य वनवह्नेः दारुणदुःस्थितियुक्ते । ग्रीष्मसमये गन्तुं किमिति निश्चीयते ? ॥ ७ ॥

परमस्मद्देशे कविकुल-गुरोः कालिदासस्यापि विषये किमपि सम्यक् निश्चितं ज्ञानं नास्ति ।

अहमद्यास्मिन्निबन्धे कतिपय-सुरभारती—समुन्नायकानां विदुषां, तत्कृतीनाञ्च संक्षिप्त-परिचयं यथामति प्रदातुमीहे। अत्र कियत्साफल्यमधिगतम्मयेत्यत्र विपश्चितां चरम-निर्णय एव शरणम् ।

## अश्वघोषः

अस्य विदुषः काल-निर्णये चीनदेशीयसाहित्ये, जापानदेशीय-साहित्ये च बह्व्यः कल्पनाः समुपलब्धाः सन्ति । बुद्धनिर्वाणस्य पञ्च-शताब्दानन्तरमयं प्रादुर्बभूवेति कश्चित् मन्यते । कश्चित् षट्शताब्दानन्तरं, कश्चिच्च सप्तशताब्दानन्तरमिति । परमयं खिष्टीयप्रथमशताब्दस्य परवर्ती नास्तीत्यत्र न कश्चित्संदेहलेशः । अस्य कालनिर्णये यत् किमपि लिखितमुपलभ्यते, तेन नेदं निर्णेतुं शक्यते यत् ईशवीयसम्वत्सरस्य पञ्चाशद्वर्षेभ्यः पूर्वं किम्वा अशीतिवर्षेभ्यः परमस्य समय इति ।

अश्वघोषः साकेतस्य ( अयोध्यायाः ) एकं ब्राह्मणकुलं स्वजन्मनाऽलञ्चकार । अस्य जननी एका वणिक्कन्या आसीत्, पितुश्च नाम संघगुह्य आसीत् बालकोऽश्वघोष उपनयनानन्तरं गौड़,-मिथिला,-कामरूपादिदेशेषु गत्वा स्वीयमध्ययनं पूरयामास । पाटलिपुत्र,नालन्दादिस्थानेषु कञ्चित्कालं व्यतीयायेति चीनतिब्बतादिषूपलब्धग्रन्थैः प्रतीयते । एवम्महत्पाण्डित्यमुपलभ्यानेकान् बौद्ध-पण्डितान् शास्त्रार्थे विजित्य चान्ते स्वयं पार्श्वनामकपण्डितेन पराभूतः बौद्धधर्मं स्वीचकार । अनन्तरं गान्धार-देशे राज्ञः कनिष्कस्याश्रितोऽभवत् ।

## ग्रन्थाः ।

अश्वघोषस्यैकं 'बुद्धचरित' नामकं सुप्रसिद्ध', समादरणीयञ्च महाकाव्यमस्ति। प्रायः समेषामेव महाकाव्य-गुणानां पुस्तकेऽस्मिन् समावेशो दृश्यते । प्रसादगुणाविष्करणे अश्वघोष-कालिदासयोरेव सर्वोत्कृष्टं स्थानमस्तीति कथने नात्युक्तिरस्ति । 'बुद्धचरितस्य' कतिपयानि स्थलानि भृशं मर्माणि स्पृशन्ति । भगवतो बुद्धस्य वैराग्यवर्णनम्, कपिलवस्तुत्यागवर्णनम्, अश्वस्य नगरप्रत्यावर्तनवर्णनञ्च पठित्वा नरोऽवश्यं साश्रुलोचनो भविष्यतीति मन्ये ।

एतदतिरिक्तान्यन्यानि चाश्वघोष-लिखितानि 'सौन्दरानन्दकाव्य' 'महायानश्रद्धोत्पादशास्त्र' 'महालङ्कारसूत्र-शास्त्रोपाध्यायसेवाविधयादीनि सप्तापि वा

पुस्तकानि समुपलभ्यन्ते । श्रूयते, यत्तेषामनुवादः चीनदेशीयभाषायां जापानदेशीयभाषायामपि वर्तत इति ।

सौन्दरानन्दकाव्यस्य Bengal Asiatic Society. संस्थायां मुद्रणं सम्पन्नम् । ग्रन्थकृता काव्येऽस्मिन् नन्दसुन्दर्योः चरित्रवर्णनव्याजेन लोकाय मोक्षोपदेशः कृतः । मोक्षशिक्षणमेवाश्वघोषस्य जीवनोद्देश्यमासीदिति कृत्वा शान्तरसस्यैव प्राचुर्यमस्मिन् वर्तते । अस्य काव्यस्य नायको नन्द ऐतिहासिको बुद्धदेवस्य वैमात्रेय आसीत् ।

उक्तकाव्यस्यात्र श्लोकद्वयमुपन्यस्यते—

ततो विविक्तं च विविक्तचेताः सन्मार्गविन्मार्गमभिप्रतस्थे ।
गत्वाग्रतश्चाग्र्यतमाय तस्मै नन्दीविमुक्ताय ननाम नन्दः ।

( स० ७ श्लो० १४ )

तां सुन्दरीं चेन्न लभेत नन्दः निषेवते सा न च तं नतभ्रूः ।
द्वन्द्वं ध्रुवं तद्विकलं न शोभेतान्योन्यहीनाविव रात्रिचन्द्रौ ॥

( स० ४-श्लो० ७ )

अश्वघोषग्रन्थेषु भाववैचित्र्यस्य, चमत्कृतेः, भाषासौष्ठवस्य च प्रायः आधिक्यं भवतीति कृत्वा तेषां महती उपादेयताऽस्ति यद्यपि तत्पुस्तकेषु यत्र कुत्रचित् च्युत-संस्कृति-दोषो दृश्यते; तथापि 'एको हि दोषो गुण-सन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायेन तद्गुणावलीषु तिरोहित एवास्ति ।

## भासः ।

भारतवर्षस्यान्यकवीनामिव भगवतो भासस्यापि समयदेशादिज्ञानं तिमिराच्छन्नमेवास्ति । कतिपयवर्षपूर्वं भासस्य नाम पुस्तकेष्वेवोपलब्धमासीत् । कालिदासात्प्राचीनः कश्चित् नास्त्येव नाटककर्तेत्येवासीत् सर्वेषां मनसि धारणा । परं श्रीगणपतिशास्त्रिणः प्रयत्नेन इयं धारणा निर्मूला बभूव । उक्तशास्त्रिमहोदयप्रयत्नेन 'त्रावणकोर' राज्यस्य पद्मनाभपुर-नगर-पार्श्वे 'मणलिक्कर' मठे त्रिशताब्द-प्राचीन-तालपत्रे प्राचीन-केरल-लिप्यामङ्कितानि त्रयोदश नाटकानि । यथाः—१ स्वप्नवासवदत्तम् , २ प्रतिज्ञायौगन्धरायणम्, ३ पञ्चरात्रम् , ४ चारुदत्तम् , ५ अविमारकम् , ६ दूतघटोत्कचम् , ७ बालचरितम् , ८ मध्यम व्यायोगः, ९ कर्णभारम् , १० उरुभङ्गम् , ११ दूतवाक्यम् , १२ प्रतिमानाटिका ।

त्रावणकोर-महाराजस्य संस्कृत-साहित्यानुरागेण प्राचीनग्रन्थरत्नानां

समुद्धारायैका 'संस्कृत-ग्रन्थ-माला' नाम्नी संस्था तद्-राजधान्यां 'त्रिवेन्द्रम्' नगरे स्थापिता विद्यते। तत्रैवोक्त शास्त्रिमहोदय-प्रयत्नेनैतेषां प्रकाशनं सम्पन्नमिति। अयं महान् पण्डितः कस्मिन् समये भारतमलञ्चकारेत्यत्रानुमानमेव शरणं भवितुमर्हति। कालिदासेन स्वीयमालविकाग्निमित्रनाटकस्यावतरणे भासकवेः सादरं नामोल्लेखः कृतः, यथा—"प्रथितयशसां भास, सौमिल्ल-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः, कालिदासस्य कृतौ कथं बहुमानः?" इत्यनेनावगम्यते यत्कालिदासाद्यं प्राचीनतमः तत्समये प्रसिद्ध आसीदिति। बहवः पुरातत्ववेत्तारः कालिदासं ईशवीयचतुर्थशताब्दस्याथवा पञ्चमशताब्दस्य कविं मन्यन्ते।

स्वप्न-वासवदत्तस्य प्रशंसायाः सूक्ति-मुक्तावल्यां राजशेखरेणेदमुक्तम्।

भास-नाटक-चक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥ इति॥

ईशवीय-सप्तमशताब्दस्य कवे र्बाणभट्टस्य हर्षचरिते इयमुक्तिरस्ति।

सूत्रधारकृतारम्भैर्नाटकै र्बहुभूमिकैः।
सपताकै र्यशो लेभे भासो दैवकुलैरिव॥

कालिदासेन भासकवेरुल्लेखस्तु कृत एव, किन्तु ततोऽपि पूर्ववर्तिना भामहेन विदुषा काव्यालङ्कारे प्रतिज्ञायौगन्धरायण-नाटकोक्त-विषयाणामनुधावन कृतम्। नैतावदेव; अपि तु भामहादपि प्राचीनेनेशवीय-चतुर्थशताब्द पूर्ववर्तिना प्रसिद्धकौटिल्य-चाणक्येन प्रतिज्ञायौगन्धरायणस्यैकमविकलं पद्यमर्थशास्त्रे समुद्धृतमुपलभ्यते। अनेनानुमितुं शक्यते यद्भासः चाणक्यादपि प्राग्वर्तीति। पं० गणपतिशास्त्रिणा स्वप्नवासवदत्तस्योपोद्घाते (Introduction) एषु विषयेषु विशदविवेचना कृता।

भास-नाटकानां संस्कृतभाषायां कालिदासनाटकानां संस्कृतभाषातः सरसता-सरलता-स्वाभाविकतादि न कथमपि न्यूनमस्ति।

शृण्वन्तु—

पायात्स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखड्गनीलः
यः प्रोद्यतस्त्रिभुवनैकमणे र्रराज
वैदूर्य-संक्रम इवाम्बर-सागरस्य॥ १॥

यो गाधिपुत्र-मखविघ्न-कराभिहन्ता
युद्धे विराध-खरदूषण-वीर्यहन्ता ।
दर्पोद्यतोल्वण-कबन्ध-कपीन्द्र-हन्ता
पायात्स वो निशिचरेन्द्र-कुलाभिहन्ता ॥ २ ॥
पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः
व्याविद्धो नमुचिर्येन तनु-ताम्र-नखेन खे ॥ ३ ॥

इत्यादि सरस-सुक्तिभिस्तस्य ग्रन्थाः पूर्णाः वर्तन्ते । महाभारतमुपजीव्यैव भगवता भासेन त्रयोदशानामपि नाटकानां रचना कृता ।

## प्रसन्नराघवकर्ता जयदेवः ।

यद्यपि संस्कृतसाहित्ये जयदेवनाम्ना बहवः विद्वांसः प्रसिद्धाः सन्ति, परं तेष्वेकः 'गीतगोविन्द' कर्ता, अपरश्च 'प्रसन्नराघव' कर्ता चेति द्वौ प्रसिद्धौ स्तः । अत्र निबन्धे अहं प्रसन्नराघवकर्तुं जयदेवस्योपरि दृष्टिं निक्षिपामि । स्वर्गीयेण चिपलूणकर विष्णुशास्त्रिणा "उभयोरपि ग्रन्थयोः कर्ता एक एव जयदेव आसीदित्यभिहितम् । परं नैतदुचितं प्रतिभाति । यत उभयो ग्रन्थावलोकनेन स्पष्टमनयोः पार्थक्यं ज्ञायते । अनुमानस्यावश्यकतैव न भवति ।

( १ ) गीत-गोविन्दकर्तुः जयदेवस्य माता 'रामदेवी' नाम्नी आसीत् । पिता च 'भोजदेव' नामा । परं, प्रसन्नराघवप्रणेतु र्माता सुमित्रा पिता च महादेव आसीत् ।

( २ ) गीतगोविन्दस्य जयदेवः कृष्णभक्त आसीत्, प्रसन्नराघवस्य जयदेवः रामभक्त इति निष्कृष्यते ।

पाश्चात्य-विदुषः डाक्टर पिटर्सनमहोदयस्य मतमस्ति यत् "जयदेवः विदर्भदेशमलंचकार" इति । परं, प्रसन्नराघवस्य प्रस्तावनायां एकस्मिन् स्थाने सूत्रधारः कथयति ।

"केनापि दाक्षिणात्येन नटापसदेन............विद्याधरख्यातिरपहृतेति" अनेन ज्ञायते यदुत्तरभारतेऽयमजनीति । जयदेवस्य समयनिर्णयेऽपि महान् विवादो वर्तते । परं चन्द्रालोकटीका, न्यायचिन्तामण्यालोकादि दर्शनेन ईशवीय षोडश शताब्दस्य पूर्वार्द्धेऽस्य समयोऽनुमीयते ।

प्रसन्नराघवावलोकनेन ज्ञायते यत् जयदेवः प्रतिभासम्पन्नः कविरासीत् । सर्वाणि सत्कवेर्लक्षणानि अस्मिन्नुपलभ्यन्ते । तस्य काव्ये पदमैत्र्यनुप्रासालङ्कारगुणानामाधिक्यं वर्तते । स च समुचितशब्दप्रयोगेऽपि

कुशल आसीत् । करुणरसाभिव्यञ्जनाय कोमलशब्दानां, वीररसप्रकटनाय कठिन-शब्दानां समुचितः प्रयोगस्तेन कृतः ।

स्थानाभावादत्रोदाहरणं न मयोपन्यस्यते । मूलपुस्तकेष्वेवावलोकयिष्यन्ति तत्र भवन्तो भवन्तः ।

अधोलिखितश्लोकेन परिज्ञायते यत् केचन ईर्ष्यालवो मन्दमतयः जयदेवस्य द्रोहिणः आसन्निति ।

निन्द्यन्ते यदि नाम मन्दमतिभि र्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसै र्मृगदृशां वक्राः कटाक्षच्छटाः ।
तद्वैदग्ध्यवतां सतामपि मनः किन्नेहते वक्रतां
धत्ते किन्न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ?

विज्ञाः वाचकप्रवराः ! एतेषां विषये मया साधारणमालोचनं कृतम् । आशासे; यथावसरं माननीयाः विद्वांसोऽत्र विशदविवेचनां करिष्यन्ति, इति शम् ।

—मधुसूदनप्रसादमिश्रः 'व्याकरणाचार्यः'

---

# स्वागताभिनन्दनम् ।

—०:※:०—

[ छपरामण्डलीय-हरिहरपुरस्थ-श्रीकृष्णाश्रमसंस्कृतविद्यालयस्य नूतनभवनोद्घाटनमहोत्सवावसरे समागतानाम् महानुभावानाम् ]

"विद्यालयनिदानानाम् श्रीस्वामिचरणानाम्"

श्रीविश्वेशदयादयान्वितमनाः श्री १०८ स्वामिकृष्णाश्रमो ।
मग्नान् क्षोणिनिलिम्पवाङ्कुजविशोऽविद्याम्बुधौ वीक्ष्य यः ॥
विद्यावृद्ध्यनुबन्धिमानवकुलं रात्रिंदिवं शिक्षयन् ।
लोकान् सत्यपथन्नयन् यमिवरो विद्यागृहम् प्राकरोत् ॥१॥

तस्याङ्घ्रि-पद्मयुगलं कलिकल्मषघ्नम्,
संसेव्यमानमखिलैः सुमनीषिवर्यैः ।
वेदान्तबोधविदितात्मपदानुवृत्ते,
र्भव्याय नो भवतु विश्वजनीनवृत्तेः ॥२॥

[ विहारोत्कल-संस्कृतसमित्यध्यक्ष-श्रीहरिशङ्करपाण्डेयमहोदयानाम् ]

ख्यातो योऽयं निखिलभुवने श्रीहरिः शङ्करोऽपि,
धाम्नां पुञ्जैर्विदितविभवश्चित्रभानु र्द्वितीयः ।

सोऽयं दीनोद्धरणनिरतो माननीयो बुधानाम्,
प्रज्ञाराशिर्जयतु सततम् पालको ब्राह्मणानाम् ॥३॥

[ महोपदेशकानाम् दर्शनकेशरिणाम् वाराणसेयश्रीगोपालशास्त्रिमहोदयानाम् ]

शब्दज्ञानकलानिधि र्गुणमणिग्रामैकरत्नाकरः,
तर्कग्रन्थिविदारणेऽप्युद्यतः काव्ये नवो भारविः।
विद्वत्तामरसप्रबोधतरणिः विद्यावतामग्रणीः
श्रीमद्दर्शनकेसरी विजयताम् गोपालशास्त्री सुधीः।

[ दानिधुरीणानाम् सदस्यानाम् ]

जीयात्सदायं कमनीयमूर्त्ति, शिक्षातरोर्मूल मथाभिषिञ्चन्
उद्धारको देवगिरो गुणज्ञो लक्ष्मी निवासो जगतुप्रसादः ॥
किसलयकमनीयैरङ्घ्रिपद्मैः स्वकीयैः।
सकलमनुजवन्द्यामागताः धर्मगोष्ठीम् ॥
त्रिदशसदृशवेषाः ! स्वागतायोत्सुको वः,
सदयहृदयमान्यश्छात्रवर्गो मदीयः ॥

विनीतः—

पं० श्रीदेवशरणचतुर्वेदः, व्याकरणाचार्यः, विद्यालयाध्यापकः।

---

## समाचाराः।

श्रीजयगोविन्दओझा मन्त्री श्रीकृष्णाश्रमविद्यालयहरिहरपुर (सारन्) सूचयति वैशाखीयशुक्लनवमीदशम्योरुपर्य्युक्तविद्यालयस्योद्घाटनमहोत्सवो विहारसंस्कृतएसोसिएशन्सभायाः सहायकमन्त्रिणां विद्वदग्रणीनां श्रीमतां पण्डितहरिशङ्करपाण्डेयमहोदयानां सभापतित्वे महता समारोहेण समुत्साहेन च सुसम्पन्नोऽभूत्। तत्र गाजीपुर-बलिया प्रभृति विदूरप्रान्ततोऽपि महान् जनसंमर्दः सहस्रशः सम्मिलितोऽभूत्।

प्रथमदिवसे श्रीमतः परमेश्वरस्य सङ्गीतमुखेन प्रार्थनां विधाय सभाकार्य्यप्रारब्धिः समजनि। प्रथमतः पाठशालायाः प्रधानाध्यापकस्य व्याकरणाचार्य्यस्य श्रीदेवशरणचतुर्वेदिनः संस्कृतमयैःपद्यैः समागतानां महानुभावानां विद्यालयजन्मदातुः श्रीमतः श्रीकृष्णाश्रमस्वामिनश्च शुभाभिनन्दनमभूत्।

ततो विद्यालयमन्त्रिणः विद्यालयीय-संक्षिप्तवार्षिकविवरणपाठानन्तरम् काशीस्थानां प्रसिद्धविदुषां सनातनधर्मस्य प्रसिद्धमहोपदेशकानां दर्शनकेशरिणां श्रीमतां श्रीगोपालशास्त्रिणां सनातनधर्मस्य सार्वभौमिकत्वविषये होरां यावदतिमनोहरं सुललितम् व्याख्यानमभूत्। तदनन्तरं विद्यालय-जन्मदातुः श्रीस्वामि-

वर्य्यस्य "नायमात्मा बलहीनेन लभ्यः" इति श्रुतेराशयमाश्रित्य मानवानां परमकल्याणसाधनाय शारीरिकं मानसिकं च बलं परमोपयोगीति विषये गम्भीरं मननयोग्यं व्याख्यानमभवत् । अवसाने च सभापतिमहोदयैः संस्कृत-भाषायां साम्प्रतमपि राष्ट्रभाषापदाश्रयणयोग्यतां परिष्कृत्य मृतभाषेत्यभिधानं भ्रमप्रमादविजृम्भितमिति साधु निदर्शितम् ।

द्वितीयदिने प्रातः वैदिकेन विधिना हवनात्मकं यागमनुष्ठाय पराह्णे विद्याल-यस्य समुद्घाटनमहोत्सवः श्रीसभापतिमहोदयानां करकमलस्पर्शतः सुसम्पन्नः। तदनन्तरञ्च सभाकार्य्यप्रारम्भे श्रीमतां प्रातःस्मरणीयानां पूज्यपाद-श्रीस्वामि-वर्य्याणामाध्यात्मिकोन्नतिविषयेऽतिगम्भीरं विस्तृतं व्याख्यानमभूत् । यत्र च मानवानामन्तिमं ध्येयं परमं कर्तव्यमात्मज्ञानं, भक्तियोगश्च परमेश्वरसन्तो-षावहइति साधु विवृतम् ।

तदनन्दरम् सनातनधर्मस्य प्रसिद्धविदुषां भारतधर्ममहामण्डलमहो-पदेशकानां श्रीमतां श्रीगोपालशास्त्रिणां वर्णाश्रमधर्मविषये विस्तृतं व्याख्यान-मभूत् । यत्र च शास्त्रिपादैः ब्रह्मचर्य्यमहत्वम्, भारतीयसंस्कृतौ सर्वोन्नतस्थानं स्त्रीणामस्वातन्त्र्यरहस्यम्, भारतीयसभ्यतायाः सर्वोत्कर्षतेत्यादिविषयाः साधु-विवेचिताः । येन च श्रोतॄणां पाश्चात्यवायुविदूषितान्तःकरणानां जन्मान्ध्य-मेकपदे एव व्यपगतम् हृत्पटलञ्चोद्घाटितं समजनि ।

सभावसाने सभापतिमहोदयैरीश्वरभक्तिमहत्त्वं व्याख्याय विद्यादान-माहात्म्यं संस्कृताध्यायिनां निष्कामकर्मयोगानुष्ठानञ्च संसाध्य धन्यवादानन्त-रम् सभाविसर्जनमकारीति ।

---

## संस्कृतविद्यालये सनातनधर्मसभा ।

श्रीविश्वनाथत्रिपाठी सूचयति--वैशाखशुक्ल षष्ठ्यां छपरामण्डलस्थ जगन्नाथसंस्कृतविद्यालये सनातनधर्मविषये विराट् धर्मसभा समजनि । यत्र श्रीखेन्धरत्रिपाठिमहोदयानां सभापतित्वे प्रथमं गायकरत्नस्य श्रीसूरदासस्य विद्यालयमन्त्रिणां श्रीमतां मनोहरम् ईश्वरप्रार्थनागानं जातम् । तदनन्तरं श्रीशिवप्रसाद पाठकस्य श्रीशुकदेवत्रिपाठिनश्च व्याख्यानमभूत् ।

अवसाने च काशीस्थविद्वत्सु परमोच्चपदाश्रितानां तद्ग्रामजन्मनां प्रसिद्धमहोपदेशकानां दर्शनकेशरिणां श्रीगोपालशास्त्रिणां गम्भीरंभावपूर्णं व्या-ख्यानमभूत् येन सभास्थानां सर्वेषामेव हृदये सनातनधर्मोपरि श्रद्धोत्कर्षेण सह मातृ-पितृभक्ति-जन्मभूमिसमुद्धारकर्तव्यादिविषये दृढा श्रद्धा निहिताऽभूत् शास्त्रिणां व्याख्यान-श्रवणेन जना अत्र विषये निःसंशया संजाताः यत् सनातन-धर्मनियमपरिपालनमन्तरा न भारतस्य राजनीतिकदुरवस्था चिरेण परिमर्जिता स्यात् । एकः सनातनधर्मसिद्धान्त एवेदृग् विद्यते यत्स्वीकारेण एक पदे एव विदेशीयवस्तु-भाषाभावादीनां व्यवहारः परिहृतः स्यात् स्वराज्यप्राप्तिश्च साधिता स्यादिति ।

---

# अखिलभारतीय-संस्कृतविश्वविद्यालयान्तर्गतायाः

## काशी-आयुर्वेद सम्मिलन्याः परीक्षा-फलम् ।

### आचार्य परीक्षायाम् प्रथम विभागे--

| छात्र नामानि ] | [ अध्यापक नामानि— |
|---|---|
| श्रीबद्रीनाथ त्रिपाठी | श्रीकाली किशोर विद्याविनोद |
| श्रीनरोत्तम गुणवन्त | प्रणव विद्यालय, काशी । |
| श्रीहरिहर त्रिपाठी | श्रीयतीन्द्रनाथ काव्यतीर्थ |
| | सम्मिलनी विद्यालय काशी । |

### शास्त्री परीक्षायाम् द्वितीय विभागे—

| छात्र नामानि ] | [ अध्यापक नामानि— |
|---|---|
| श्रीशालिग्रामशर्मा गौतम- | दीनानाथ आयुर्विज्ञानाचार्य |
| अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः | गङ्गादेवी पाठशाला 'काशी' |
| श्रीअमरेन्द्रनाथ नियोगी | |
| अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः | श्रीहरिदासशास्त्री, गणेशचन्द्र-कवि- |
| श्रीपुलिनविहारी पट्टनायक | भूषण तिलुड़ी शिक्षाश्रमः 'बांकुड़ा' |
| अयंखलु धर्मशास्त्रेऽपि समुत्तीर्णः | |
| श्रीहरदत्तशर्मा पाण्डेय | श्रीकालीकिशोर विद्याविनोदः |
| श्रीतुलसीराम शर्मा | प्रणव आयुर्वेदविद्यालय 'काशी' |
| श्रीविष्णुदत्तवर्मा वैद्यराज अयं खलुधर्म० | श्रीरामलाल वैद्यमार्तण्ड |
| | आयुर्वेद महाविद्यालय, अमृतसर । |
| श्रीनर्मदाप्रसाद शुक्ल-अयंखलु धर्मशा० | ऋषिकुल ब्रह्मचर्याश्रम, होसङ्गाबाद । |
| श्रीरामानन्दशर्मा मिश्र | श्रीकालीकिशोर विद्याविनोदः |
| | प्रणव आयुर्वेदविद्यालय 'काशी' |
| श्रीअम्बिकेश्वर शर्मा | श्रीयतीन्द्रनाथ काव्यतीर्थ |
| अयंखलु धर्मशास्त्रेऽपि समुत्तीर्णः | सम्मिलनी विद्यालय 'काशी' |

## शास्त्रीपरीक्षायाम् द्वितीय विभागे ।

| छात्र नामानि | अध्यापक नामानि— |
|---|---|
| श्रीगिरिधर शर्माद्विवेदी-अयं खलुधर्मशा. | श्रीराममहाविद्यालय देहरादून |
| श्रीटीकारामशर्मा उपाध्याय-अयं खलुधर्म. | श्रीयतीन्द्रनाथ काव्यतीर्थ- सम्मिलनी विद्यालय काशी, |
| श्रीनरनाथशर्मा आचार्य | श्रीदीनानाथ आयुर्विज्ञानचार्य- गङ्गादेवी पाठशाला 'काशी' |
| श्रीरामनाथशर्मा | श्रीकालीकिशोर विद्याविनोद- प्रणव विद्यालय 'काशी' |
| श्रीक्षितीन्द्र कुमार भट्टाचार्य | श्रीधीरेन्द्रनाथ आयुर्वेदशास्त्री- महेश आयुर्वेदविद्यालय 'काशी |
| श्रीजगतराम शर्मा वैद्यशास्त्री | श्रीरामलाल शर्मा, सनातनधर्म्म आयुर्वेद महाविद्यालय अमृतसर । |
| श्रीप्रेमनाथ शर्मा<br>श्रीदेवीप्रसादशर्मा आचार्य<br>अयं खलु शर्मशास्त्रे ऽ० | श्रीदीनानाथ आयुर्विज्ञानचार्य गङ्गादेवी पाठशाला 'काशी' |
| श्रीअक्षयवट उपाध्याय<br>श्रीदाताराम ढौण्डियाल | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय 'काशी' |
| श्रीशेषागिरिराव कुलकर्णीअयंखलु धर्म० | श्रीप्रेमायतन, तुङ्गभद्रा । |
| श्रीरामानुज द्विवेदी | श्रीयतीन्द्रनाथ काव्यतीर्थ-सम्मिलनी विद्यालय 'काशी' |
| श्रीस्वामी लक्ष्मीगिरि वैद्य | श्रीरामलालशर्मा सनातनधर्म आयुर्वेदमहाविद्यालय अमृतसर । |
| श्रीहरि उपासनी<br>श्रीनन्दावल्लभ पाण्डेय<br>श्रीगणेशदत्त जोशी | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति- कवीन्द्र आयुर्वेद विद्यालय, दशाश्वमेध घाट, बनारस । |
| श्रीनारायणराव नेगी-अयं खलु ध० | श्रीप्रेमायतन, तुङ्गभद्रा । |
| श्रीनृपेन्द्र कुमारसेन<br>श्रीजितेन्द्रनाथ भट्टाचार्य<br>श्रीकेदारनाथ झा | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति। कवीन्द्र आयुर्वेद विद्यालय दशाश्वमेध घाट, बनारस । |

## वैद्यभूषण परीक्षायाम् द्वितीयविभागे।

| छात्र नामानि ] | [ अध्यापक नामानि— |
| --- | --- |
| श्रीमती सुनीतिसिंह | श्रीजगदम्बायुर्वेद विद्यालय काशी। |

## मध्यमा परीक्षायाम् प्रथम विभागे

| छात्र नामानि ] | [ अध्यापक नामानि |
| --- | --- |
| श्रीरामचन्द्र ढौण्डियाल, | श्रीकाली किशोर विद्याविनोद-प्रणव विद्यालय 'काशी' |
| श्रीजयदेव पाठक, अयं धर्मशास्त्रे समुत्तीर्णः | श्रीशम्भुदेव शास्त्री-षड्दर्शन आयुर्वेद भवन 'काशी' |
| श्रीपुलिनविहारी चक्रवर्त्ती, | श्रीधीरेन्द्रनाथ आयुर्वेदशास्त्री-महेश आयुर्वेद विद्यालय 'काशी' |
| श्रीश्यामलाल शर्मा, | श्रीकालीकिशोर विद्याविनोद-आयुर्वेद विद्याप्रबोधिनी पाठशाला, काशी |
| श्रीत्रिपुरानन्द भट्टाचार्य, | श्रीयतीन्द्रनाथ काव्यतीर्थ-सम्मिलनी विद्यालय 'काशी' |
| श्रीनागेश्वर मिश्र<br>श्रीध्रुवदेव द्विवेदी | श्रीशिवदास मिश्र, धन्वन्तरी संस्कृत विद्यालय चैनपुर—छापड़ा, |
| श्रीबाबूलाल शर्मा, | प्राइवेट, |
| श्रीसुधाराणी वसु, | श्रीजगदम्बायुर्वेद विद्यालय 'काशी' |
| श्रीशारदाप्रसाद त्रिपाठी | श्रीयमुनाप्रसाद पाण्डेय आयुर्वेदाचार्य नेपाली खपड़ा, बनारस। |
| श्रीकालीचरण त्रिपाठी | श्रीकालीकिशोर विद्याविनोद आयुर्वेद विद्याप्रबोधिनी पाठशाला 'काशी' |
| श्रीसूर्यदत्त शर्मा, | श्रीगिरिधर शर्मा, श्रीराम महाविद्यालय 'देहरादून' |
| श्रीसत्यबाला देवी, | श्रीजगदम्बायुर्वेद विद्यालय 'काशी' |
| श्रीमोहनलाल शर्मा मिश्र, | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्य वाचस्पति-कवीन्द्रायुर्वेद विद्यालय दशाश्वमेध घाट बनारस, |

| छात्र नामानि | अध्यापक नामानि |
| --- | --- |
| श्रीमहादेव शर्मा, श्रीतुलसीराम तिवारी, | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय-'काशी' |
| श्रीकेशरी मान वैद्य, | श्रीदीनानाथ आयुर्विज्ञानाचार्य, गङ्गादेवी पाठशाला 'काशी' |

## मध्यमा द्वितीयविभागे

| छात्र नामानि | अध्यापक नामानि |
| --- | --- |
| गौरीशंकर मिश्र, | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय 'काशी' |
| श्रीपरमानन्द | श्रीरामलाल शर्मा वैद्य मार्त्तण्ड सनातधर्म आयुर्वेद विद्यालय अमृतसर, |

## मध्यमापरीक्षायाम् द्वितीय विभागे—

| छात्र नामानि | अध्यापक नामानि |
| --- | --- |
| श्रीआत्माराम शर्म्मा | श्रीगिरिधरशर्म्मा श्रीराममहाविद्यालय देहरादून । |
| श्रीरामचन्द्र शर्म्मा | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय काशी । |
| श्रीउद्धवदास महता | श्रीरामकृष्णशास्त्री संस्कृतविद्यालय भूपाल । |

## मध्यमापरीक्षायाम् तृतीयविभागे—

| छात्र नामानि | अध्यापक नामानि |
| --- | --- |
| श्रीमनोहरदत्त शर्म्मा | श्रीज्योतिश्चन्द्र भट्टाचार्य्य वैद्यवाचस्पति, कवीन्द्र विद्यालय, दशाश्वमेध, घाट काशी । |

| | |
|---|---|
| श्रीरामाश्रयशर्म्मा शुक्ल | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति कविन्द्रायुर्वेदविद्यालय, दशाश्वमेध काशी । |
| श्रीतारादत्त त्रिपाठी | प्राईवेट |
| श्रीहरिदत्त भट्ट | ” |
| श्रीशास्त्री भाईशङ्कर | प्राईवेट |
| श्रीसुधीररञ्जन भट्टाचार्य्य | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय काशी । |
| श्रीगङ्गाविष्णुशर्मा गौड़ | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति, कवीन्द्रआयुर्वेद विद्यालय, दशाश्वमेधघाट काशी । |
| श्रीसिद्धनाथशर्म्मा पाण्डेय | |

## प्रथमपरीक्षायाम् ( प्रथमविभागे )

| छात्र नामानि ] | [ अध्यापक नामानि |
|---|---|
| श्रीहरिशंकर चौधरी | श्रीगणेशचन्द्र कविभूषण तिलुड़ी शिक्षाश्रम, बांकुड़ा । |
| श्रीतारादत्त सेनगुप्त | ” |
| श्रीगङ्गाधर नियोगी | ” |
| श्रीक्षितीशचन्द्रराय ( अयंखलुधर्मशास्त्रे समुत्तीर्णः ) | ” |

## प्रथमपरीक्षायां ।

| छात्रनामानि ] | [ अध्यापकनामानि |
|---|---|
| श्रीरामदास शर्मा | श्रीरामलाल शर्मा वैद्यमार्त्तण्ड सनातनधर्म आयुर्वेद महाविद्यालय अमृतसर |
| ” हरिपद बक्सी ( अयंधर्मशास्त्रेसमुत्तीर्णः ) | श्रीगणेशचन्द्र कविभूषण तिलुड़ी शिक्षाश्रम, बांकुड़ा । |
| ” कैलाशनारायणाचार्य्य ( अयंधर्मशास्त्रेसमुत्तीर्णः ) | श्रीरामकृष्ण शास्त्री संस्कृत विद्यालय भूपाल । |

| | |
|---|---|
| " सातकड़ी भट्टाचार्य्य | श्रीज्योतीश्चन्द्र भट्टाचार्य्य वैद्यवाचस्पति कवीन्द्र आयुर्वेद विद्यालय दशाश्वमेध घाट काशी । |
| श्रीपरेशचन्द्र भट्टाचार्य्य | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय काशी । |
| " वीरभानु शर्मा | श्रीरामलाल शर्मा वैद्यमार्तण्ड अमृतसर, |
| " गुरुदयाल शर्मा | " |
| " जयसीराम शर्मा | " |
| " पुलीन विहारीसेन अधिकारी | श्रीगणेशचन्द्र कविभूषण तिलुड़ी शिक्षाश्रम बांकुड़ा । |
| " गेन्दालाल चतुर्वेदी | ऋषिकुल ब्रह्मचर्य्याश्रम हुसङ्गाबाद । |
| " पञ्चाननराय | श्रीगणेशचन्द्र कविभूषण तिलुड़ी शिक्षाश्रम । |
| " रेणुकादेवी | श्रीजगदम्बायुर्वेद विद्यालय काशी । |

## द्वितीयविभागे

| छात्र नामानि ] | [ अध्यापक नामानि |
|---|---|
| " रामलोचन शर्मा | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति कवीन्द्रायुर्वेदविद्यालय काशी । |
| श्रीगौरीशंकरशर्म्मा | श्रीरामलालशर्म्मा वैद्यमार्तण्ड अमृतसर । |
| श्रीभगवानदास मिश्र | ऋषिकुल ब्रह्मचर्य्याश्रम हुसङ्गाबाद । |
| श्रीचेतन भारती | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति, कवीन्द्रायुर्वेदविद्यालय, दशाश्वमेध घाट, काशी । |
| श्रीसुखदेवप्रसाद तिवाड़ी | " |
| श्रीअमरनाथशर्म्मा | श्रीरामलालशर्म्मा वैद्यमार्तण्ड अमृतसर |
| " रामकृष्णशर्म्मा | श्रीज्योतिश्चन्द्र भट्टाचार्य- वैद्यवाचस्पति काशी । कवीन्द्रायुर्वेदविद्यालय दशाश्वमेध घाट । |
| " विंध्याचलपाण्डेय ( अयं धर्मशास्त्रेसमुत्तीर्णः ) | श्रीराममहाविद्यालय देहरादून |

| छात्रनामानि ] | अध्यापक नामानि ] |
| --- | --- |
| „ गयाप्रसादमिश्रः | ऋषिकुलब्रह्मचर्य्याश्रम हुसङ्गाबाद। |
| „ कुमारीचन्द्रवतीगुप्ता | श्रीराममहाविद्यालय देहरादून। |
| श्रीमती लावण्यप्रभादेवी | जगदम्बायुर्वेदविद्यालयकाशी। |
| „ भगवती गुप्ता | श्रीराममहाविद्यालय देहरादून। |
| श्रीहरप्रसाद मिश्रः | „ |
| „ ज्ञानीरामशर्म्मा गौड़ | वेदवेदाङ्गविद्यालय चिड़ावा राजपुताना |
| „ विमलचन्द्र वन्ध्योपाध्याय | श्रीज्योतिश्चन्द्रभट्टाचार्य वैद्यवाचस्पति काशी कवीन्द्रविद्यालय-दशाश्वमेधघाट। |
| „ विश्वेश्वरशर्म्मा मिश्र | श्रीराममहाविद्यालय देहरादून। |
| „ परेशनाथ पाण्डेय | श्रीज्योतिश्चन्द्रनाथ काव्यतीर्थ सम्मिलनीविद्यालय काशी। |
| „ रामनाथशर्म्मा | श्रीराममहाविद्यालय देहरादून। |
| „ धर्मदत्त शर्म्मा अयं धर्म्म शास्त्रे उत्तीर्णः | „ |
| „ काशुराम बादल | ऋषिकुल ब्रह्मचर्याश्रम होसङ्गाबाद। |

## तृतीयविभागे।

| छात्रनामनि ] | अध्यापक नामानि ] |
| --- | --- |
| श्रीरामनरेशवर द्विवेदी | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय काशी। |
| „ देवहरि उपाध्याय घिमिरे | श्रीदीनानाथ आयुर्विज्ञानाचार्य्य गङ्गादेवी पाठशाला काशी। |
| „ तारादत्तशर्मा | श्रीराममहाविद्यालय देहरादून। |
| „ सुरेशानन्दशर्मा कुकेरती | श्रीजानकीनाथवैद्य सरस्वतीविद्यालय नैपाली खपरा-काशी। |
| „ भगवतीप्रसादशर्म्मा | श्रीयतीन्द्रनाथ काव्यतीर्थ सम्मिलनी विद्यालय काशी। |
| श्रीशम्भुनाथ पन्त-पुनताम्बेकर | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाच- |

| नामानि । | अध्यापक नामानि । |
| --- | --- |
| | स्पति; कवीन्द्र विद्यालय, दशाश्वमेध घाट, काशी । |
| श्रीगणेशमिश्र | श्रीशम्भुदेवशास्त्री षड्दर्शन आयुर्वेदभवन काशी । |
| श्रीरामकुलदास | जानकीनाथवैद्य सरस्वती विद्यालय, नैपालीखपरा काशी । |
| स्वामीशिवानन्द | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति कवीन्द्रविद्यालय दशाश्वमेध घाट काशी । |
| चन्द्रप्रसाद शर्म्मा सापकोटा | श्रीदीनानाथ आयुर्विज्ञानाचार्य गङ्गोध्र्वाविद्यालय काशी । |
| श्रीविरिञ्चीलालशर्म्मा गौड़ | श्रीलक्ष्मीनारायण वैद्य जयपुर । |
| श्रीमती षोड़शीबाला देवी | श्रीजगदम्बायुर्वेद विद्यालय काशी । |
| श्रीगङ्गाप्रसाद मिश्र | श्रीज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति कवीन्द्रविद्यालय दशाश्वमेध घाट काशी । |

मदालसा राज्ञी तेष्वेव शास्त्रेषु जीवन्मुक्ता परमस्वतन्त्रा परिगणिता विद्यते । जीवन्मुक्तानामपि भेदद्वयं दृश्यते । तथा हि—मूक उन्मत्तो निष्क्रियो वेत्यादि-संज्ञाविशिष्टो जीवन्मुक्तो ब्रह्मकोटिगो गण्यते । कर्मठः, कर्मयोगी, सर्वशास्त्रज्ञो जगद्गुरुरूपो वेत्याद्याख्याशाली जीवन्मुक्तो ईशकोटिगो गीयते । तत्र देव्यां मदालसायामीशकोटिगजीवन्मुक्तलक्षणं प्रतिपादितं पुराणेऽत्रोपलभ्यते । इत्य-स्मादेव हेतो स्तस्या महाराज्याश्चरिते स्थूलसदाचारतः समारभ्य सूक्ष्माति-सूक्ष्मब्रह्मसद्भावलक्षणान्तमप्युपलभ्यत एव । तत्र नारीधर्मस्य पूर्णता तु विद्यत एव, किन्तु मनुष्यधर्मस्यापि पूर्णता तत्रोपलभ्यते । अन्यच्च आचारपूर्णतया सह ज्ञानस्यापि पूर्णता देदीप्यमाना सर्वथैवोपलभ्यते । ईदृक् सुदुर्लभं देवमूल्यं चरितरत्नमलौकिकभावपूर्णमसाधारणं न क्वापि दृश्यते इति सर्वथा महाराज्ञी मदालसा हिन्दुसभ्यताया वैदिकसंस्कृतेरादर्शस्थानीयेति न विस्मरणी-यम् ॥ १—१० ॥

## कल्पभेदेन मनुष्यशक्तेर्न्यूनाधिक्यविचारः ।

यस्य कल्पस्येयं गाथा तस्मिन् कल्पे एतत्कल्पापेक्षया देव-मानवानां परस्परं सम्बन्धोऽतिघनिष्ठो दृश्यते । येन च मानवपिण्ड-धारिणोऽलर्कस्य राज्ञो देवपिण्डशालिनाऽपि भगवता दत्तात्रेयेणाल्पप्रयासेनैव संगमः समजनि । यतश्च स राजा स्वेच्छया तस्य भगवतो दर्शनं कर्तुं समर्थो बभूवेति । कल्पभेदेन जीवानां शक्तौ न्यूनाधिक्ये भवत एवेत्यविचलो नियमः । सनातनधर्मो हि विश्वव्यापी ईश्वरीयो नियमो विद्यते ।

यद्धि शारीरकं वाचनिकं मानसिकं आहोस्विद् बौद्धं च कर्म सत्त्वगुणं वर्द्धयते तद्धि सुकृतमित्युच्यते, प्रकृतेः सत्वं रजस्तम इति त्रयो गुणाः स्वाभा-विका ज्ञेयाः । शारीरकं वाचनिकं मानसिकं बौद्धं वा कर्म सत्त्वगुणं वर्द्धयत स्वत एव रजोगुणं तमोगुणं च विनाशयति । यो हि जीवः धर्मभावमाश्रित्य जन्म गृह्णाति यस्य च शरीरोपादानयो रजोवीर्य्ययोः शुद्धिरस्ति स हि सुख-दुःखव्यतिकरे समुपस्थिते धर्ममेवाश्रयति ।

## अलर्कस्य राज्ञः सात्त्विकजन्मनिरूपणम् ।

अलर्को हि नरपतिः स्वमातृदेव्याः सकाशात् सत्यधर्मस्य यथार्थस्वरूपमु-पदेशद्वारा गृहीतवान् । तस्य जननमपि धर्मत एवासीदित्यत एव सुखदुःख-सन्धिसमुपस्थितौ स धर्मं न विसस्मार । यो हि प्राणी धर्मपथं न जहाति स हि अग्रिमसन्धौ सद्गुरुं प्राप्नोति । परमात्मा जगद्गुरुरेव विष्णुरूपे शिव-रूपे वा स्वात्मानं दर्शयति । देवलोके दत्तात्रेयो भगवान् जगद्गुरुरूपेण

वतीर्णः । इह मृत्युलोके च सत्यसुहृद्रूपेण विराजते । निष्कामव्रतधारी आत्मनिष्ठो महापुरुषो वा केनापि रूपेण त्रयाणां देवानां प्रतिनिधिर्भूत्वा गुरुपदमाश्रयति ॥ २३-२८ ॥

## वैदिकमार्गेऽधिकारभेदेन पात्रापात्रविचारः ।

पात्रापात्रविचारेण धर्मस्यात्मज्ञानस्य चोपदेशः कर्तव्य इति वैदिकः पन्थाः । यथा हि मणिकाचप्रभृतिषु सूर्य्यरश्मयो यथायथं प्रतिफलिता भवन्ति न मृत्पिण्डेषु तथैव अयोग्यपात्रे ज्ञानोपदेशो व्यर्थतामेतीत्यत एव हेतो र्योग्यपात्रे ज्ञानोपदेशो विधेय इतिपूज्यानां महर्षीणामुपदेशः । उक्तञ्च—

"विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दा यथा स्यां वीर्य्यवत्यहम्" इति ॥

इत्यस्मादेव कारणादिह सनातनधर्म्ममर्य्यादायामधिकारभेदस्य यादृग् व्यवस्था विद्यते न तथेतरस्मिन्धर्मे ।

जगद्गुरुर्भगवान् दत्तात्रेयः शिष्यमलर्कं राजानं तदुपयोग्यान् प्रश्नान् पृष्ट्वा तस्य पात्रतामेव परिचस्कार । पात्रम् हि विवेकी, सावधानो, मलिनश्चेति भेदेन त्रिविधं भवति । यद्धि पात्रं प्रायश्चित्तेन परिष्कृतं भवति तन्मलिनं निगद्यते । यद्धि साधनक्रमद्वारा अग्रेसरं क्रियते तत्पात्रं सावधानमुच्यते । यत्तु गुरुवचनश्रवणसमकालमेवान्तर्मुखीनो भवति तदेव विवेकीत्युच्यते । अलर्को हि नृपति भाग्यवान् विवेकी आसीदिति प्रश्नं कुर्वतो भगवतो दत्तात्रेयस्य प्रश्नं श्रुत्वैव तस्य बुद्धिरन्तर्मुखी बभूव ॥ ३६-४२ ॥

## ऊनचत्वारिंशत्तमेऽध्याये योग-साधनतो मुक्तिप्राप्तिविचारः ।

पूर्वसंस्कारवशाज्जीवो विषयभोगेच्छायामासक्तो भवति, तया च भोगेच्छया सांसारिकेऽस्मिन् गतागतचक्रे परिभ्रमन् निरन्तरं दुःखभाग् भवति । एतस्माद्दुःखजालान्निःसरणमार्गस्यैव योग इति समाम्नानम् । स च योगोऽनेकधा विभक्तः । तथा हि—मन्त्रयोगः, हठयोगः, लययोगः, राजयोग, कर्मयोगः, भक्तियोगः, ज्ञानयोगश्चेत्यादयो बहवो भेदास्तस्य सन्ति ।

इह भगवता दत्तात्रेयेणोपदिष्टो योगसारोऽवसेयः । राजयोगकोटावेवास्य प्रवेशो भवितुमर्हति । बुद्धियोगसाधनस्यायमेव क्रमो विद्यते यद् अज्ञानवशादुत्पन्नममत्ववशतः प्राणी दुःखभाग् भवति । दुःखकारणज्ञानतो वैराग्य-

मुत्पद्यते। विषयवैराग्यतश्च सम्यज्ज्ञानस्य सदसज्ज्ञानस्वरूपस्योदयो भवति। ज्ञानसूर्य्योदये च स्वत एवाज्ञानान्धकारो दूरीभवति। ततश्च ज्ञानात्मकस्य स्वस्वरूपस्यानुभवकालमेव मुक्तिपदमुपतिष्ठते, इदमेव राजयोगस्य साधनम्। इह हि योगशब्देनेदमेव गृह्यते। सर्वाण्यपि योगसाधनानि इममेव राजयोगमाश्रित्यान्ते मुक्तिपदं प्रापयन्ति। इहाध्यायेऽग्रे अन्येषामपि योगानां संक्षेपतो दिग्दर्शनं कृतं विद्यते। तथा योगिनामरिष्टविमोचनाद्युपायानां परम्परया सहायकत्वात् वर्णनं विहितमुपलभ्यते सर्वेऽपीमे साधनाध्वानो गुरूपदेशगम्या एवेति न विस्मरणीयम्॥ १-७॥

## योगसिद्धीनां योगिबन्धकत्वप्रतिपादनम्।

योगानां सामान्यस्वरूपमुक्तं सर्वयोगानां सारभूतो यो हि योगस्तस्यापि स्वरूपं पूर्वं प्रसङ्गतः प्रतिपादितम्। योगविघ्नानाञ्च दिग्दर्शनं कृतम्, योगिनो योगमार्गेऽग्रेसरतो या विपत्तयः समुद्भवन्ति ता एव योगविघ्नशब्देनोच्यन्ते। जीवो हि स्वभावेनैव दृष्टानुश्रविकविषयाणां सेवां जन्मजन्मान्तरे विदधत् साधनबलेन भगवत्कृपाबलेन च योगमार्गेऽग्रेसरो भवति। तत्रापि तं योगिनं दृष्टानुश्रविकविषया न जहति। तत्र तस्मिन् शुभमार्गे तस्य योगिनः स्वत एव या उच्चविषयभोगोपयोगिनी दैवी शक्तिरुदेति सा हि योगसिद्धिरित्युच्यते।

सिद्धीनामनेकविधत्वेऽपि अध्यात्माधिदैवाधिभूतभेदेन त्रैविध्यमेवोह्यम्। तत्र मन्त्रौषधिप्रभृतयो हि आधिभौतिक्यः सिद्धयः। अणिमलघिमाद्य आधिदैविक्यो ज्ञेयाः। वेदाविर्भावशास्त्रप्रकाशनशक्तिभृतयो बौद्धसिद्धय आध्यात्मिक्यः सिद्धयः कथ्यन्ते। एषां शारीरिक-मानसिकबौद्धशक्तिविशेषाणां सर्वविधाभिरपि सिद्धिभिः सम्बन्धो ज्ञेयः। अत्रैव यदि योगी योगमार्गे व्रजन् आसां सिद्धीनां मध्ये कुत्रापि स्खलन्नासक्तो भवेच्चेत्तस्य पतनमवश्यं वेदितव्यम्। यतो हि विषयाः स्वभावत एवात्मानुसन्धानविरोधिनो भवन्ति।

यदा योगिषु इमा दैवशक्तिरूपा योगसिद्धयो विराजमाना भवन्ति तदा तेषां योगिनां सिद्धिप्रदर्शनेच्छाविरहेऽपि कुलकामिनीनामङ्गदर्शनवत् कदाचिदन्येषामपि ताः सिद्धयो दृष्टिपथमारोहन्त्येव। यथा हि कुलाङ्गना पुरुषान्तरं स्वाङ्गं नैव दर्शयति या दर्शयति सा तु व्यभिचारिणी कुलटैव निगद्यते। एवं सत्यपि

कुलाङ्गनायाः स्वपितृभ्रातृपुत्रातिथिभ्यो भोजनपरिवेषणादिसेवाव्यग्रायाः कदाचन वायुवेगवशात् वस्त्राञ्चले दोधूयमानेऽनिच्छयापि पुरुषान्तरैस्तदङ्गदर्शनं क्रियते, तथैव परवैराग्यशालिनोऽपि योगिनोऽनिच्छयैव योगसिद्धयः कदाचित्प्रसङ्गवशात् पुरुषान्तराणां दृष्टिपथमृच्छन्ति चेन्न तद्विरुद्धम् । यदि तु स योगी तासु सिद्धिषु समासक्तो भूत्वा तत्समाराधनपरायणः स्यात्तर्हि तत्पतनमवश्यं भावीति ध्रुवसिद्धम् । इत्यत एवेहाऽध्याये पूर्वं सिद्धिविषये योगिनं सतर्कं विधाय तदुपकारिणामाचाराणां वर्णनं विहितम् ।

## अष्टाङ्गयोगस्वरूपप्रतिपादनम् ।

मन्त्रयोगिनां हठयोगिनां जपयोगिनामेषां त्रयाणामपि कृते उपरि मूले निर्दिष्टा आचारसमूहा उपकारका इति विभावनीयम् । योगभूमिमारोढुमष्टौ सोपानानि सन्ति । येषां वर्णनं परमकारुणिकेन महर्षिणा पतञ्जलिना स्वयोगदर्शने विहितं विद्यते । तत्र बहिरिन्द्रियनिग्रहात्मको यमः, अन्तरिन्द्रियनिग्रहरूपो नियमः, स्थूलशरीराधिपत्यस्थापकमासनं, प्राणक्रियाधिपत्यप्रवर्तकः प्राणायामोऽभिधीयते । इमाश्चतस्रोऽपि क्रिया योगस्य बहिरङ्गान्येवोच्यन्ते । बहिस्तोऽन्तःप्रवेशात्मिका हि क्रिया प्रत्याहारशब्देनोच्यते । अन्तःस्थैर्यविधायिका क्रिया धारणा निगद्यते । आत्मानुसन्धानपरा क्रिया ध्यानमुच्यते जीवात्मपरमात्मनो रैक्यकरणं समाधिशब्दवाच्यं भवति । अयमेव समाधिरिह योगशब्देन वर्णितः । अयमेवाष्टमसोपानात्मकः समाधिः राजयोगस्य साध्यो विषयः । आचारवान् योगी खलु क्रमशः कस्मिन्नपि योगमार्गे संसर्पन्नन्तेऽस्मिन्नेवाष्टमेऽभ्यर्हिते समाधिरूपे सोपाने समागत्य विश्राम्यति ॥ २१-२६ ॥

## प्रणवमाहात्म्यविज्ञानम् ।

सर्वेष्वपि मन्त्रेषु ॐकारस्य महिमा सर्वाऽभ्यर्हितोऽलौकिकश्चोच्यते । सर्वत्रैव देशेषु सर्वास्वपि मनुष्यजातिषु सर्वेष्वपि शास्त्रेषु यानीश्वरनामानि सन्ति, तेषु सर्वेष्वपि ॐकारस्यैव ईश्वरेण सह सर्वश्रेष्ठो वाच्यवाचकभाव सम्बन्धो गण्यते ।

निर्गुणस्य ब्रह्मणः सगुणस्येश्वरस्य वा वाच्यस्य ॐकारात्मकात् वाचकात् प्रणवात् नान्यः कश्चन शब्दो यथार्थवाचको भवितुमर्हति । यतो हि प्रणव एव स्वाभाविकः शब्द ईश्वरार्थवाचकत्वे गीयते । सृष्टिकर्तुः सृष्टिद्रष्टुश्चेश्वरस्य प्रणवेनैव सह साक्षात्सम्बन्धोऽस्ति । यत्र किञ्चित्कार्यं भवति

तत्रैव स्पन्दनं जायते। यत्र स्पन्दनं भवति तत्रावश्यं शब्दोत्पत्ति भर्वतीति स्वाभाविको नियमः। सूक्ष्मातिसूक्ष्मकार्य्येऽपि स्पन्दनं तिष्ठति तत्र शब्दस्थितिरपि ध्रुवैव। सृष्टिरपि कार्य्यञ्चेत्तत्र स्पन्दनमावश्यकम्, ततश्चादिसृष्टिरूपसूक्ष्मातिसूक्ष्मावस्थातो यः शब्दः समुत्पद्यते स एव प्रणव उच्यते। स एव सप्तानामपि स्वराणां निदानम्। परन्तु तत्र प्रथमं गान्धार एव प्रतिफलितो भवति। सृष्टेः प्रागभावावस्थायां ब्रह्मशक्तेरव्यक्तावस्थायां वा कोऽपि शब्दो नासीत्। प्रकृतेर्ब्रह्मशक्तेर्मायाया व्यक्तावस्थया सहैव तस्यास्त्रयो गुणा अपि प्रादुर्भूता आसन्। त्रिगुणात्मिकायां प्रकृतौ यदा प्रथमस्तरङ्गः समजनि तदैव त्रयो गुणा अपि सहैव कम्पेन वैषम्यमापन्ना भवन्ति। तत एव प्रणवस्य सम्बन्धो गण्यते। तत्र प्रणवे त्रयाणामपि गुणानां सत्ता विद्यते। यथा ब्रह्मशक्तिः प्रकृतिस्त्रिगुणात्मिका तथा ब्रह्मवाचकः प्रणवोऽपि त्रिगुणात्मक एव। अस्या अवस्थायाः सकाशादेव गुणेषु विकार आरभ्यते ततश्च सृष्टिसमुद्रेको भवति। अतश्च ब्रह्मणा ब्रह्मशक्तिरूपया प्रकृत्या तद्गुणानां प्रथमावस्थया च सह प्रणवस्य साक्षात्-सम्बन्धोमिश्र-सम्बन्धश्चास्तीति ब्रह्मणो ब्रह्मशक्तेश्च तेन प्रणवेन एकरससम्बन्धोऽभिधीयते। इत्यत एव हेतोः प्रणवान्नास्ति चान्यदीश्वराभिधायकं श्रेष्ठं नाम।

## प्रणवाभिध्यानप्रकारकथनम्।

परमकारुणिको महर्षिः पतञ्जलिरपि—

"तस्य वाचकः प्रणवः" "तज्जपस्तदर्थभावनम्"

इति मुक्तकण्ठमभिदधौ। इतः प्रणवान्नास्त्यन्यः को ऽप्युपायो यः स्वात्मानुभवप्राप्तौ साहाय्यमादधीतेति। यदि कश्चन योगी प्रणवरहस्यज्ञानपूर्वकं समीचीनेन विधानेन तज्जपस्तदर्थभावनं कुर्य्याच्चेदवश्यं स आत्मानुभवं कुर्वन् ब्रह्मीभूतो भविष्यतीत्यत्र नाणुरपि सन्देहलेशः। तस्यैव प्रणवस्य गुरुगम्यं साधनोपायमिह द्वाचत्वारिंशत्तमेऽध्याये "प्रणवो धनुः" इत्यादिना आह। तथा हि—

"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते,
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इति।

प्रणवं धनुः कुर्य्यात् आत्मानं शरं विदध्यात् तल्लक्ष्यञ्च ब्रह्म कृत्वा अप्रमत्तेन तस्मिन् मिलित्वा ब्रह्मार्थयेत इति। कश्च प्रणवः? इति प्रश्ने पूर्वोक्त-

विज्ञानेनैव। तदनुभवं विधाय प्रथमावस्थायां वर्णात्मकं प्रणवं द्वितीयस्याञ्च ध्वन्यात्मकं अक्षरविन्यासायोग्यं प्रणवं जपित्वा सिद्धिं विन्देत। ततश्चान्तःकरणे वाक्यातीतस्य प्रणवस्य धारणां कृत्वा तमेव धनूरूपेण भावयेत् तस्मिन् धनुषि जीवात्मना यथार्थस्वरूपमवधार्य्य तद्धारणया तत्शरस्थाने कृत्वा यथा लक्ष्यभेदकः सर्वं विहाय केवलं शराग्रं लक्ष्यस्य भेद्यस्थानमित्युभयमेव पश्यति, तथैव स योगिराजः स्वात्मानं जगज्जीवोपाधिमपि विस्मृत्य जीवब्रह्मणोश्चैतन्यमेकं निर्धारयेत चेदवश्यमीदृक् प्रणवसाधनतोऽवश्यं निर्वाणपदमृच्छतीति सुनिश्चितः पन्थाः॥ १—१७॥

## अथचत्वारिंशत्तमेऽध्याये वर्णितारिष्टविज्ञानरहस्यम्।

अस्मिन्नध्याये समुपदिष्टा अरिष्टसमूहा न केवलं योगिनामेवोपकारकाः- किन्तु समेषामेव सुधियां ते सहायकाः। अत्राभ्युदयनिःश्रेसाधिगम एव धर्मोद्देश्य इति निर्णये अर्थकामौ विहाय यः कोऽपि अभ्युदयनिःश्रेयसयोरन्यतरस्योभयस्य वा साधने प्रवर्तेत स एव साधकः सामान्यतो योगिशब्दवाच्यो भवितुमर्हति। यतो हि योगसाधनस्य बहवो भेदा गण्यन्ते। यथा हि सामान्यमनुष्याणां कृते संसारवियोगात्मकान्मृत्योर्भयमन्तिमं भयमुच्यते तथैव लोकान्तरगमनसन्धिरेव योगिनां कृते चरमोऽत्यन्तावश्यकोऽवधानीयः समयः समाम्नायते। अतश्च सर्वेषामेव मानवानां मरणकालतः पूर्वमेव स्वपश्चत्वप्राप्तिचैतन्योद्गमाय आध्यात्मिकोन्नतिपथे प्रस्थानजुषां योगिनाञ्च पूर्वत एवावधानदानार्थमरिष्टसंकीर्तनमुपन्यस्तम्।

## विश्वजनीनहिताधानबुद्ध्या महर्षिकृतसर्वशास्त्राविर्भावः।

त्रिकालदर्शिभिः परमकारुणिकै र्महर्षिभिः जगत्कल्याणकामनयैव सर्वाणि लघूनि महान्ति वा शास्त्राणि विस्तरशो बीजरूपतो वा निर्मितानि। आत्मानुसन्धानाय आत्मज्ञानोपलब्धये च ईश्वरानुज्ञया वेदाविर्भावो जातः। तदतिरिक्तानां तदनुगानां विविधानां दर्शनशास्त्राणां तथा पुराणान्तर्गतानां गीताप्रभृति सर्वमान्यग्रन्थानां प्रणयनं यादृक् तैरद्भुतं विहितं विद्यते, अस्मिन् मृत्युलोके तादृग् नान्यै र्भवितुं शक्यम्। भारतवर्षस्य जगद्गुरुत्वेऽयमप्येको महान् हेतुः। इतो व्यतिरिक्तानामायुर्वेद-ज्योतिःशास्त्रार्थशास्त्रस्थापत्यशास्त्र-नीतिशास्त्रोद्भिज्ज-स्वेदजादजीवशास्त्राणां विविधप्रकाराणां जगति प्रसृतानामङ्कशास्त्राणामद्यत्वे सर्वतः प्रसृतानां रसायनशास्त्रीयमूलसिद्धान्तानां प्रणयनं जगच्छिवानुध्यानपरायणैः तैरेव महर्षिभिः ऋतम्भराप्रज्ञाशालिभि रनायासेनाल्पप्रया-

सेनैव संसारशुभसंकल्पतः कृतम्। प्रथमतो ज्यौतिषादिशास्त्राणामाविष्कृति विना योगशक्तिं नैव सम्भवति। पश्चात्तु दृग्गणितादिक्रिययाऽपि तस्योन्नतिर्विधातुं पार्य्यते। यतो हि प्रथमावस्थायां ग्रहनक्षत्रादीनां तेषां सूक्ष्मक्रियायाश्चाविष्कारो विना योगशक्तिं नैव केनापि कर्तुं पार्य्यते। एवमेवायुर्वेदरसायनादिशास्त्राणामपि विज्ञानाविष्कारे विभावनीयम्। जगद्गुरवस्त्रिकालदर्शिनो महर्षयो योगशक्तिसम्पन्नेनान्तःकरणेन यथा लौकिकानां शास्त्राणामाविष्कारमातन्वन् तथैव ते पारलौकिकानामपि परमाभ्यर्हितानां शास्त्राणामिह जगति प्रकाशमादधन्निति सर्वदा स्मरणीयम्। मन्त्रयोगशास्त्रम्, तदीयमन्त्राणाञ्चानेकशक्तिव्यवस्थानपद्धतयः, हठयोगशास्त्रम् तस्य विभिन्नाः साधनप्रणाल्यश्च या अद्यावध्यपि पाश्चात्यपदार्थविज्ञानविदां दृष्टावारोढुमेव नाशकन्, ता अद्भुतप्रभावाः, अन्याश्च लययोगस्य सूक्ष्माः साधनसरणयः, राजयोगस्य च विचित्रालोकातीताः विचारप्रकाराः, स्वरोदयशास्त्रस्य सौक्ष्म्यम्, अरिष्टशास्त्रस्य चमत्काराश्च अर्वाचीनपदार्थवादिनां बुद्धिं विमोहयन्ति। तत्रारिष्टशास्त्रस्य विज्ञानन्तु सर्वतोऽपि रहस्य-वैचित्र्यपूर्णं विज्ञेयम्।

## समष्टिव्यष्टिभावेन ब्रह्माण्डपिण्डयोरैक्यनिदर्शनम्।

वैदिकदर्शनशास्त्रैरिदं साधु प्रमाणितं यद् ब्रह्माण्डं मानवपिण्डञ्चेत्युभयमपि समष्टिव्यष्टिसम्बन्धेनैकमेव। या हि शक्तिर्बृहद्रूपेण ब्रह्माण्डे विद्यते सैव बीजरूपेण पिण्डेऽप्यस्तीति नैव विस्मर्तव्यम्। यतो हि ग्रहोपग्रहाणां या क्रिया ब्रह्माण्डे विवर्तते सैव प्रतिक्रियात्मकत्वेन मनुष्यपिण्डेऽपि परिणमते। पौर्णिमायास्तिथेः प्रभावेण चान्द्रमस्याः शक्त्याः समुद्रे यः कल्लोलोद्गमो भवति, तस्य प्रतिक्रिया मनुष्यपिण्डेऽपि समनुभूयत एव। एतच्चाधुनिकाः पदार्थविज्ञानविदोऽपि स्वीकुर्वन्ति, एवमेव सर्वत्रैव विषयेषु विभावनीयम्। सूक्ष्म-राज्येऽपीयमेव प्रक्रिया प्रसर्पति। यथा एकस्य मनसः प्रभावोऽपरस्मिन् मनसि पात्यते। एकस्मिन्मनसि स्थितो विषयोऽन्येनानायासेनैव ज्ञायते। एकः पुमानन्यपुमांसं मूर्च्छितं कृत्वा तद्धृदयगतं सर्वमेवेतिवृत्तं जानाति, इत्यादिक्रियाकलापमिदानीं पदार्थवादिनोऽपि विद्वांसो दर्शयन्ति। परमकारुणिका महर्षयस्तु प्राणमय-मनोमयकोशयोः क्रियाकलापं श्राद्धोपासनाकर्मभ्यां लोकलोकान्तरेऽपि प्रापयितुं दृढतरं नियमं विरचयामासुर्येनाद्यापि यथावदेव सा प्रक्रिया निरवच्छिन्ना प्रचलिता आयाति, इत्यादिदृष्टान्तसमूहेनेदं सिध्यति यत् समष्टिव्यष्टिरूपेण स्थूल-सूक्ष्मे उभे अपि जगती परस्परं सम्बन्धैक्यं जुषमाणे ब्रह्माण्ड-

पिण्डयोः समानतयैव व्याप्ते स्तः, इत्येतादृश्यामवस्थायां कर्मणां क्रियाप्रतिक्रियाप्रभावोऽपि समष्टि-व्यष्टिषु समासज्जतीति स्वभावसिद्धम्। अनेन च समष्टिव्यष्टिप्रारब्धयोः तारतम्यानुसारेण यथा परिणामे फलमुपतिष्ठति तथैव तत्फलोत्पत्तेः पूर्वं तत्पूर्वलक्षणमपि प्रकाशितं भवतीति स्फुटमूहनीयम्।

## अरिष्टानां योगशक्त्यभिव्यञ्जकत्वसमर्थनम्।

काकशृगालप्रभृतिपशुपक्षिभ्यः छिक्काङ्गविशेषस्फुरणादिभ्यश्च भविष्यच्छुभाशुभशकुनसूचनमपि विज्ञानमिदमेवानुसरति। अनेनैव मौलिकेन कर्मविज्ञानेन स्वप्नदर्शनेन विविधारिष्टदर्शनेन च सम्भाव्यमानभविष्यत्फलाफलनिर्णये साहाय्यमातन्यते। पूर्वोक्तानामरिष्टसमूहानां यानि लक्षणानि निर्दिष्टानि तानि च सर्वाण्येव योगयुक्तैराचार्यैः योगविद्यासाहाय्यबलमाश्रित्यैव निर्णीतानि ॥ १-८३ ॥

## आर्य्यसंस्कृतौ नारीणां सर्वोच्चस्थितिसमर्थनम्।

आर्य्यसभ्यताया वर्णाश्रमसदाचाराणाञ्च महिम्ना विभूषितेयं गाथेति अस्या विज्ञानरहस्यं विवेचनीयं भाति। अनादिकालतः प्रवृत्तायामस्यामार्य्यसभ्यतायां नारी जातिः कीदृशमुच्चपदमधितिष्ठतीति मदालसाया महाराज्ञ्या आदर्शचरितवर्णनप्रस्तावे स्फुटं प्रतिपादितम्। वेदानां शास्त्राणाञ्च रहस्यानभिज्ञैरल्पज्ञैरेव वर्णाश्रमसदाचारेषु दोषाभास आरोप्यते। ते हि उद्गिरन्ति यदार्य्यजातीयसभ्यतायां नारीजातिरस्वातन्त्र्यादिबन्धनविजड़ितेति महदन्याय्यमनुष्ठितं नारीवर्गेण सह तत्सभ्यताप्रवर्तकैर्महापुरुषैरिति, तत्रास्माकमेतद्धि वक्तव्यं विद्यते, यत्ते वृथा विदूषका आर्य्यसभ्यतारहस्यानभिज्ञा भ्रान्ता एव। न ते मनागपि सर्वाभ्यर्हितायाः सर्वजनीनहितावधायिकाया आर्य्यसभ्यताया मर्मस्वरूपं मूलसिद्धान्तमवगच्छन्ति। आर्य्यसभ्यतायां यथा नारी जातिरुन्नतपदासीना विद्यते, न तादृक् कुत्राप्यन्यसभ्यतायामिह जगति पूर्वमासीन्नाप्यधुनैवाऽस्ति, नचाग्रे सम्भावनास्ति तासां तादृक्पदासीनत्वे। यतो हि आर्य्यसभ्यताया मूलस्थितिर्हि नारीणामेव पवित्रतां तासामेव सतीत्वव्रतस्य चरमां काष्ठां तासामेव सदाचारान् तासामेव ज्ञानगौरवमाश्रित्य प्रतिष्ठिता विद्यते। यथा च कियदंशतोऽस्यामेव गाथायां निर्दिष्टमुपलभ्यते।

## आर्य्यसभ्यताया आदर्शविशेषाणां फलश्रुतिः।

आर्य्यसभ्यतायां कीदृक् कामार्थयोः पुरुषार्थयोः स्वतो गौणत्वम् प्रख्याप्य

धर्ममूलकयोरेव तयोरनुष्ठानमाम्नातम्, कीदृक् च तत्र धर्म्ममोक्षयोः पुरुषार्थयोः प्राधान्यं प्रत्तं विद्यते इति विदुषां विमर्शनीयमितिवृत्तमिह गाथायामुपनिबद्धम् ।

अन्यच्चास्यां सभ्यतायां धर्मस्य प्राधान्येऽपि मोक्षस्य सर्वाभिप्रहितत्वं सर्वमान्यत्वं च ब्राह्मणक्षत्रियवर्गे तपःप्रधानायामार्य्यमहिलायाश्च कीदृगङ्गीकृतं विद्यते, तेषां प्रत्याचारं कीदृगध्यात्मलक्ष्यप्राधान्यं वरीवर्त्ति इत्यादि सर्वमपीदमस्यां गाथायां प्रमाणितं विद्यते ।

गृहस्थमात्रस्य पितृपूजनात्मकं प्रधानकर्तव्यं, पितृयज्ञरूपश्राद्धकर्मणा च कथं मानवं कर्तव्यं सुसम्पन्नं भवति, श्राद्ध-कर्म्मणि च कथमुन्नतो विचार आचारश्च रक्षणीय इत्यादयो विषया इह चरिते विशदतयोपनिबद्धाः ।

अन्यच्च अस्मादल्पतरान्मृत्युलोकात् प्रेतलोक-नरकलोक-स्वर्गादिलोकानां कियान् विस्तारः, देवानां कृपासु शक्तिषु च मृत्युलोकस्यास्य कियानवलम्बः, सभ्यानां सर्वासामपि जातीनां दैवे जगति कीदृग् विश्वासः स्थापनीय इत्यादयः सर्वेऽपि ज्ञातव्या असाधारणविषया विस्तरेण विवर्णिताः ।

वर्णाश्रमधर्माचारसमूहप्रतिपालनेन कीदृग् दैवसाहाय्यमासाद्यते अवसाने चात्मज्ञानोपलब्ध्या कीदृक् कृतकृत्यताधिगम्यते, एतदप्यत्रगाथायामुपन्यस्तम् । आत्मज्ञानमुक्त्युपलब्ध्यै कीदृग् विषयवैतृष्ण्यमपेक्ष्यते, विषयेषु प्रवर्त्तमानोऽपि सम्यगुच्चविचारशाली पुमान् नारी वा केन प्रकारेण विषयबन्धदोषतो विमुक्तो भवतीत्यादि विचारजातमप्यस्यां गाथायां साधु समुपनिबद्धम् ।

आध्यात्मिकोन्नत्यर्थं योगक्रियायाः प्राधान्यम् आत्मस्वरूपावगतये च पूर्वं दृश्यप्रपञ्चतः पुरुषस्य स्वातन्त्र्यम् निर्लिप्तत्वं च कथमवगमनीयम्, कथञ्चाविद्याप्रभावोत्पन्नं चिज्जडग्रन्थिरूपं जीवभावं विहायात्मज्ञानी पुरुषो मुक्तो भवति । कथञ्चाविद्यास्मितारागद्वेषाभिनिवेशग्रन्थित आत्मानं गोपयित्वा सर्वात्मना मायाजालत एवात्मानं मोचयितुमात्मज्ञानी पुरुषः समर्थो भवति । इत्थञ्च प्रकृतिराज्ये वसन्नपि ततः सर्वथा अतीतो भवतीत्यादि चिन्ताबीजमिह गाथायामन्तर्निहितं वरीवर्त्तीति विद्वद्भि विभावनीयम् ॥ १–४० ॥

## सृष्टिप्रकरणरहस्यम्—

सृष्टिप्रकरणमतिगहनमभिधीयते । सर्गाविर्भावरहस्यावगत्यनन्तरमेव दृश्यरहस्यावगतेर्द्वारमुद्घाटितं भवति । सनातनधर्मप्रतिपादकेषु वेदशास्त्रेषु सृष्टेश्चत्वारि मौलिकानि पर्वाणि प्रतिपादितानि । तत्र सर्वप्रथमं ब्रह्मप्रकृताव्यक्तावस्थातो व्यक्तावस्थामधिगतायां सत्यामनन्तकोटि-ब्रह्माण्डनायकस्य

सगुणब्रह्मणो जगन्नाथस्य ईक्षणतो या सृष्टिः प्रादुरभूत्, सा हि प्राकृतिकी सृष्टिः प्राथमिकी कथ्यते। यतो हि सा सृष्टिः प्रकृतिस्वभावेनैव भवति। तदानीमेव ब्रह्माण्डगोलकस्य जीववासोपयोगिनो लोकस्य पर्वतसमुद्रादीनाञ्च सृष्टि र्जायते। इयं हि परमाणुसंजातसृष्टिरप्युच्यते।

तदनन्तरं ब्रह्मविष्णुमहेशात्मकस्य मूर्तित्रयस्याविर्भावो भवति। इयमेव मूर्तित्रयी प्रतिब्रह्माण्डं सगुणब्रह्मणः प्रतिनिधिरूपेण ईश्वरत्वेन च गीयते। तदानीञ्च श्रीमतो ब्रह्मणः सकाशात् ब्राह्मी सृष्टिरुत्पद्यते या द्वितीया सृष्टिः कथ्यते। ततः परं ब्रह्मणो मानसपुत्रैः प्रजापतिभिः देव-मानवादिवर्गाणां चतुर्विधभूतसङ्घानाञ्च या विस्तीर्णा सृष्टिः समेधते सैव मानसी सृष्टिस्तृतीयोच्यते। तदनन्तरं मानवेषु चतुर्विधभूतसङ्घेषु च दम्पतिसंयोगजन्या सर्वान्तिमा सृष्टिः संसरति सैव बैजी मैथुनीत्यादिशब्दाभिधेया चतुर्थी सृष्टिरुच्यते।

तत्र पदार्थवादिनो विद्वांसः केवलं प्राकृतिकमैथुनसृष्ट्योरेव कियन्तमंशं प्रत्यक्षीकुर्वन्ति। ब्राह्मया मानस्याः सृष्टेर्वा रहस्यन्तु योगिभिरन्तर्दृष्टिशालिभिरेव केवलमनुभूयते। न तयो रहस्य-परिज्ञाने प्राकृतिकाः पदार्थविज्ञानविदोऽन्ये वा समर्थाः। वेदाविर्भावश्च ब्राह्मयां सृष्टौ मानस्यां च तस्यां भवति। अस्मादेव हेतो र्वेदानां पुराणानाञ्च लौकिकं रहस्यं नैव साधारणबुद्धिगम्यं भवति।

## पञ्चविधपुस्तकरहस्यविज्ञानम्

शास्त्रेषु पञ्चप्रकारकाणि पुस्तकानि परिगणितानि। तानि च यथा—ब्रह्माण्ड-पिण्ड-नाद-विन्द्वक्षराणीति। तत्र ब्रह्माण्ड-पिण्ड-नाद-विन्दु रूपाणि तु पुस्तकानि चिरस्थायीनि भवन्ति। केवलमक्षरमयं पुस्तकं यच्चाक्षरे विन्यस्तं भवति, तद्धि उत्पद्यते विनश्यतीति उत्पादविनाशशीलमुच्यते। तत्र ब्रह्माण्डाधीश्वराणां ब्रह्मविष्णुमहेशानां प्रेरणया पवित्रपिण्डे यत्पुस्तकमुत्पद्यते तदेव ब्रह्माण्डपुस्तकमुच्यते, प्रतिकल्पकल्पान्तरं प्रकाश्यमानो ज्ञानराशि र्यैभ्यो मन्त्रेभ्यः प्रकाश्यते। ये च मन्त्रा ऋषिभि र्याथातथ्येन नादस्वरूपतः श्रूयन्ते तन्मन्त्रमयं पुस्तकं नादमयमुच्यते। तदेव नादमयपुस्तकं वेदनाम्नाऽभिधीयते। श्रुतयो न केनापि निर्मीयन्ते, ता हि सृष्टेरादौ यथायथं श्रूयन्ते। इत्थञ्च ब्रह्माण्डमयं नादमयञ्चेति पुस्तकद्वयमपि मूर्तित्रयसम्बन्धभाग्। प्रथमं भावरूपेण प्रेरणा भवति। ततश्च यथार्थरूपतः ऋषीणामन्तःकरणेषु शब्दरूपेण सैव परिणममाना श्रुतिगोचरा जायत इति।

वेदानां भावार्थमधिगत्य नित्यर्षीणामनुग्रहेण शक्तिशालिनो महामुनयो वेदार्थं स्मृत्वा यत्पुस्तकं विरचयन्ति सैव स्मृतिरित्युच्यते। तदेव विन्दुपुस्तकं

निगद्यते । नित्यर्षीणां प्रेरणया यानि जगति ज्ञानप्रकाश-कर्तॄणि पुस्तकानि समये समये विरचितानि भवन्ति तान्येव पिण्डपुस्तकान्युच्यन्ते । पिण्ड-पुस्तकानि तु दैवासुरभेदेन द्विविधानि भवन्ति । यतो हि नित्यर्षय श्चतुर्दश-स्वपि भुवनेषूपवसन्ति । विन्दुपुस्तकं पिण्डपुस्तकञ्चेत्युभयमपि नित्यर्षिभिः सम्बध्नाति, इतीमानि पूर्वोक्तानि चत्वार्य्यपि पुस्तकानि अलौकिकान्येव, किन्तु पञ्चममक्षरमयं पुस्तकन्तु लौकिकालौकिकोभयभावभृद् नश्वरं गीयते ।

## वेदपुराणयोः स्वरूपभेदरहस्यम् ।

यथा हि—सृष्टेः प्रारम्भावस्थायां तत्कल्पीयो ज्ञानराशिः श्रुतिरूपेण ऋषीणां पवित्रान्तःकरणे प्रकटीभवति तथैव पूर्वकल्पान्तरीया घटनावली पुराणरूपेण भावमयस्वरूपमादाय ऋषीणामन्तःकरणे प्रकाशीभवति । अत एव पुराणानां नित्यत्वं सर्वत्र प्रख्याप्यते । वेदस्तु शब्दरूपेण भावरूपेण चोभयथापि नित्यः । पुराणानां नित्यत्वन्तु केवलं भावद्वारेणैवाङ्गीक्रियते । इत्यत एवास्मिन्नध्याये वेदेन सह पुराणानामपि आविर्भावप्रकारो वर्णितोऽस्ति ॥ २०–२५ ॥

## सृष्टिकर्तुर्ब्रह्मणोऽध्यात्मादिस्वरूपत्रयरहस्यम् ।

इह पञ्चचत्वारिंशत्तमेऽध्याये ब्रह्मणोऽध्यात्मस्वरूपवर्णनं विहितम् । ब्राह्मयाः सृष्टेराविर्भावसमये फलत एकस्मिन् ब्रह्माण्डे यदा जीवसृष्टिः प्रसरति तदा सगुणब्रह्मणः परमेश्वरस्य प्रतिनिधिस्वरूपो यो देवः सृष्टिकार्य्ये व्यापृतो भवति, स एव मूर्तित्रयमध्ये ब्रह्मणोऽधिदैवस्वरूपभाग् भवति । भगवतो ब्रह्मणोऽध्यात्मरूपं तु ब्रह्माण्डीय—सर्वश्रेणिस्थ–पिण्डान्तःकरणेषु बुद्धिरूपेण व्याप्तं ज्ञेयम् । तस्य भगवतो ब्रह्मणोऽधिदैव-स्वरूपं स्वशक्तितः सृष्टिकार्य्यं चालयति । अधिभूतरूपन्तु ब्रह्मलोके निवासमाश्रयति । इमे ब्रह्मणस्त्रयोऽप्याध्यात्माधिदैवाधिभौतभावाः तस्यावस्थाविशेषा एव ॥ ६७—७२ ॥

षट्चत्वारिंशत्तमेऽध्याये प्रथमं सृष्टिप्रारम्भवर्णनावसरे यद्विज्ञानं वर्णितं विद्यते तद्धि ब्रह्मणः सृष्टिकर्तुरध्यात्मस्वरूपेणैव सम्बध्नाति । अत्र प्रकृति-पुरुषयोर्यद्वर्णनं विहितं विद्यते तच्च चिज्जडग्रन्थिरूपात्मकप्रकृतिपुरुषयोर्वर्णनं ज्ञेयम् । परमपुरुषस्तु सदैव निर्लिप्तो निर्विकारश्चोच्यते । तस्य सृष्टिविषये तु मनागपि सम्बन्धो नास्ति । विषयोऽयं ब्रह्मसृष्ट्यैव सम्बध्नातीति पूर्वोक्तं विज्ञानं साधु ॥ ६ १० ॥

## ब्रह्मादिपदानां स्वरूपप्रतिपादनम् ।

ब्रह्मविष्णुमहेशानां त्रयाणामपि देवानामध्यात्मरूपेणैकसगुणब्रह्मस्वरूपत्वेऽपि अधिदैवाधिभौतभेदेन पार्थक्यं स्पष्टमेव प्रतीयते। इमानि च त्रीणि सर्वोच्चानि देवपदान्यपि गीयन्ते, यथा यमेन्द्रमनुप्रभृतिदेवपदान्युच्यन्ते। इमानि सर्वाण्यपि देवपदानि स्थास्नूनिचिरं तथैव तिष्ठन्ति, किन्तु तत्पदाधिकारिणां परिवर्तनं मध्ये मध्ये भवत्येव। इत्यत एव ब्रह्मविष्णुमहेशानामपि आयुःप्रमाणं तेषां रात्रिदिनानामपि प्रमाणं पृथगेव शास्त्रेषूपलभ्यते। यस्य च विस्तृतं विवेचनमग्रे भविष्यति। इत्थमेव मनुप्रभृतिदेवकोटिमुपगतानामन्येषामपि स्वतन्त्रतः आयुर्दिनरात्राणां पृथक् प्रमाणमासाद्यते। तेषां स्थानन्तु शाश्वतिकमेवेति निःसन्दिग्धम्। तत्र भगवतो ब्रह्मणो रात्रौ यः प्रलयो जायते, स एव नैमित्तिक-प्रलयोऽभिधीयते। तथैव श्रीविष्णुशिवरात्रावपि प्रलयो जायते। तयोर्वर्णनमनावश्यकमिति शास्त्रेषु न ते विस्तरशो विवेचितम्। यत्र कुत्रचन सङ्केतत एव ध्वनितं विद्यते। तथा हि विष्णु-पुराणे विष्णुरात्रस्योल्लेख उपलभ्यते, श्रीमतो भगवतो ब्रह्मणः सम्बन्धेन प्रलयस्याधिगतौ सत्यां ज्ञानार्जनस्य कृते तद्बहु विद्यते ॥ ३१—३७ ॥

## जले पृथ्वीनिमज्जनरहस्यम् ।

मृत्युलोकीय-चतुर्विध भूतसङ्घानां सृष्टितोऽपीयं प्राथमिकी सर्गावस्था विज्ञेया। तदानीं मही मानववासोपयोगिनी नैवासीदिति साम्प्रतिकाः पदार्थविज्ञानविदो विद्वांसोऽपि समर्थयन्ति। ते हि तत्र विषये बहु तर्कन्ते गवेषयन्ति च अनुमानतोऽल्पं बहु वा समये समये समुद्गिरन्त्यपि ॥ ६—१० ॥

## दैव्याः सृष्टे रहस्यम् ।

भूलोकादिचतुर्णां लोकानां दैवेन जगता सम्बन्धो ज्ञेयः। यतो हि दैव्या एव सृष्टेरयं विषयः। तदनन्तरमियं धरित्री प्राणिनां वासोपयोगिनी जातेति चतुर्विधानां जीवसङ्घानां समुत्पत्तिः समजनि, येषाञ्च वर्णनं प्रसङ्गतोऽग्रे समागमिष्यति ॥११—१५॥

प्रथमं हि पर्वतादिजडसृष्टिसङ्घे जीवत्वाभावेन तत्राभ्यन्तरम् बाह्यञ्च अन्धकारमयमेवासीद्। ततश्च जीवधारायाः प्रारम्भकाले तत्र चित्सत्तायाः सम्बन्धेन बहिरन्धकारसत्वेऽपि आभ्यन्तरं प्रकाशमयमभूद्। गम्भीरतरस्यालौकिकस्य सृष्टिविज्ञानस्य सर्वबोधसौलभ्यार्थमेवेयं सरणिः सरला

परिष्कृता पुराणाचार्य्यैः । पुराणानि वेदभाष्यभूतानीति पूर्वमेवाभिहितमस्माभिः । गहनातिगहनविषयाणां इत्थं स्पष्टसरलविवेचनया विषयोऽयं प्रमाणदाढर्यमेवासादयति । पिण्डानि च सहजदैवमानवभेदेन त्रैविध्यमृच्छन्ति तत्र सहजपिण्डस्य सृष्टिरहस्यमिदमवगमनीयम् ॥ १६—२० ॥

## सृष्टिविज्ञान-रहस्यम् ।

अस्मिन् सप्तचत्वारिंशत्तमेऽध्याये चरमभागे यत्सृष्टिवर्णनं विद्यते तत् पूर्वोक्तचतुर्विधसृष्टिभिरेव सम्बध्नाति । या हि प्राकृतिकी सृष्टिरुच्यते सा ब्रह्मणोऽपि प्रादुर्भावतः पूर्वमेव जगज्जनन्या लीलामात्रेणैव जायते । तस्याः सृष्टेरन्तिमं विवरणं ब्रह्मणः प्रादुर्भावादनन्तरम् मुख्यसर्गनाम्ना व्यवहृतं विद्यते । तत्राऽपि भगवतो ब्रह्मणः प्रादुर्भावानन्तरं ये नवसृष्टिभेदा निर्दिष्टास्तेषु चतुर्थ एवाऽयं भेदोऽवगन्तव्यः ।

भगवतो ब्रह्मणः प्रादुर्भावेन सहैव महतः सृष्टिरारभ्यते तदानीमेव विराड्ब्रह्मणोऽन्तःकरणमुत्पद्यते, यद्धि एकस्य ब्रह्माण्डस्य समष्टिरूपमन्तःकरणमुच्यते । तस्य च महत्तत्त्वमुपादानं भवति । ब्रह्मा च तस्याधिदैवत्वेन प्रख्याप्यते । ततश्च सनकसनन्दनप्रभृतीनां पूर्णावयवानां देवानां सृष्टि र्जायते । ततश्च प्रजापतिनाम्नां देवानां सृष्टिरुद्भवति । तदनन्तरं तैरेव मानस्याः सृष्टे र्विस्तारो विधीयते, ततश्च दम्पतिसंयोगजन्याया मैथुनसृष्टेरुद्गमो भवति, या हि वैजी सृष्टिरित्यपि संज्ञायते । इत्थमेव सृष्टिविस्तारो विजृम्भते । सैव सृष्टिरिह यथाक्रममनिर्दिश्य श्रेणिविभागेन नवधेह प्रपञ्चिता विद्यते । तस्याः संक्षिप्तं समाधानमित्थमूहनीयम्-तथा हि—महत्सृष्टिर्हि चित्सत्ता-सम्बन्धेनालौकिकभावमयीत्युच्यते । इत्थं हि चतुर्थी मुख्यसृष्टिर्जीवभावरहिता निगद्यते । इत्यत एवाभ्यां द्वाभ्यामपि सृष्टिभ्यां त्रिविधानां पिण्डानां सम्बन्धो नैव सुघटते । अवशिष्टासु सप्तसु सृष्टिषु नानात्मकानामपि पिण्डानां सम्बन्धः सुघटः सुगम्यश्च । अपरश्च महत्सृष्टिः भूतसृष्टिः वैकारिकी च सृष्टिः तिस्रोऽपीमाः सृष्टयः सहजकर्माधीनाः, अवशिष्टास्तु ऐशजैवकर्माधीना विज्ञेयाः ।

स्थूलब्रह्माण्डोत्पत्तिवेलायाम् अव्यक्तावस्थातो व्यक्तावस्थामासादितवत्याश्च प्रकृतिदेव्यां जीववासोपयोगिनो लोकस्य च भित्तौ प्रतितिष्ठन्त्यां सत्यां परमाणूनां परस्पराकर्षणतो या हि स्थूलजीवपिण्डरहिता सृष्टिरुत्पन्ना सैव जडसृष्टिर्गीयते, सैव च मुख्या सृष्टिरित्यप्याख्यायते इति सर्ववादिसम्मतः सिद्धान्तः । ततश्च प्रकृत्यालिङ्गितस्य सगुणब्रह्मणः पुरुषरूपेण सृष्टिकर्तृतयाऽवतरणं भवति । तदेव भगवतो ब्रह्मणः प्रादुर्भावावस्थया महत्सृष्ट्याः सम्बन्धो

विराट्देहेन दर्शितः । या हि कौमारसृष्टिरुच्यते सा पूर्णावयवानां परमहंसस्वरूपाणां सनकसनन्दनादीनां सृष्टिः । ततश्च भगवतो ब्रह्मणोंऽशेन समुत्पन्नानां प्रजापतीनां सकाशात् भूतसृष्टि र्जायते । देवलोकानाञ्च दैवसृष्टिरनुग्रहसृष्टिरित्यादयः सर्वा अपि सृष्टयो देवपिण्डसृष्टय एवोच्यन्ते । चतुर्विधा भूतसङ्घाः तिर्य्यक्सृष्टिप्रभृतयश्च सहजपिण्डसृष्टिमध्यपतिता आख्यायन्ते, मनुष्यसृष्टिश्च मानवपिण्डगोच्यते ।

सृष्टेरादिवेलायां सर्वेषां भूतानां त्रयाणां पिण्डानाञ्च या सृष्टिरुत्पन्ना सा सर्वापि मानसिकबलेनैव स्वात्मलाभमलभन्त । ततश्च मिथुनजा वैजी सृष्टिः प्रारब्धेति विशदविचारणया गम्भीरस्य सृष्टिरहस्यस्य विज्ञानं मनोगोचरं भवति । पदार्थविज्ञानविदो विद्वांसस्तु न कदाप्येतासां सर्वासां सृष्टीनां रहस्यमवगन्तुं क्षमाः । यतो हि ते तु केवलं परमाणुसञ्जाताया मुख्यसृष्ट्या एवानुसन्धाने व्यापृता जन्म यापयन्ति तेषां ततोऽग्रे गमनस्यावसर एव नास्ति । ईदृगेव तेषां निरुद्धो जडविज्ञानेन निःश्रेयसोऽध्वेति संक्षेपः ॥ २१-३६ ॥

## चतुर्विधसृष्टिरहस्यम्—

अष्टचत्वारिंशत्तमेऽध्याये प्रारम्भ एव वर्णिता चतुर्धा सृष्टि र्न पिण्डविचारणया विहिता नापि चतुर्विधभूतसङ्घाभिप्रायेणैवोक्ता, किन्तु गतागतचक्रसम्बद्धेयं चतुष्प्रकारा सृष्टिर्लक्षिता । तत्र मातृगर्भतो जायमाना मृत्युलोकसम्बन्धिनी मनुष्यसृष्टिः प्रथमा । अन्यास्तिस्रो देवसृष्टयो देवानां साहाय्येनाकस्मादेव जायन्ते । तासां भेदास्त्वेवमूहनीयाः । तथा हि—प्रेतनरक-पितृलोकानामेका दैवी सृष्टिः, ऊर्ध्वस्य स्वर्गलोकस्य च द्वितीया दैवी सृष्टिः, अधःस्थितानां सप्तानां पाताललोकानामसुरयोनिगा दैवी सृष्टिरिति तिस्रो देव-सृष्टयः। गतागतचक्रीयनियमानुसारं जीवाः स्व-स्व-शुभाशुभकर्मफलभुक्त्यै चतुर्ष्वप्येतेषु लोकेषु पौनःपुन्येन आवर्त्तमानास्तिष्ठन्ति । एतदेव जन्मान्तरचक्रावर्तन मावागमनचक्रमित्युच्यते । अत्र वर्णिता स्थावरसृष्टि र्मृत्युलोकान्तर्गतैव विज्ञेया । तथा अत्रत्यं जलीयंवर्णनमपि न साधारणजलविषयकं ज्ञेयमपि तु कारणवारितस्तत्सम्बध्नाति ॥ १-१२ ॥

## विस्तरशः सृष्टिविज्ञानरहस्यविवरणम् ।

सृष्टिविज्ञानस्य यथार्थतोऽवगतिस्तु समाधिस्थबुद्धिशालिभिः योगिभिरेव कर्तुं पार्य्यते साधारणबुद्धिशालिभिर्नरैस्तु तदवगतिर्दुर्लभैव । अन्यच्च पुराणादिषु विवेचिता सृष्टिपद्धति र्न दार्शनिकवर्णनपरिपाटीमनुरुन्धे । किन्तु

विविधानां सृष्टिस्तराणां प्रसङ्गेन प्रकत्रैव पुराणादिषु वर्णनं क्रियते, येन विवेचनशैली सरला न भूत्वा दुरूहतां जटिलतामासाद्य असम्बद्धवत्प्रतीयते साधारणबुद्धीनां नराणाम्। अतश्चेह सृष्टिप्रकरणस्य पौर्वापर्य्यसम्बन्धः स्पष्टयितव्यः प्रतिभाति। तथा हि—प्राकृतिकसृष्टि-मानससृष्टि-वैजसृष्टिभेदेन सृष्टिप्रकरणस्य साधारणतस्त्रयस्तरा विद्यन्ते। तत्र प्राकृतिकी सृष्टिः सगुणब्रह्मणः, मानसी च ब्रह्मणः प्रजापतीनाञ्च सृष्टिरुच्यते। वैजी सृष्टिस्तु जीवानां मिथुनभावतो जायमाना सृष्टिरेव कथ्यते।

प्रलयपयोधिप्रवाहे सर्वेऽपि ग्रहोपग्रहादिसृष्टिजाः पदार्थाः परस्परमाघातेन विनष्टाः परमाणुतामासादयन्ति। ततश्च कल्पान्तरे यदा पुनः सृष्टिप्रवाहः प्रचलति तदा ब्रह्मप्रकृतिरव्यक्तावस्थाया व्यक्तावस्थामधिगतवती कार्य्याण्यारभते। सैव ब्रह्मप्रकृति र्जगतः सृष्टिस्थितिलयात्मकं कार्य्यजातमातन्वती संसारचक्रं चालयति। ब्रह्म तु केवलं निर्लिप्तं सदुदासीनं भूत्वा साक्षित्वेनेक्षमाणं तिष्ठति। इयं हि ब्रह्मणः सगुणावस्थोच्यते। अयं हि दर्शनशास्त्राणामीश्वरभावोऽभिधीयते।

## तत्र सृष्टिक्रमविचारः।

अत्र प्रथमं प्रकृतिस्वाभाव्यात् रजोगुणात्मकेनाऽऽकर्षणेन परमाणुपुञ्जमैक्यं जुषाणं राशीभवति। अयं हि न्यायवैशेषिकाणां सृष्टिसम्बन्धी मौलिकः सिद्धान्तः। अत एव ते पदार्थवादिकोटावेव ईश्वरतत्त्वस्वीकारेण सेश्वरपदार्थवेत्तारः कथ्यन्ते। तदानीमीश्वरेच्छावशात् जीवादृष्टनिमित्तमवलम्ब्य परमाणूनां परस्परसम्पर्कतो ग्रहोपग्रहाणां स्थूललोकनिर्माणं भवति। तदानीमपि ब्रह्माण्डं जीवानां वासोपयोगि न सम्पद्यते। केवलं पञ्चभूतानां स्थूलाः परमाणवः ब्रह्माण्डस्य स्थूलमेवाङ्गं सम्पादयन्ति। इमामेव प्राकृतिकीं सृष्टिमाधुनिका जडविज्ञानविदोऽपि कियद्दूरमनुमिन्वन्ति। अयं सृष्टितत्त्वस्य प्रथमः स्थूलः स्तरः समाम्नायते। ततश्च प्रतिब्रह्माण्डमधिदैवात्मकत्रिमूर्तिस्वरूपतः सगुणब्रह्मप्रतिनिधयो ब्रह्मविष्णुमहेशाः प्रादुर्भवन्ति। येषाञ्च वर्णनं पुराणादिषु इत्थमुपलभ्यते। यद् सत्त्वगुणाधिदैवो भगवान् विष्णुर्यदा योगनिद्रानिगूढनयनो भवति तदानीमेव रजोगुणाधिदैवो भगवान् ब्रह्मा तदीयनाभिकमलतो जागृतो भूत्वा प्रादुर्भवति। ततश्च तमोगुणाधिदैवो भगवान् महेशस्तयोरेव देहयोरलक्षितरूपेण निगूढस्तिष्ठतीति।

इयं हि भगवतो विष्णोर्योगनिद्रा न हि जीवजगतः सामान्यनिद्रावस्थानीया विज्ञेया। इयं हि जगतो दृष्टिमपसार्य्य स्वस्वरूपेऽवस्थितस्य भगवतः समा-

धिगम्यैव निद्रोच्यते । अस्यां दशायामेव भगवान् ब्रह्मदेवः सृष्टिचक्रं चालयति । सोऽपि योगयुक्त एवेमां रचनां विस्तारयतीति सृष्टिरहस्यविज्ञाने समाधिजमन्तःकरणमवश्यमपेक्ष्यते ।

## ब्रह्मदेवयोगिसमाध्योरान्तर्य्यविचारः ।

यद्यपि भगवतो ब्रह्मणः समाधौ साधारणस्य योगिनश्च समाधौ महान् भेदो विद्यते । यतो हि योगिनोऽन्तःकरणन्तु जीवसम्बन्धिव्यष्टिलक्षणकमन्तःकरणं भवति । ब्रह्मणस्तु अन्तःकरणं ब्रह्माण्डसम्बन्धि समष्टिस्वरूपं विद्यते । तथापि योगयुक्तान्तःकरणानां समाधेः प्रक्रिया तु समानैवेति सर्वमान्यो मार्गः । निष्कर्षतस्त एव महापुरुषाः सृष्टितत्त्वरहस्यं साधु विज्ञातुमर्हन्ति ये हि पातञ्जलशास्त्रोक्तौ सविकल्पकनिर्विकल्पकात्मकसमाधिभेदौ तत्रापि सविकल्पकसमाधेः अस्मितानन्दविचारवितर्कानुगतांश्च चतुरो भेदान् अनुभवात्मना साधु स्फुटमवगच्छन्ति ।

## सृष्टिरहस्यस्य दुर्विज्ञेयत्वम् ।

भगवतो ब्रह्मदेवस्य मानसी सृष्टिः, ततश्च परमहंसरूपाणां सनकादीनां सृष्टिकरणेऽनिच्छाप्रकाशः, तदनन्तरञ्च प्रजापतीनां मानससृष्टिरहस्यमित्यादि सर्वमेवातिगूढं रहस्यपूर्णञ्च विद्यते । एतत् सर्वमेव मानससर्गान्तर्गतं ज्ञेयम् । अस्मिन्नध्याये प्रायःसर्वमेव मानससृष्टिब्राह्मसृष्ट्योरेव प्रकरणं विज्ञेयम् । यदा भगवान् ब्रह्मदेवः सृष्टिकार्य्यसम्पादनाय जगन्मातुरिच्छाऽनिच्छात्मकस्वाभाविकेच्छया आहोस्वित् तस्या जगन्मातुर्लीलामय्याः भ्रूकुटेः सञ्चालनमात्रेणैव स्वप्रादुर्भावमासादयति तदा योगयुक्तान्तःकरणो भूत्वा समाधिस्थबुद्धिप्रभावेण "यथापूर्वमकल्पयद्" इति सृष्टिसिद्धान्तानुसारं कारणवारिणि निमज्ज्य सृष्टिचक्रचालने व्यापृतो भवति । पूर्वकल्पे यदा प्रलयो बभूव तदानीं चतुर्दशलोकात्मकं ब्रह्माण्डं यान् समष्टिसंस्कारानासाद्य प्रलयगर्भे निममज्ज त एव समष्टिसंस्कारा अधुना कारणवारिशब्दवाच्या भवन्ति । भगवान् ब्रह्मदेवस्तु अस्मितानन्दानुगतसमाधिद्वयानुसारं स्वस्वभावेनैव प्रजापतिगणाश्च आनन्दविचारानुगतसमाधिद्वयसाहाय्येन भगवतो ब्रह्मदेवस्य प्रेरणया दैव्याः सृष्टेः सञ्चालनं कुर्वन्ति । कस्यां अवस्थाया कया च लैकिक्या शक्त्या जगज्जनन्या महामायायाः प्रभावेण सृष्टिकार्य्यं प्रचलति तत्तु समाधिस्था योगिन एव कियदधिगन्तुमर्हन्ति नान्ये साधारणबुद्धयो मानवाः । पुराणादिशास्त्राणि तु तस्या अवस्थाया कियन्त सङ्केतमेवकुर्वन्ति ।

ब्रह्मदेवस्य जले निजांशप्रक्षेपः, रजोगुणप्रभावेण समष्टिकर्मबीज-

इत्यतश्च रूपान्तरेण परिणतानां सर्वेषामपि रसानां एक एव रसो मूलकारणमित्यकामेनापि स्वीकरणीयमेव। ततश्च सर्वेषामपि पूर्वोक्तानामेषां रसानां कारणस्वरूपो रसमयः परमात्मैवेति स्वीकर्तव्यमेव। स एव निखिलानामपि रसानामाधारः उपादानञ्चेति पर्य्यवस्यति।

प्रकृते वैचित्र्यात् उपाधेस्तारतम्यभेदेनैव रसानां भेदः सिध्यति। यथा ह्येक एवाकाश उपाधिभेदेन घटाकाश-जलाकाश-मठाकाश-महाकाशादि-बहुरूपेण प्रतिभासते, वस्तुतस्तु स एक एवाकाशोऽस्ति। तत्र नानात्वगन्धोऽपि नास्ति। तथैव निखिलानामपि रसानां निदानस्वरूपात्तस्मात्परमपुरुषादेव समेषामपि रसानां सृष्टिर्भवति। सर्वेऽपि ते रसाः रसस्वरूपस्य तस्य परमात्मन एव स्वरूपं भजन्ते इत्यपि न विस्मरणीयम्। अत एव स निखिलात्मा रसस्वरूप उच्यते।

अन्यतश्चेदमपि विचारणीयं विद्यते यद्रूपरसगन्धस्पर्शादिविषये या आनंदोपलब्धिर्भवति तस्या गोचरा न रूपादयो विषया अपि तु स एवानन्दमयः परमात्मा। यतो हि—यदि रूपादि-विषयेषु आनन्दसत्ता स्यात्तर्हि यथेच्छं भुक्तवतां तथा रोगार्त्तानामपि मानवानां सुस्वादुभोजनेनानन्द एव सर्वदा स्यात् तथैव। सर्वत्रापि विषयेषु यथेष्टं तृप्तिजुषामपि पुनस्तदुपभोगेनानन्दोपलब्धिरेव सदा स्यादिति। भवति तु नैवम्। अतो हि नहि विषयाधीनं सुखं विद्यते किन्तु विषयाणां तत्तदिन्द्रियैः सह सम्पर्कात् द्रुतम् अन्तःकरणे एकतरत्वोपलब्धिर्जायते, यतश्च स्वत एव चित्तं समाधिभूमिमधिगच्छति। तत्रैव समाहिते चेतसि आनन्दरश्मिमालिनः श्रीमतो भगवत आनन्द-ज्योतिः स्वत एव स्फुरति, येन चानन्दोद्गमो भवति। अतश्चानन्दो विषये इन्द्रिये वा न विद्यते किन्त्वानन्दमये ब्रह्मण्येव तत्सत्ता स्फुरति।

इह जगति जडचेतनात्मकमुभयमपि तत्त्वं प्रत्यक्षमेवोपलभ्यते। तत्र चेतनं जडसञ्चालकं ज्ञानस्वरूपञ्च विद्यते। जडन्तु तेनैव सञ्चाल्यते इति न ज्ञानमयं तत्स्वरूपमुपलब्धुमर्हति। अतश्चेदमनुमानसिद्धम् विद्यते यन्मायाया एवाज्ञानात्मिकायाः स्वरूपमिदं जडतत्त्वमिति। श्रुतिरप्येवमेवाह—

"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।"

"स मां पश्यति विश्वात्मा तस्याहं प्रकृतिः शिवा।
तत्सान्निध्य-वशादेव चैतन्यं मयि शाश्वतम्।
जडाऽहं तस्य संयोगात् प्रभवामि सचेतना
अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा"

फलतः तस्यैव चेतनात्मकस्य ब्रह्मणः सान्निध्येन सचेतना प्रकृतिः सृष्टि-स्थितिप्रलयं साधयति। अन्यच—

"आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज,
सृजन्रक्षन्हरन् विश्वं दध्रे संज्ञां क्रियोचिताम्"
"त्वं देव शक्त्यां गुण कर्मयोनौ रेतस्त्वजायां कविरादधेऽजः।"
दैवात्क्षुभित-धर्मिण्यां स्वस्यां योनौ परः पुमान्
आधत्त वीर्य्यं साऽसूत महत्तत्त्वं हिरण्मयम्। इत्यादि।

परमात्मन आनन्दस्वरूपं कथमनुभवितुं शक्यमित्यस्यानुसन्धानम् पूर्वमेव विहितम्।

ननु ब्रह्मणः सत्यपि सच्चिदानन्दस्वरूपत्वे कथमिह दर्शने आनन्दमयस्यैव केवलस्य तत्-स्वरूपस्योपन्यास उपलक्ष्यते? इति प्रश्ने उत्तरयति। इह दर्शने सृष्टेः स्वरूपस्य तत्कारणस्य च समुचितं गवेषणं विहितं विद्यते। येनेदमेव सिध्यति यदानन्दानुभवार्थमेव चितः सदनुभवो भवति सतश्च चिदनुभवो भवति तेन च क्रिया समुत्पत्तिर्जायते। एतदेव सृष्टिविस्तारस्य मौलिकं विज्ञानम्। अत एवास्मिन् दर्शने आनन्दं लक्ष्यीकृत्यैव परमात्मनः स्वरूपनिर्वचनं कृतम्।

अन्यतश्च ब्रह्म तत्प्रकृतिश्च "अहं ममेतिवत्" परस्परं सम्बन्धं भजतः। अतश्च गायकतद्गानशक्तिदृष्टान्तेन ब्रह्म सच्चिदानन्दमयमपि सत् केवलम् आनन्दमयमेव गण्यते, तत्प्रकृतिश्च शक्तिरूपिणीति उभयस्वरूपस्यापि तस्यानुभवार्थं जडैव कथ्यते॥ २॥

रसजडयोस्तत्त्वं विस्पष्टयितुं लक्षणमाह—

**रसो ज्ञानरूपो जडस्त्वज्ञानरूपः॥ ३॥**

तत्र रसो ज्ञानात्मक उच्यते जडश्चाज्ञानस्वरूपोऽभिधीयत इति सूत्रार्थः। आनन्द-रूपस्य परमात्मन आनन्दसत्ता जगति सर्वत्रैव विद्यते। यस्य चानन्दस्य प्राप्तिं जीवः प्रकारद्वयेनोपलभते। स चैकः प्रकृतौ प्रतिबिम्बित आनन्दोऽन्यश्च साक्षाच्चिदानन्दः, इत्युभावपि आनन्दौ जीवो लभते। तत्र प्रकृतिप्रतिबिम्बितो हि आनन्दो वास्तविकानन्दस्यैव च्छायोच्यते तद्धि सुखमित्याहुः। प्रकृतिपरपारे स्थितं शुद्धमानन्दमेवानन्दं ब्रुवन्ति। उक्तञ्च श्रुतिस्मृत्योः—

"एषोऽस्य परमानन्द एतस्यैवानन्दस्यान्यान्यानि भूतानि मात्रामुपजीवन्ति"

"अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक्"
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ" ।
एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः
अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ।

फलतः परमानन्दस्थितिस्तु तस्मिन् ब्रह्मणि एव विद्यते । अन्यान्ये जीवास्तु तस्यानन्दस्य छायामात्रमाश्रित्यैव नन्दन्ति । साऽपि आनन्दच्छाया मायां द्वारीकृत्यैव जीवान् समुपैति । सा च माया भ्रमकारिणीति तद्बद्धा अज्ञानिनो जीवा वैषयिकं सुखमेव परमानन्दं मन्वानाः तत्रासक्ता भवन्ति । यथा गन्धमृगः स्वनाभावेव विद्यमानं गन्धमजानन् तद्गन्धोन्मत्तो भूत्वा तदन्वेषणायेतस्ततः परिभ्रमति । तथैव सर्वव्यापकस्य आनन्दरूपस्यैव भगवत आनन्दसत्ता सर्वदा सर्वेषु जीवेषु व्याप्नोतीति तस्यैवानन्दस्यान्वेषणे सदा सर्वेऽपि प्राणिनः प्रयतन्ते । श्रुतावप्युदीरितम्—

"यदा वै करोति सुखमेव लब्ध्वा करोति,
नासुखं लब्ध्वा करोति, सुखमेव लब्ध्वा करोति ।
सुखं तद्विजिज्ञासस्व नाल्पे सुखमस्ति भूमैव तत्सुखम्" इति श्रुतिः ।

"समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
यदेतदन्तःकरणेन गृह्यते" ॥

सत्यप्येवमविद्याग्रस्ता जीवाः सामान्योपले स्पर्शमणिभ्रमवत् विनाशिनि दुःखोदर्केऽपि विषयसुखे परमानन्दभावनया आसक्ताः प्रतारिता भवन्ति । अत एव जिज्ञासूनां संशयभञ्जनाय लक्ष्यस्थिरीकरणाय चोच्यते, यद् स्वरूपे ज्ञानस्य नित्यस्थित्या रसो ज्ञानमयो मतः । फलतो ज्ञानपूर्णतयैवानन्दस्य" पूर्णता आसाद्यते । श्रुतावप्युदीरितमस्ति यन्निर्विकल्पकसमाधौ स्थितस्य पूर्णज्ञानिनो योगिनो या आनन्दोपलब्धिर्जायते न सा शब्दप्रतिपाद्या भवितुमर्हति, किन्तु केवलं ज्ञानराज्ये साऽनुभवितुमेव योग्या भवति । उक्तञ्च गीतोपनिषदि—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।

वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चाऽपरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥

स्मृतावप्युदीरितम्—

शब्दो न यत्र पुरुकारकवान् क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना ।
तद्वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद्विदु रजस्रसुखं विशोकम् ॥

अज्ञानेनैव सृष्टिसमुत्पत्ति र्वर्णिता जडञ्चाज्ञानमयमेव निगद्यते । यतो हि कार्य्यं कारणञ्चोभयमप्येकरूपमेव भवति । नामरूपरहितेऽद्वितीये कारण-ब्रह्मणि अनन्तवैचित्र्यपूर्णस्य नामरूपात्मकस्य कार्य्यब्रह्मणो या प्रतीतिर्भवति सा हि केवलमघटनघटना-पटीयस्या मायाया एव लीला विज्ञेया । कार्यं दृष्ट्वा कारणस्यानुमानं भवति, इत्यतश्च मायाकार्य्यमिदं जगदज्ञानेनैव ईदृग् वैचित्र्यमासादयति । अस्य जगतः कारणरूपा जडात्मिका मायाऽपि अज्ञानरूपिणी । रसात्मनोरभेदे ज्ञानात्मनोश्चाभेदे रसोऽपि ज्ञानस्वरूप इत्यत्र कः सन्देहः । इत्थञ्च चेतनस्वरूप आत्मा यदा प्रकृतिमपेक्षते तदा प्रकृति जडेति कथने कः सन्देहः । प्रकृतिरेव सृष्टिमातनोतीति स्वीकारे अज्ञा-नमेव सृष्टेर्मूलकारणमित्युक्तौ कः संशयः, तथा च जडमज्ञानरूपमिति सुतरां पर्य्यवसितोऽर्थः॥ ३ ॥

आत्ममाययोः परस्परविरुद्धत्वात् तयोरैक्यानैक्यसंशयमपाकरोति—

**ज्ञानरूपत्वात्स एक एवाज्ञानरूपत्वात्तु साऽनन्ता ॥ ४ ॥**

आत्मा हि एकोऽद्वितीयश्च, यतो हि स ज्ञानरूप[1] उच्यते, माया हि

1 ज्ञानशब्देनेह घटज्ञानं पटज्ञानं मठज्ञानमित्यादिवस्तुविषयकस्य ज्ञानस्यानन्त्येऽपि तत्त्वतो विचारेणेदमेव सिद्ध्यति, यद्वस्तुविषयक-ज्ञानानामानन्त्यम् यथार्थतः एकमेव । यतो हि विषयेष्वेव पार्थक्यम् न तु विषय-ज्ञानेष्वेवमस्ति । विषयज्ञानमपि यदि पृथग् भवेत् तदा कालान्तरे तस्य स्मरणं न स्यात् । दशवर्षतः पूर्वं यद् वस्तु दृष्टमासीत्तस्य विनाशेऽपि तस्य स्मरणात्मकं ज्ञानन्तु भवत्येव । जाग्रदवस्थायां यत्किमपि ज्ञानं भवति, तदेव ज्ञानं विषया-भावेऽपि स्वप्नावस्थायां विद्यत इति विषयाभावेऽपि ज्ञानस्य विद्यमानत्वात् विषयतो ज्ञानस्य पार्थक्यम् सिद्धमेव । इत्थञ्च ज्ञानस्य नानन्त्यम् किन्तु विषयस्यैवानन्त्यम् । अतश्च परमात्मस्वरूपमपि ज्ञानमेकमेव । उक्तञ्च विद्यारण्येन मुनिना पञ्चदश्यां तत्त्वविवेक-प्रकरणे—

तत्कारणं सांख्ययोगाधिगम्यम्,
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

स्मृतावपि तथा—

"वक्तव्यं किमु विद्यतेऽत्र बहुधा ब्रह्मैव जीवः स्वयम्
ब्रह्मैतज्जगदापराणु सकलं ब्रह्माद्वितीयश्रुतेः
ब्रह्मैवाऽहमिति प्रबुद्धमतयः संत्यक्तबाह्याः स्फुटम्
ब्रह्मीभूय वसन्ति सन्ततचिदानन्दात्मनैव ध्रुवम् ।"

प्रकृतेर्वैभवात्मिकेयं सृष्टि रज्ञानस्यैव विलसितम् इत्यत एव सृष्टि-विकाशोऽनन्तरूपभाग् । सृष्टिवैचित्र्यविकाशेऽज्ञानं हेतुः तच्चाज्ञानं मायास्वरूपमिति तस्यानन्तत्वे न कोऽपि विवादः ।

शक्ति शक्तिमतोरभेदे सत्यपि शक्तिरूपिणी माया स्ववैभव-प्रभावेण शक्तिमतः सकाशात् आत्मानं पृथक् कृत्य एकतो द्वितीयं विरचयति। पुनश्च सैव मायारूपिणी ब्रह्मशक्तिः स्वत्रिगुणशक्ति-विकारेण जगद्दृश्यम् अनन्तं निर्मान्ती नाना वैचित्र्यं परिदर्शयति। अतोऽकामेनापीदं स्वीकरणीयमापतति यद् अज्ञानमेव हेतुस्तस्य अनन्तरूपदृश्यनिदर्शने । सूत्रे "एव" शब्दोऽवधारणार्थकोऽयोगं व्यवच्छिनत्ति। वेदे "एकमेवाद्वितीयम्" इतिवदिहापि द्रष्टव्यम् । यथा स परमात्मा एक एव न द्वितीय इत्येवकारस्तत्र समानासमानजातीय-स्वगतभेदं निराकरोति, तथैवेहाऽपि बोध्यम् । यथा हि परमात्मनः स्वरूपं ज्ञानमयम् । तच्च स्वरूपज्ञानं एकरसात्मकं पूर्णम् । अन्यच्चात्मनः स्वभाव इति तदपि तत्तुल्यं विभु नित्यञ्चोच्यते । ज्ञानस्य पूर्णता तु तदैव गीयते यदा तदेवैकमद्वितीयं भवति । यथा हि वेदशास्त्रादिषु सात्त्विकस्य ज्ञानस्य लक्षणं समुदीरितं विद्यते । यस्य चेदृक् एकमद्वितीयं स्वरूपज्ञानं भवति, स परमात्मा एकोऽद्वितीय इति किमु वक्तव्यम् भवति ।। ४ ।।

तस्य परमेशितुः प्राप्तिप्रकारमाह—

**सृष्टेरतीतो बुद्धेश्च परः स भक्तिलभ्यः ।। ५ ।।**

सृष्टिस्त्रिगुणात्मिका प्रकृति-परिणामरूपत्वाद् परमात्मा तु निर्गुण इति सृष्टितः सोऽतीत उच्यते । बुद्धिरपि महत्तत्त्वात्मिकेति प्रकृतिपरिणामरूपा अतस्तयाऽपि प्राकृतिकया न परमात्मा लभ्य इति "अवाङ्मनसगोचरः" स उच्यते ।

श्रुतौ बहुशोऽयमर्थो गीत उपलभ्यते । तथा हि—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।

अशब्दमस्पर्शमरूपमव्ययम् ।

तथाऽरसं नित्यमगन्धवच्च यत् ॥

अनाद्यनन्तं महतः परं ध्रुवम् ।

निचाय्य तं मृत्यु-मुखात्प्रमुच्यते ॥

स्मृतावप्युच्यते—

शब्दो न यत्र पुरुकारकवान् क्रियार्थो ।

माया परैत्यभिमुखे च विलज्जमाना ॥

तद्वै पदं भगवतः परमस्य पुंसो

ब्रह्मेति यद्विदु रजस्रसुखं विशोकम् ॥

एवं सत्यपि सर्वात्मना प्राकृतिक-सम्बन्धशून्यत्वे भक्त्यैव तस्य 'परमात्मनोऽधिगम इति श्रुतिस्मृतयोऽभिदधति । तथा हि—

भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति ।

भक्तिवशः पुरुषो भक्तिरेव भूयसी ॥ इति ॥

धनुर्गृहीत्वौपनिषदं महास्त्रम्

शरं ह्युपासानिशितं सन्दधीत

आयम्य तद्भावगतेन चेतसा

लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥ इति ॥

भक्त्यैव तस्य साक्षात्कारो भवति । भक्तवशो भगवान् तिष्ठतीति लोकप्रख्यातिरप्यस्ति । इत्यतो भक्तिरेव श्रेयसीत्युररीकरणीयम् । स्मृतौ चोपलभ्यते—

त्वं भक्तियोगपरिभावितहृत्सरोज-

आस्से श्रुतीक्षितपथो ननु नाथ पुंसाम् ॥

असेवया यं प्रकृतेर्गुणानां

ज्ञानेन वैराग्यविजृम्भितेन ।

योगेन मय्यर्पितया च भक्त्या

मां प्रत्यगात्मानमिहावरुन्द्धे ।

गीतोपनिषद्यपि—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।

शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुं च परन्तप ! इति ॥

ननु इह प्रकरणे यो हि परमात्मा अवाङ्मनसगोचर इति बुद्धिवृत्तिवेद्यो न भवतीत्युक्तः कथं पुनः तस्यैव परमात्मनोऽनन्यभक्तिलभ्यत्वं स्याद् इत्युभयमपि विरुद्धवद्भाति । यतो हि-भक्तिलक्षणं—सानुरागरूपा,भक्तिरिति । तत्र अनुरागो नाम चित्तवृत्तिविशेष एवोच्यते । एवं सति यः परमात्मा चित्ताद् बुद्धितोऽप्यतीतः स एव चित्तवृत्तिविशेषात्मिकया भक्त्या कथं लभ्य इति' प्रश्ने उत्तरयति—मैवम् यद्यपि भक्तिरनुरागात्मिकैवाभिहिता, तथापि भक्तिरूपेण परिणतोऽनुरागो न चित्त वृत्तिविशेषः स त्वलौकिक ईश्वरानुराग एव । भक्तिरपि द्विधोच्यते एका गौणी द्वितीया परेति । तत्र गौण्या भक्तेरनुष्ठानेन यदा चित्तं निर्मलं भवति तदा तत्रानन्दमयस्य परमपुंस आनन्दसत्ता प्रतिफलिता भवति । ततश्चा-नन्दरसेनाप्लुतं चित्तं सर्वथैवानन्दमयं जायते । तस्य प्रत्यवयवं चैतन्य-मात्रा प्रोच्छलन्ती रिङ्गमाणा विराजते । तदैव स साधकः—

"सर्वं खल्विदं ब्रह्म" "वासुदेवमयं जगद्

इत्यादि भावं सर्वदैव स्वचित्ते स्मरन् तिष्ठति । शास्त्रेष्ववस्थेयमीदृशी विवृता विद्यते—भक्तिं हरौ भगवति प्रवहन्नजस्र-

मानन्द वाष्पकलया मुहुरर्द्यमानः
विक्लिद्यमानहृदयः पुलकाचिताङ्गो
नात्मानमस्मरदसाविति मुक्तलिङ्गः ।

इत्येवं भक्तिभावोदये सति साधकः पुलकिताङ्गो भूत्वा सगद्गदो नयनाभ्यां निरन्तरमश्रुधारां वर्षति । किं बहुना स आत्मानं विस्मरत्येव । इत्यत एवाग्रे भक्तिलक्षणप्रसङ्गेन सर्वघटव्यापके भगवति निरवच्छिन्नचिन्तागति-रेव भक्तिशब्दवाच्या भविष्यति । तत्र निरवच्छिन्नत्वन्नाम भगवच्चरणारविन्द-चिन्तायाः क्षणमात्रस्यापि कृते वियोगाभाव एव । सर्वदा निरवच्छिन्न-तैलधारा-वद्भगवत्येव तन्मयतेति यावत् । अतश्च नाऽयमनुरागोऽत्र चित्तवृत्तिविशेषः, किन्तु रसरूपस्य भगवतो या आनन्दसत्ता विराजते तस्या एवायमेकः प्रकारभेदो ज्ञेयः । इत्यत एव हेतोरुक्तं गीतोपनिषदि—

नाऽहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! इति ।

# सूर्योदयः ।

सप्तमे वर्षे } ज्येष्ठस्य पूर्णिमा सं० १९८९ । { द्वादश-संख्या

## सम्पादकीया अभिप्रायाः ।

— -:*:—

### साधीयान् प्रयत्नः ।

सर्वजनविदितोऽयं वृत्तान्तो विज्ञानसिद्धः श्रुतिस्मृतिपुराणप्रमाणितश्च विद्यते, यत् सर्वेषामपि मानवानामाचारव्यवहारचारित्र्यादिशिक्षाप्रदायिनी इयमार्य्यजातिरेवैकदा समुन्नतिशिखरे आसीत् । यस्मिन् समये इयमार्य्यजातिः सर्वानपि धरातलगतानसभ्यानपि मानवान् सभ्यान् चकार स हि स्वर्णमयः समयः स्वगौरवाभ्युदयदेशाभिमानादिसम्वलितः संस्कृतिमे हि वाङ्मये वर्णितो विद्यते । तस्यामेव देवभाषायां डिण्डिमघोषमुद्घोषयति आर्य्यजातेरुन्नतिशिखरावरोहणमादिमो राजा सर्वमानवहिताधायकः सर्वसन्तोषकरमानवप्रकृतिपरिचितनियमनिर्माता समाजव्यवस्थाता भगवान् मनुः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ इति ।

सा हि संस्कृतभाषा अमरभाषेति व्याह्रियमाणा सर्वानेव मानवान् श्रुतिमात्रेणैव तर्पयतीति साधु समुदीरितं केनचन कविना—

अविदितगुणाऽपि संस्कृतभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥ इति ।

तस्याः संस्कृतभाषायाः प्रशंसनं किमस्मच्छब्दैर्वर्णितं भवितुमर्हति ? यस्याम्—

अङ्गानि वेदाश्चत्वारो मीमांसा-न्याय-विस्तरः ।
धर्मशास्त्रं पुराणञ्च विद्याश्चैताश्चतुर्दश । इति ।

लोकोत्तराः सर्व-लोकपरलोक-परमाभ्युदयसाधिकाश्चतुर्दशापि विद्या विस्तरेण विवेचिताः सन्ति । यस्यामेव भाषायां भारतीय-साम्राज्य-व्यवस्थापकस्यार्यचाणक्यस्यार्थशास्त्रं निबद्धं विद्यते । यत्र च स घण्टानादं व्याजहार आर्य्यराजनीतेर्व्यवस्थानमर्थसूत्रम्—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः-

त्रय्या हि रक्षितो देशः प्रसीदति न सीदति" इति।

किं बहुना तस्याः सर्वत आर्य्यसभ्यतापरिचायिकाया अमरवाचो वर्णनं नास्माकं बुद्धिविषयमायाति—महद्धि खेदास्पदमिदमिदानीं यत् पाश्चात्यशिक्षाविकृतमस्तिष्के दुर्व्यसनशुष्के युवजने साऽमरवाणी न तादृशमादरमासादयति। यद्यपि तेषां मनोमान्यगुरवः पाश्चात्या एव बहवो मोक्षमूलरादयो मुक्तहृदयं प्रशशंसुरिमाम्। एवं हि करालकालविलसितास्पदेऽस्मिन् समये संस्कृतभाषाऽवज्ञापरे यत्किमपि तस्याः साहाय्यमासाद्यते, तदीश्वरानुगृहीतमेव समुद्रे निमज्जनस्तृणालम्बनवद् बहुमन्तव्यं संस्कृताभ्युदयाभिलाषिभिर्विद्वद्भिरिति।

सम्प्रति सूर्य्योदयपाठकानां परमाह्लादकरं तस्याः संस्कृत-भाषयाः शाश्वतिकं समुदयाधायकं दृढतरं सर्वादरणीय-प्रातःस्मरणीय-स्वर्गीयभूदेव मुखोपाध्याय-सम्पादितप्रयत्नं प्रख्यापयन्तः परमप्रसादमासादयाम इति।

तेन हि महात्मना संस्कृतदुर्दशाधर्षिणा तत्समादरवर्षिणा स्वजन्मना वङ्गभूमिमलङ्कृतवता विभववता स्वपितृपादानां विश्वनाथमुखोपाध्यायानां स्मृतिरक्षार्थम् "विश्वनाथ ट्रष्ट" इति नाम्ना एकः स्थायी कोषः प्रतिष्ठापितो विद्यते, यस्येतिवृत्तं संक्षेपतः प्रकाश्यते—

तथा हि—स महात्मा सी. आई. पदवीविभूषितो वङ्गप्रान्तस्य राजकीय-शिक्षासचिव आसीत्तेन च यावद् द्रव्यजातं समुपार्जितं तदर्धं स्वकुटुम्बेभ्यो वितीर्य्य अर्धमस्मिन्नेव 'विश्वनाथन्यासात्मके, स्थायिनिधौ प्रतिष्ठापितम्। अस्य निधेर्वृद्धया इमानि कार्य्याणि साधितानि भविष्यन्तीति नियमा अपि तेन तत्र निर्धारिताः। एतद्विषये तज्जीवनचरितविषये च पृथगालोचनात्मकं 'भूदेवचरित' नामकमेकं वृहद्ग्रन्थरत्नमेव संस्कृतभाषायां प्रकाशितं विद्यते। विषयेऽस्मिन् विशेषज्ञानं चिकीर्षद्भिस्तत्पुस्तकरत्नमवश्यं द्रष्टव्यम्। तेन महात्मना स्वयं निर्मितानि सामाजिक-पारिवारिक-प्रवन्धादिनामकानि बहूनि ग्रन्थरत्नानि सन्ति। यानि हिन्दुसंस्कृति-रहस्यजिज्ञासुभिरार्य्यसभ्यता-रहस्यज्ञानायावश्यं द्रष्टव्यानि।

न्यास (ट्रष्ट) विषयकमिदानीं संक्षिप्ततरमितिवृत्तमेव प्रकाश्यते। विश्वनाथन्यासात्मकं निधिकल्पतरुरत्नमिदानीं भूदेवमुखोपाध्यायान्वयान्वितैः पुरुषरत्नैर्मध्ये मध्ये स्वोपार्जितद्रव्यनिचयैश्च प्रतिष्ठापितेन विविध-संज्ञकन्यासात्मकेन निधिसत्सलिलेनासिक्तं शाखाप्रशाखात्मना एतावद् विस्तृतं वर्द्धितं च

विद्यते, यत् सम्प्रति तस्य बह्व्यः शाखाः प्रशाखा निःसृत्य संस्कृतभाषासमुपासकान् विदुषः सुखयति सम्वर्द्धयति तेषां मनोरथानपि पूरयतीति ।

इदानीं तस्य निधिरत्नस्य सञ्चालकेषु प्रधानपदं समाश्रितः स्वर्गीयस्य तस्य भूदेवमुखोपाध्यायस्य पौत्रः श्रीबटुकदेवमुखोपाध्यायः एम्. ए. महोदयो विद्यते । मन्त्री च तस्यैव दौहित्रः श्रीसनत्कुमारचट्टोपाध्यायः एम्० एस० सी०, बी० एल्०, एडवोकेटमहोदयः कलकत्तानिवासी विद्यते । साम्प्रतं तस्य निधिरत्नस्य प्रबन्धकाः परित्यक्तमहामहोपाध्यायपदवीका महामहाध्यापकाः पण्डितप्रवराः श्रीपञ्चाननतर्करत्नमहोदयाः सुरभारत्याः प्रतापेन संस्कृतसेविनां विदुषां विद्यार्थिनां च पुण्यनिचयेनैवासादिता विद्यन्ते, येषामधिष्ठातृत्वे सम्प्रति वङ्गप्रान्ते नदिया-वर्द्धमान-भाटपाराप्रभृतिनगरेषु ग्रामेषु च स्वगृहे एवाध्यापयतां संस्कृतविदुषां विद्यार्थिनां च प्रतिवर्षं नियमतः आर्थिकं साहाय्यं वितीर्य्यते । सम्प्रति तत्र १०८ अष्टोत्तरशतेभ्यो विद्वद्भ्यः ५०) पञ्चाशद्रूप्यकं प्रतिव्यक्ति प्रतिवर्षम् साहाय्यं वितीर्य्यते । संस्कृतच्छात्रेभ्यश्च प्रतिव्यक्ति ३६ षट्त्रिंशद्रूप्यकं वार्षिकं साहाय्यं दीयते । तत्रेह काश्यां अष्टाविंशतये योग्यसंस्कृतच्छात्रेभ्यो वृत्तिसाहाय्यं तस्मादेव निधितः प्रदीयते । एवं बहुत्र प्रदेशेषु संस्कृतविद्वद्भ्यः छात्रेभ्यश्च विश्वनाथन्यासतः साहाय्यं मिलति ।

एतदतिरिक्तं तेनैव महात्मना भूदेवमुखोपाध्यायेन सञ्चालिता एका संस्कृतपाठशाला अधुनापि प्रचलति । यदीयाध्यायकेभ्यो विद्यार्थिभ्योऽस्मादेव स्थिरनिधे वेतन-वृत्तिप्रदानञ्च क्रियते । तेनैव निधिना एकं 'एज्युकेशन् गजट्' नामकं वङ्गभाषामयं साप्ताहिकं सुप्रसिद्धं पत्रं सञ्चाल्यते । यत्र च यथावसरं एतन्निधिसम्बन्धेऽवश्यज्ञातव्यमायव्ययादिकं, संस्कृतवाङ्मयाभ्युदयाधायकं लेखादिकं, पुस्तकादिकं, पुराणधर्मशास्त्रादिषु गवेषणात्मकं निबन्धादिकञ्च प्रकाश्यते । अस्मादेव निधिसाहाय्यात् विस्तृतं धर्मशास्त्रकोशरत्नं संगृहीतं विद्यते । यस्य प्रकाशनं सहस्राणां रूप्यकाणां व्ययमालोच्येदानीं स्थगितं विद्यते । यदि कश्चन दानवीरो दाता तस्य प्रकाशनव्ययं स्वीकुर्य्याच्चेत्तदा शीघ्रमेव तस्य प्रकाशनं भवितुमर्हति । नोचेदस्यैव निधेः साहाय्येन सत्यवसरे प्रकाशितं स्यादेव ।

किं बहुना भूदेवमुखोपाध्याय-प्रतिष्ठापितस्य विश्वनाथन्यासा(ट्रष्ट)त्मकस्य द्रव्यनिधेः तथान्यान्यन्यासतश्च साहाय्येनेदानीं संस्कृतज्ञा विद्वांसः कियन्त उपक्रियन्ते इति कथयितुं नास्माभिः पार्य्यते । कियच्च संस्कृतभाषायाः कल्याणं साधितं भवतीत्येतदपि अस्माकं वागविषयातीतमेव । इह काश्यां विद्या-

र्थिनां विदुषाञ्च मानवर्द्धनाय तथा तेभ्यो विश्वनाथट्रष्टतः साहाय्यप्रदानाय च प्रतिवर्षं प्रोत्साहनाय संस्कृतभारत्या उन्नतये च विचारसभा भवति । यस्याः सञ्चालका स्त एव पण्डितप्रवराः श्रीपञ्चाननतर्करत्नमहोदयाः सन्ति । एवमियं विचारसभा अस्मिन्वर्षे वैशाखमासे शुक्लैकादश्यां तिथौ तस्य प्रातःस्मरणीयस्य भूदेवमूखोपाध्यायमहोदयस्य पुण्यस्मृतिदिने सञ्जाता । यत्र च काशीस्थानां बहूनां मान्यानां विदुषां पूजनं व्याकरणवेदान्त—न्यायधर्मशास्त्रचर्चा च समभवत् । इत्थं श्रीविश्वनाथट्रस्टात्मकेन स्थायि-कोषेन संस्कृतभारत्याः संस्कृतविदुषां विद्यार्थिनाञ्च तर्करत्नमहोदयस्य तत्त्वावधाने साधीयसी समुन्नतिर्भविष्यतीति विश्वासोऽस्मकम् । तस्य महामनसः संस्कृतविद्याभिवृद्धिकामिनो महात्मनोऽनुकरणमन्येऽपि धनिनो भारतीयाः कुर्य्युश्चेन्महत् कल्याणं स्यात् संस्कृतसेविनाम् । तेन च भारतीया आर्य्यसभ्यताऽपि पूर्ववद्वेदानां सर्वत्र जगतीतले समादृता स्यादिति ।

---

## संस्कृतविश्वविद्यालयः ।

——:o:——

अयि संस्कृतज्ञा विद्याविलासिनो हिन्दुसभ्यतापरिचिताः काव्यकलाकोविदा विदितचरमेव भवतां यदिह भारते वर्षे पूर्वं सुरभारतीयमस्माकं परमपावनी कीदृशं समुन्नतिपदं समाश्रितवती समस्यामपि धरायामासीदिति । अस्या एव सुरभारत्याः सर्वत्र लोक-समागम-देशसमागम-जनसमागमेषु अविहतः प्रचार आसीदिति सकलकविसम्राट् श्रीहर्षः स्वीये नैषधीयचरिते स्पष्टमुज्जगौ । तथा हि—

अन्योन्य-भाषाऽनवबोधभीतेः संस्कृतत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नृपेषु तेषु सौवर्गवर्गो न जनैरचिह्नि ॥ इति ॥

किं बहुना संस्कृतभाषाया इयान् जगति प्रचार आसीद् यदत्र भारते तक्षशिला-गान्धार-काश्मीरोज्जयिनी-कुसुमपुर-नदिया-नालन्दप्रभृतयः शतशो विश्वविद्यालया आसन् । एतेषु विद्यापीठेषु समागताः संख्यातीताः भारतीया विदेशीयाश्च विद्यार्थिनो विद्यां लभन्तेस्म । भारते वर्षे साम्प्रतं हि नास्ति विश्वविद्यालयानाम् अभावः । किन्तु प्राचीनानाम् आधुनिकानां च विश्वविद्यालयानाम् उद्देश्येषु आकाशपातालवद् महदन्तरं निभाल्यते । प्राचीनानां विद्यापीठानां स्वावलम्बनमेव परम उद्देशः, आधुनिकानां च परावलम्बनमित्युभयेषां महान् भेदः । परकीयसाहाय्यपरिचालनकारणादेव साम्प्रतिकेषु विश्वविद्यापीठेषु न स्वावलम्बिताशिक्षणं

परिदृश्यते । आधुनिकेषु विश्वविद्यालयेषु भारतीयं प्राचीनं शिक्षणसदुद्देश्यम् आध्यात्मिकलक्ष्यं च गन्धमात्रमपि न समुपलभ्यते । साम्प्रतिकेषु विश्वविद्यामन्दिरेषु तादृशी एव शिक्षा प्रदीयते, यया न स्वदेशीयानां प्रत्युत विदेशीयानामेव हितसाधनं स्यात् । स्वदेशहितसाधनपरायणैः विद्यापीठैः प्रयत्नशतेनापि राजकीयं साहाय्यं नाधिगम्यते । वैदेशिकसाहाय्यसञ्चालितैः विदेशीयभावभाषादिशिक्षाप्रचारकैः विश्वविद्यालयैर्विद्यापीठैः पाठालयैर्वा एकस्य देशस्य कीदृशोऽपकारो भवतीति नाप्रत्यक्षमितिवृत्तविदां विदाम् । प्राचीनरोमनजातिशासनाधीनायाः सिलिसियनजातेः शिक्षाबलेन समूलविनाशमितिहासवेदिनो विदन्त्येव । यथा किल विजातीया अपि बालकीटा बाल्यकालादेव भ्रमरादिविजातीयकीटानां भाषादिश्रवणनिदिध्यासनेन "कीटोऽयं भ्रमरीभवत्यतिनिदिध्यासैः" इत्यादि प्राचीनप्रामाण्येन विजातीया भवन्ति, तथैव आर्यजातीया बालका अपि कोमलमतयः परकीयभाषाशिक्षणप्रधानेषु विद्यामन्दिरेषु विदेशीयां वाणीं बाल्यकालादेवाधीयानाः, विदेशीयवेष-भावाचारांश्च शिक्षमाणा विदेशीयभावापन्ना भवन्तीत्यत्र किं चित्रम् ? "यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्" इतिनीतिवाक्यं के न जानन्ति ? अतो हि प्राचीनायाः आर्यसभ्यतायाः सर्वतः संरक्षणार्थं पराधीनतापाशपतितस्य भारतवर्षस्य समुद्धारार्थं च स्वदेशभाषा-भाव-वेषप्रचारकाणां विद्यापीठानां विश्वविद्यालयानां वा संस्थापनं नितरामावश्यकम् ।

एतादृशमेव भावं मनसि बद्धमूलं विधाय कैश्चन महाभागैः अस्यां विद्याधर्मकेन्द्रभूतायां वाराणस्यां संस्कृतविश्वविद्यालयः संस्थापितोऽभूत् । एतस्य निखिल-भारतवर्षीयस्य संस्कृतविश्वविद्यालयस्य तास्ता विविधाः परीक्षाः तांस्तान् नियमांश्च 'सूर्योदय' पाठकाः गताङ्केषु पठितवन्त एव । अस्य विश्वविद्यालयस्य आयुर्वेदपरीक्षा बहुवर्षेभ्यः प्रचलति । एतत्परीक्षाफलं हि प्रतिवर्षं सूर्योदये प्रकटितं पाठकाः पठन्त्येव । आगामिनि वर्षे अन्या अपि विविधाः परीक्षा यथासाध्यं प्रचारमेष्यन्ति । इदानीं यावत् तेषु तेषु नगरेषु अस्य विश्वविद्यालयस्य प्रायः अशीतिसंख्यकानि केन्द्रस्थानानि समुद्घाटितानि सन्ति । एतेन विश्वविद्यालयेन भारतवर्षस्य सुरसरस्वत्याश्च महानुपकारो भविष्यतीति निर्विवादम् । ये च महानुभावाः स्वीये स्थाने एतस्याः केन्द्रसंस्थापनं समीहन्ते, एतत्सम्बन्धे किमपि परिज्ञातुं वाऽभिलषन्ति ते "मन्त्री संस्कृत-विश्वविद्यालय, महामण्डलभवन, जगत्गञ्ज, बनारस केन्ट" इति संकेतेन पत्राणि व्यवहरन्तु ।

—०:०—

## पातिव्रत्यप्रमाणम् ।

—०:❀:०—

यं हि किल भगवन्तं, श्रौसनातनधर्ममवलम्बमानेयमार्यजातिरनादिकालादारभ्य साम्प्रतं यावत् जीवन्ती परिदृश्यते, तस्य च चत्वारि मौलिकानि लक्षणानि । तथा हि—सदाचारः, वर्णाश्रमविभागः, पातिव्रत्यम्, आध्यात्मिकं लक्ष्यञ्चेति ।

वर्त्तमाने काले आर्यजातिरियं तादृशं दैन्यमुपगता, यत् पर्याप्तभोजनमपि नासादयति स्वशरीराच्छादनार्थं वस्त्रमपि न लभते । किमन्यतत् स्वदेशोऽप्येतस्या विदेशायते !

विजिता जाति र्जेतृजातौ सर्वतो भावेन निजात्मानं समर्पयन्ती नामशेषत्वमुपगच्छतीति विषयेऽत्र प्रमाणम् इतिहास एव । किन्तु उपर्युक्तानि चत्वारि मौलिकानि लक्षणानि किलैव दीनहीनामपीमामार्यजातिमिदानीं यावत् रक्षितवन्तीत्यत्र नास्त्यणीयानपि सन्देहावसरः । निश्चिचतुष्टयं तत् नास्त्यन्यत्रेति हेतोः संसारेऽत्र तास्ता जातयः कालकवलितेति निर्विवादम् ।

आधुनिका नेतृमानिनः केचन पुरुषा आर्यजाते र्मौलिकं लक्षणचतुष्टयमामूलमुन्मूलयितुं प्रबलं प्रयत्नमनुतिष्ठन्तः परिदृश्यन्ते, ते हि पुरुषपुङ्गवाः स्वेच्छाचारप्रचारेण सदाचारवादं, जातिध्वंसकमण्डलै र्वर्णाश्रमवादम्, आधिभौतिकलक्ष्येण आध्यात्मिकं लक्ष्यम्, विधवाविवाहादिभिश्च पातिव्रत्यधर्मं समूलमुन्मूलयितुं प्रयतन्ते !

आर्यजाते श्चिरजीवित्वकारणकलापेषु सर्वतः प्रधानं पातिव्रत्यमेव । तमेव पातिव्रत्यधर्मं विविधविधानव्यवस्थापनद्वारा सुधारकं मन्यमानाः संकटशतसंकुलं विदधते । अस्यामवस्थायामपि पातिव्रत्यस्य समुज्ज्वलप्रमाणं भारतवर्षेऽत्र यदा कदा यत्र कुत्रचित् समुपलभ्यत एव ।

जूनमासस्य सप्तदशे दिवसे ( सन् १९३२ ) इटावामण्डलान्तर्गत-मेहर्दीपुरग्रामे एकस्याः पतिपरायणाया ब्राह्मणस्त्रियः आश्चर्यजनको मृत्युर्जातः । पतिरेतस्या मथुराप्रसादचौधुरीनामधेयः तत्रत्येनैव लखनाराज्येन सम्बन्धबद्धः सार्द्धमासतो महता ज्वरेण समाक्रान्तोऽभवत् । बहुविधौषधप्रयोगे जातेऽपि तदीयो ज्वरो नापगतः । जूनमासस्य सप्तदशे दिवसे प्रातःकाले तस्य प्राणान्तो बभूव । मरणानन्तरं तस्य शवस्तदीयजन्मभूमौ हर्दीपुरे समानीतः । हर्दीपुरं हि लखनाराज्यतः प्रायः क्रोशत्रयं विद्यते । स्वकीयस्य प्राणप्रियस्य

पतिदेवस्य मरणवृत्तान्तं श्रुत्वा पतिव्रताऽसौ न किञ्चिदपि मनोम्लानिमुपगता, रुरोद वा। सा च स्वसम्बन्धीयान् सान्त्वयन्ती पत्युर्मृतशरीरं गङ्गाजलेन स्नापयित्वा बहुविधवस्त्रालङ्कारेण सुसज्जीकृत्य स्वीयपतिदेवचरणसमीपे शयितवती। कियत्कालानन्तरमेव प्रेक्षमाणानां सर्वेषां स्त्रीपुरुषाणां पुरत एव सा पतिपरायणा स्वीयानपि प्राणान् तत्याज। अनन्तरम् उभयोरपि अन्त्येष्टिसंस्कारस्तत्सम्बन्धीयैरेकस्यामेव चितायां विहित इति।

---

## "ग्रीष्मर्तुः"

—o:*:o—

घर्मांशुस्तपति प्रचण्डकिरणैरुग्रै र्महादारुणै-
र्वृक्षाश्चापि भवन्ति निर्गतरसाः पुष्पै र्विना पल्लवैः।
नद्यश्चापि सरोवरा बहुजलाः शुष्यन्ति संतापिताः-
छायामाश्रयते तरोश्च पथिकः घर्मेण तप्तोऽध्वनि॥ १॥

—पं० हजारीलालशर्मा शास्त्री विद्यालंकारः।

---

## पुस्तकपरिचयः।

**प्रेतकौमुदी ( सटीका )**—रचयिता-श्रीपीताम्बरसिद्धान्तवागीशभट्टाचार्यः। पुस्तकमिदं बङ्गाक्षरे मुद्रितम्। श्रीगोपालचन्द्रभागवतिना निर्मितया सरलाख्यया टीकया च समलङ्कृतं डिमाई ( साइज ) आकारे त्रिंशत्पृष्ठात्मकं विद्यते। आदौ पुस्तकस्थसर्वविषयाणां सूचकपत्रसम्वलितमन्ते च शुद्धाशुद्धपत्रविशिष्टम्। बाह्यतश्च दर्शनीयं पुष्टमसृणकर्गजोपेतं वर्तते।

पुस्तकस्थ-विषयविन्यासोऽपि समाख्यासदृश एवास्ति। मुमुर्षुहितकरकर्तव्यत आरभ्यान्त्येष्टिकर्मावधि सर्वमपि प्रेतकृत्यं विशेषतः सप्रमाणं वर्णितं विद्यते। श्राद्धविधानकभेदोऽपि साधु विवेचितो दृश्यते। पुस्तकमिदं पौरोहित्य-कर्म्मकर्तॄणामत्युपकारकं सर्वमपि प्रेतसम्बन्धिज्ञातव्यविषयमवगमयितुम्। २) रूप्यकद्वयेन मूल्येन निम्नस्थसङ्केतेनोपलभ्यते—कविराज श्रीवागेश्वर भागवती भिषग्रत्न, स० कैठालकूछि, पो० वेलशर, कामरूप।

**दुर्गाभ्युदयनाटकम्**—श्रीछज्जुरामशास्त्रिप्रणीतम् संस्कृतवाङ्मयं दुर्गाभ्युदयं नाटकं मया सम्पूर्णमवलोकितम् । पठनावसानेऽकस्मादेव मन्मुखात् "पुराण-मित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् । सन्तः परीक्ष्यान्यतरद्-भजन्ते मूढः परप्रत्ययनेयबुद्धिः" इतिकालिदासीयं पद्यं निश्चक्राम । सत्यमेव नाहं तानारञ्जयितुमर्हामि ये हि नवीनकाव्ये मत्सर-पित्तनिबन्धनमचिकित्स्यमरोचकं धारयन्ति । परन्तु तान् भावुकान् सुरभारतीसमुपासकान् छात्रान् विज्ञापयामि यत्तेऽवश्यमवकाशसमये एवम्भूतान् नाटक-काव्यग्रन्थानवलोकयन्तु । येन तेषामनुप्रास-वैदग्ध्यमनोविनोदः श्रीभगवत्या दुर्गाया गुणानुकीर्तनेन पुण्योप-चयश्चेति "एका क्रिया द्व्यर्थकरी प्रसिद्धा" इति लोकोक्तिः सफलिता स्यात्। मुद्रणकर्गजादिसौष्ठवमपि पठितुर्मनो हरत्येव । कवेः कवित्व-विषये तु स्वयं किंचनानुक्त्वा सूत्रधारमुखेन तदुक्तं पद्यद्वयमेव कथञ्चित् स्वात्म-सन्तोष-करं मन्ये ।

छज्जूरामकृतौ नैकः स श्लोकः परिदृश्यते ।
अल्पानल्पाथवा काचिद्यत्र नैव चमत्कृतिः ।
अनुप्रासिनि सन्दर्भे छज्जूरामसमोऽद्य कः ।
पुराप्यासन्न चेदासन् द्वित्रा एव कवीश्वराः ॥

यद्यपि नाटकीय-लक्षण-सङ्घटनैकलक्ष्यैः कविभिः कृतानि सन्ति बहूनि नाटकानि तथापि दुर्गाऽभ्युदयमिदं ह्रस्वशरीरमपि नाटकं स्वल्पप्रयासेनैव छात्राणां कृते दुर्गमं ( मोक्षम् ) अभ्युदयञ्चोभयमैहलौकिकं पारलौकिकञ्चो-पदिशतीति विशेषतोऽस्य पठन-पाठने अवधानदानेन सफलयन्तु कवेः प्रयासं सहृदयाः सुधिय इति विरमामि गुणाद्भुतेऽपि वस्तुनि स्वल्पजल्पनदोष-भाक् । नाटकस्यास्य मूल्यम् ॥) ( १ ) प्राप्तिस्थानञ्च मेहचन्द्र लक्ष्मणदास, संस्कृत पुस्तकालय, सैयदमिट्ठाबाजार लाहौर । ( २ ) मास्टर खेलाड़ी लाल संस्कृत बुकडिपो कचौड़ीगली बनारस सिटी ।

समालोचयिता—अवधेशप्रसादशर्मा काव्यतीर्थः ।

# 'हरिचन्द्रकृता[1] जीवन्धरचम्पूः" ।

ले०—जयपुर राजगुरु कथा-भट्टवंश्य श्रीनन्दकिशोरशर्मा साहित्याचार्यः ।
गवर्नमैण्ट लाइब्रेरी ( सरस्वतीभवन, काशी )

——:o:——

हरिचन्द्रनामानोऽनेके पुरुषाः साम्प्रतं विज्ञायन्ते । यथैको बाणभट्टेन हर्षचरितारम्भे निर्दिष्टः—

यथा—'पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ॥
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ १ ॥

विश्वप्रकाशकोशकर्तुं महेश्वरस्य पूर्वपुरुषश्चरकसंहिताटीकाकारः साहसाङ्कनृपतेः प्रधानवैद्यो द्वितीयो हरिचन्द्रः । कर्पूरमञ्जर्यां प्रथमे जवनिकान्तरम् एकत्र विदूषकोक्तिव्याजेन कविराजशेखरेण स्मृतो हरिचन्द्रस्तृतीयः । कायस्थवंशमुक्तामणे दिगम्बरजैनमतानुयायिन आर्द्रदेवात्समुत्पन्नो धर्मशर्माभ्युदय[2] महाकाव्य कर्ता श्रीहरिचन्द्रस्तुरीयः । जीवन्धरचम्पूकर्तासौ हरिचन्द्रश्च पञ्चमः ।

उक्तेष्वेतेषु जीवन्धरचम्पूकाव्यनिर्माता कतम इति विवेके प्रस्तूयमाने निर्णयमिमं समधिगच्छामः । तथा हि जैनराज—जीवन्धरचरितप्रख्यापकाः सन्ति चत्वारः प्रबन्धाः । तत्र वादीभसिंहप्रणीतौ गद्यचिन्ता मणिः[3] क्षत्रचूडामणि[4]श्चेति द्वौ । हरिचन्द्रकविकर्तृको जीवन्धरचम्पूप्रबन्धस्त्वेकः । तिरुत्तक्कदेवविरचितो जीवकचिन्तामणिर्नाम तेलगुभाषाप्रबन्धस्त्वपरः । एतानि सर्वाण्यपि काव्यानि महापुराणोत्तरभागगतां जीवन्धरकथामादाय प्रबद्धानीति व्याहरन्ति जैनाः । अयमंशः कविना वादीभसिंहेनाभ्युपगम्यते गद्यचिन्तामणौ ।

"निःसारभूतमपि बन्धनतन्तुजातं, मूर्ध्ना जनो वहति हि प्रसवानुषङ्गात् ॥
जीवन्धर प्रभवपुण्य-पुराणयोगाद्वाक्यं ममाप्युभयलोकहितप्रदायि ॥"

अयमेवार्थो जीवकचिन्तामणौ तिरुक्कदेवेनापि प्रतिपादितः । तथा जीवन्धरचम्पूकाव्येऽपि सैव कथा प्रतिभासत एवेति नास्ति विवादलेशोऽपि ।

---

( १ ) निबन्धोऽसौ "चम्पूदन्ता"दत्रोद्धृतः । ( २ ) एकविंशसर्गात्मकेऽत्र काव्ये चतुर्विंशति जैनतीर्थंकरेषु पञ्चदशतीर्थंकरस्य धर्मनाथस्य वर्णनम् । काव्यमाला ८ म पुष्पम् । निर्णयसागर—बंबई १८९९ ई० ।

( ३ ) टी० एस्० कुप्पुस्वामि शास्त्रिणा श्रीकृष्णविलासप्रेस तंजौरतः प्रकाशितः ।

( ४ ) तेनैव महाशयेन १९०३ ई० वर्षे तंजौरस्थ श्रीकृष्णविलासयन्त्रालयतः सरस्वतीग्रन्थमाला ३ य पुष्पे ।

उत्तरपुराणाभिधश्च महापुराणोत्तमभागो वीरसेनाचार्यप्रशिष्येण जिनसेनाचार्यशिष्येण क्षत्रचूडामण्याख्यद्राविडभाषानिघण्टुकारस्य मण्डलपुरुषस्य गुरुणा श्रीमता गुणभद्राचार्येण बनवासदेशाधिपेऽकालवर्षभूपाले पालयति महीमतीतेषु च ८२० शकाब्देषु पिङ्गलनामनि संवत्सरे निरमायीति तद्ग्रन्थत एव स्फुटं प्रतीयते ।

यथा—(१) "श्रीवीरसेनोऽजनि तार्किक श्रीः प्रध्वस्तरागादिसमस्तदोषः"
"यस्य वाचां प्रसादेन ह्यमेयं" भुवनत्रयम् ॥
आसीदष्टाङ्गनैमित्तज्ञानरूपं विदांवरम् ॥ १ ॥
तच्छिष्यप्रवरो जातो जिनेश्वरमुनीश्वरः ।
यद्वाङ्मयं पुरा चासीत्पुराणं प्रथमं भुवि ॥ २ ॥
तदीयप्रियशिष्योऽभूद्गुणभद्रमुनीश्वरः ।
शलाका पुरुषा यस्य सूक्तिभिर्भूषिताः सदा ॥ ३ ॥
गुणभद्रगुरोस्तस्य माहात्म्यं केन वर्ण्यते ।
यस्य वाक्सुधया भूमावभिषिक्ता मुनीश्वराः ॥ ४ ॥
[ इति हस्तिमल्लकृत विक्रान्तकौरवनाटक प्रारम्भे ]

(२) अकालवर्षभूपाले पालयत्यखिलामिलाम् ।
तस्मिन्विध्वस्तनिःशेषद्विषि वीध्रयशोजुषि ॥
वनवासदेशमखिलं भुञ्जति निष्कण्टकं सुखं सुचिरम् ।
तत्पितृनामकृते ख्याते बङ्कापुरे पुरेष्वधिके ॥ २ ॥
शकनृपकालाभ्यन्तर विंशत्यधिकाष्टशतमिताब्दे ।
मङ्गलमहार्थकारिणि पिङ्गलनामनि समस्तजनसुखदे ॥
श्रीपञ्चम्यां बुधार्द्रायुजि दिवसकरे मन्त्रिवारे बुधांशे—
पूर्वायां सिंहलग्ने धनुषि धरणिजे वृश्चिकार्कौ तुलायाम् ।
सर्पे शुक्रे कुलीरे गवि च सुरगुरौ निष्ठितं भव्यवर्यैः—
प्राप्तेज्यं सर्वसारं जगति विजयते पुण्यमेतत्पुराणम् ॥
[ इति गुणभद्राचार्यकृत उत्तरपुराणे ]

एवमेव च तामिललिपिबद्धे मण्डलपुरुषविरचित-चूडामण्याख्यभाषा-निघण्टावपि विलोकनीयम् ।

इत्थं ८२० शाकवत्सर=८६८ ई० वर्षे निर्मितमहापुराणोत्तरभागकथाधारेण जीवन्धरचम्पूकाव्यनिर्माता हरिचन्द्रो दशमशताब्दीसमुत्पन्नो बाणा-

दिप्राचीनो न भवितुं शक्यते। इदं तु संभवति यद् दशमशताब्दीसंजातो राजशेखरः कर्पूरमञ्जर्यामिममेव हरिचन्द्रं स्मरतीति। अन्ये च केचन 'धर्मशर्माभ्युदयकर्तैवायं चम्पूकार इत्यपि वक्तुं संनह्यन्ति"। किन्तु प्रबलप्रमाणाभावाद्वयं न तान् अनुमोदामहे। किं च महेश्वरेण विश्वप्रकाशकोषो हि ११११ ई० वर्षे निरमायीति स्पष्टं ग्रन्थे—

रामानलव्योमरूपैः शककालेऽभिलक्षिते।
कोषं विश्वप्रकाशाख्यं निरमाच्छ्रीमहेश्वरः॥ ( अन्तिमपद्यम् )

किन्तु महेश्वरपूर्वपुरुषस्य हरिचन्द्रस्य जैनत्वं केनापि प्रमाणेन न बोध्यते। अतोऽयं जीवन्धरचम्पूप्रणेता हरिचन्द्रो हि सर्वेभ्योऽपि भिन्न एव प्रतीयते।

अपि च डा० कीथमहा[1]शयाशयानुसारेण तथा म० म० कुप्पु[2]स्वामिशास्त्रिमहाशयाशयानुसारेण चेदं वक्तुं पार्यते यदियं चम्पूर्नवमशताब्द्यनन्तरं दशमशताब्द्यां निर्मितेति। जीवन्धरचरितप्रख्यापकानामन्येषां निबन्धानां समयोत्कर्षादिपर्यालोचनं तु क्षत्रचूडामणिभूमिकायामेव विलोकनीयम्। नात्र विस्तरमातनुमः। जीवन्धरचम्प्वामद्यावधि न कापि टीका समुपलब्धा। मन्ये टीका केनापि न कृतेति। सेयं जीवन्धरचम्पूः म० म० टी० एस० कुप्पुस्वामिशास्त्रिणा तंजौरस्थित-श्रीकृष्णविलासयन्त्रालयतः १६०५ ई० वर्षे सरस्वतीविलासग्रन्थमालायां प्रकाशिता।

अत्र काव्ये कथापरिच्छेदका एकादश लम्बाः सन्ति। हेमाङ्गदमण्डलान्तर्गतराजनगरीभूप-श्रीसत्यन्धरजैनमहाराजपुत्रस्य जीवन्धरस्येतिवृत्तमादाय निबद्धेयं चम्पूः। जीवन्धरचम्पूनिर्मातुर्हरिचन्द्रस्य निर्माणशैली धर्मशर्माभ्युदयकर्तुर्हरिचन्द्रस्य च निर्माणशैली मिथः साम्येन मैत्रीभावं भजतेतराम्। यथा च जीवन्धरचम्पूकाव्ये ( पृष्ठ १४७ )

यस्याः पार्श्वे रत्नरेणु प्रक्लृप्तो धूलीजालः शक्रचापानुसारी।
अर्हन्नाथं मुक्तिलक्ष्म्या वरीतुं क्षिप्तं रेजे कङ्कणं वा समीपे (४१ श्लो०११ल०)

"यस्यां च गगनतलचुम्बिनः स्पन्दमानमन्द-
पवमानकन्दलंवलमानध्वजाग्रमानस्तम्भाः—
क्रोधादीनां चतुर्णां निरसनाय प्रसृतसंसृ-
ल्लक्ष्मी तर्जनी कार्यधूर्वहा व्यराजन्त।"

---

( १ ) "ए हिस्ट्री आफ् संस्कृत लिट्रेचर" कीथकृतम्। आक्सफोर्ड १९२८ ई० ३१६ पृष्ठे। ( २ ) तंजौर १९०३ ई० वर्षे मुद्रितायां क्षत्रचूडामणिभूमिकायां कुप्पुस्वामिनां लेखः।

सालकान्तं मुखाभोगं दधत्यास्तत्सभाश्रियः ॥
लीलादर्पणतां प्रापुः सरस्यो यत्र निर्मलाः ॥ ४२ ॥ इति ।

एषैव च कल्पना धर्मशर्माभ्युदये निबद्ध्यते भङ्ग्यन्तरेण २० तमे सर्गे ।

यथा—"नेदीयस्याः प्रेयसा विप्रलम्भ-
व्याख्यादक्षां तेन वेणीं विमोच्य ।
धूलीजालच्छद्मना पार्श्वतोऽस्याः-
क्षिप्तं मुद्राकङ्कणं मुक्तिलक्ष्म्याः ॥ ७१ ॥
ते प्रत्याशं वायुवेल्लद्ध्वजाग्रा-
मानस्तम्भा स्तत्र चत्वार आसन् ॥
क्रोधादीनां ये चतुर्णां निरासे-
संसल्लक्ष्म्यास्तर्जनीकार्यमीयुः ॥ ७२ ॥
कास्यं तस्याः सालकान्तं दधत्याः
शोभामङ्के सम्पदं स्वां दिदृक्षोः ॥
तच्चत्वारि स्फाटिकस्वच्छनीरा-
ण्यापुर्लीलादर्पणत्वं सरांसि ॥ ७३ ॥

यथा वा—"स्वामिञ्जिनेन्दौ त्वयि जृम्भमाणे-
व्यर्थीकृतानामुडुराजभासाम् ॥
द्राग्वेधसा दण्डनियन्त्रितानां
राजीव ते राजति चामरालिः । (जीवन्धर च०११ल०५०)
कुरङ्गैरुद्गतग्रीवैः श्रूयमाणा निरन्तरम् ॥
जितपीयूषधारा ते दिव्यभाषा विराजते ॥ ५१ ॥

धर्मशर्माभ्युदये च—

"रेजे मुक्तिश्रीकटाक्षच्छटाभा पार्श्वे पङ्क्तिश्चामराणां जिनस्य ।
ज्ञानालोके निष्फलानामिवेन्दोर्भासामुच्चैर्दण्डनियन्त्रितानाम् ॥ (२०स० ६७।)
अत्युद्ग्रीवैः श्रूयमाणा कुरङ्गैः कर्णाभ्यर्णस्फारपीयूषधारा ॥
आगव्यूति द्वन्द्वमभ्युल्लसन्ती दिव्या भाषा कस्य नासीत्सुखाय ॥ (६८ श्लो०)

इत्याद्येषा हि दिगुपदर्शिता । रचनासादृश्यं तु बहुत्र स्थले समुपलभ्यते, तद्विद्वद्भिः स्वयमेवालोचनीयम् । विस्तरभयान्नात्र ता उद्ध्रियन्ते ।

किंच -वादीभसिंहकृत-क्षत्रचूडामणावपि रचनानुकृतिराधिक्येन समधिगम्यते । यथा हि चम्पूकाव्ये-"निजहृदयमपि सर्वथा न विश्वसनीयम्, किमुत जनान्तरम् ।
किन्तु सर्वेषामपि स्वीयत्वेन विश्वसनीयत्वेन च ज्ञातव्यो यथा चन्द्रसूर्यौ ।"

उक्तरचनासदृशः श्लोको यथा क्षत्रचूड़ामणौ—( १ ल० १५ श्लो० )

हृदयं च न विश्वास्यं राजभिः किं परो नरः ।

किन्तु विश्वस्तवद्दृश्यो नरायन्ते हि भूभुजः ॥

यथा वा जीवन्धरचम्पूकाव्ये—

"शम्यानिभासम्पदिदं शरीरम् । चलं प्रभुत्वं जलबुद्बुदाभम् ।।

तारुण्यमारण्यसरित्सकाशं क्षयिष्णु नाशो हि न शोचनीयः ॥

क्षत्रचूड़ामणौ चैतत्समानाभिप्रायको श्लोको यथा— (१मे लम्बे ५९ श्लोकः )

"यौवनं च शरीरं च सम्पच्च व्येति नाद्भुतम् ॥

जलबुद्बुदनित्यत्वे चित्रीया नहि तत्क्षये" इति ।

किंचात्र काव्ये कविना नलचम्पूकादम्बरी कथादिवत् परिसंख्यालङ्कारो ललिताविलम्बार्थप्रत्यायकपदैर्निबद्धो नितरां मनसो मोदमातनुते । यथा—'आस्रवं फलितवनराजिषु, करपीडनं नितम्बिनीकुचकुम्भेषु, विविधार्थचिन्ता व्याख्यानकलासु, नास्तिवादो नारीमध्यप्रदेशेषु, गुणभङ्गो युद्धेषु, खलसङ्गः कलमकुलेषु, अपाङ्गता कुरङ्गाक्षीलोचनतरङ्गेषु, मलिनमुखता मानिनीस्तनमुकुलेषु, आगमकुटिलता भुजङ्गेषु" इत्यादि पञ्चमे पृष्ठे । यथा वा शब्द-साम्येन श्लेषानुप्राणित शाब्दीपूर्णोपमायाः "यश्च किल संक्रन्दन इवानन्दित सुमनोगणः, अन्तक इव महिषी समधिष्ठितः, वरुण इवाशान्तरक्षितः, पवन इव पद्मामोद-रुचिरः, हर इव महासेनानुपातः, इत्यादि विस्तरो ग्रन्थ एव विलोकनीयः ।

सगुणालङ्कारकविताकामिनीनायको हरिचन्द्रः कविः स्वयमेव प्रकारान्तरेण तिरस्कृतवीणां स्ववाणीं वर्णयते—

जीवन्धरस्य चरितं दुरितस्य हन्तृ, प्राप्ता मलीमसतमापि मदीयवाणी ।

जीवान् धिनोति नियतं मलिनाञ्जनश्री बिम्बाधरीमयनपङ्कजसंगतैव । (१ ल.१२)

मम च मधुरा वाणी विद्वन्मुखेषु विनृत्यतां

विलसितरसा सालङ्कारा विराजितमन्मथा" । ( ११ ल. ६० )

तदेतद्युक्तमेव विशिष्टकवेरेतादृशमभिधानम् ।

---

## "निबन्धनाम-धामप्रकाशः"

लेखकः—'यशोदानन्दशर्मा शास्त्री' ।

—०:※:०—

षष्ठवर्षीय 'सूर्योदय'स्य नवम दशमेति संयुक्त-संख्ययोः 'निबन्ध नाम-धाम निह्नवः' इति श्लोकचतुष्टयमयो लेखो दृष्टिपथमवतीर्णस्तस्मिन् अय-

स्त्रिंशत् प्रश्ना गुप्तलेखकमहोदयेनाकारिषत; यद्यपि लेखक-महोदयेनोत्तरीतुं प्रेरणा नाकारि, तथापि तस्य महाभागस्योत्तर-प्रकाशने इच्छा प्रतीयते, अन्यथा प्रश्नानां प्रकाशनमेव वैयर्थ्यं कलयेत् । इमं गूढ़ाभिप्रायं विचार्य्य तत्प्रश्नानुत्तरीतुं यथामति करोमि चेष्टाम् ।

तथाहि—

१ ( प्रश्नः ) कोऽब्धिः ( उत्तरम् ) 'नदीशः' ।

२ ( प्र० ) किं हि सपिण्डवाचकपदम् ( उ० ) 'सनाभिः'

३ का रयाद्भवस्य स्वसा ?—'ननान्दा'

४ किं जातं कलशोदधेः ?—'मथनम्'

५ किमुपदं संशीति विद्योतकम् ?—'संशयः'

६ कत्र्यन्ते ननु कानि संयति शरैः ?—'वर्म्माणि-मर्म्माणि वा'

७ कश्यस्य कोऽर्थो मतः ? -'कशार्हः' ( अर्थोऽयं न तु विग्रहः )

८ गार्हस्थ्येऽस्ति नु कः सुखी ?–'सस्त्रीकः–सुस्त्रीको वा'

९ भवति को वृष्टौ ? -'आसारः' ( धारासम्पातः )

१० अनिष्टं किमु ?—'मरणम्'

११ को जीवन्मृतकः ?—'अस्वस्थः'

१२ मृतेऽभिदधते किम् ?—'मृतः सः'

१३ कोऽग्नि पर्य्यायकः ?—'दमुनाः'

१४ किं भोश्छादनवक्रदार्वभिहितम् ?—'वलभी'

१५ नेत्रागतौ कार्प्यते ?—( नेतॄणामागतौ का अर्प्यते 'अर्प्यते' इत्यस्यारोप्यते इत्यर्थः प्रतीयते, धातूनामनेकार्थत्वात् ) 'पताका' ( नेतॄणां समागमने हट्टेषु पताकाः ( झण्डियां ) आरोप्यन्ते )

१६ पुन्नाम्नो नरकात् प्ररक्षति नु कः ?—'तनयः'

१७ धर्म्मे कया सत्फलम् ?—'आस्थया' ( श्रद्धया इत्यर्थः )

१८ मूर्खः को वरिवस्यतेऽपि ( अत्र अपिर्भिन्नक्रमः, मूर्खोऽपि को वरिवस्यते इति सम्बन्धः ) 'सश्रीकः'

१९ महिषः ख्यातः कया संज्ञया ?—'कासरः'

२० सर्वो नास्ति नु कीदृशो जगति ?—अनामा ( नामरहितः कोऽपि न भवति )

२१ को भावो न हृद्-गाहते ?—'कृतकः'

२२ का संज्ञा वरिवर्ति कण्टकि फलस्य ?—'पनसः'

२३ आस्ते नुका दुःखिनी ?—'विधवा'

२४ विद्वन्! किं न दृतिं विरच्यत इह ?— 'चर्मणा' ( दृतिः—'मशक' )

२५ श्रेयान् मतः कोऽञ्जसा ?—'असंवित्' ( बुद्धिरहितः )

२६ किं कृत्वा मनुजोऽत्ति शाकं ?—'संस्कृत्य'

२७ अथ ना प्राणैर्विना कीदृशः ?—'मृतकः'

२८ कोऽनभ्रः शरदि ?—'आकाशः'

२९ प्रसिद्धिजनकः ( 'क' इत्यनुषङ्गः ) 'सुलेखः'

३० कस्या हितैषी नृपः ?—'प्रजायाः'

३१ कादन्तं किमुदर्शनार्थकपदं ?—'निध्यानम्' ( दर्शनम् )

३२ गङ्गास्ति किं जातिका ?—'आपगा' ( नदी )

३३ दृष्ट्वा कीरमथो भणन्ति किमिह ?—'शुकः सः'

इत्थं प्रत्येकोत्तरस्य मध्यगवर्ण योजनेन ('सूर्य्योदय-प्रसिद्धलेखकः श्रीमान् पण्डित— ) "दीनानाथशर्मा शास्त्री सारस्वतः, मुलतानस्य श्रीसनातनधर्म्म-संस्कृतकालेजाध्यापकः" प्रतीयते। क्वचित् प्रतीयमाना त्रुटिः क्षन्तव्या।

---

# पण्डितेभ्योऽभ्यर्थना।

## ले० साहित्याचार्य्य पण्डितश्रीशिवशंकर झाः

( वेद-व्याकरण-काव्य-स्मृतितीर्थः ) जनकपुरस्थ-राजकीय संस्कृतविद्यालयाऽध्यापकः।

अयि पाठकमहाभागाः! अद्यत्वे संस्कृतिमाया वाचो यादृशी दुर्दशा दृश्यते तदवलोकनेन दुःखोदधौ नितरां निमज्जति चेतः। यासु परीक्षासमितिषु वयं समुन्नतिभारं निक्षिप्य कर्णे तैलं दत्वा सुखं शयाना स्मः ता एव परीक्षासमितयः सुरभारत्या मूलोच्छेदने बद्धपरिकरा निभाल्यन्ते। स्वीये हृदि हस्तमारोप्य निष्पक्षपातं विचारयन्तु भवन्तः यत्परीक्षासमितयः' शास्त्रस्य भारत्याश्च कियन्त-मुपकारं साधयन्ति। संस्कृतपरीक्षासु त एव ग्रन्थाः सन्ति येषु समितिसम्बन्धि-भिष्टीका टीप्पणी वा कृता वर्त्तते। मौलिकानां ग्रन्थानां प्रायोऽभाव एवाऽव-लोक्यते। काश्यां, विहारोत्कलसंस्कृतसमितौ च भट्टिकाव्यं मध्यमपरीक्षाया-मासीत् तद्दूरदर्शिभिः सुधारकम्मन्यैः समित्यध्यक्षैः परीक्षातो निष्कासितम्। विहारे सर्व्वेषां शास्त्राणामेकैव प्रथमाऽस्ति। तत्राऽऽर्य्याणां मूलभूतस्य वेदस्य चर्चाऽपि नास्ति। एवं व्याकरणसाहित्यमध्यमपरीक्षायां साहित्यस्य-केवलं नाम

मात्रमेव विद्यते। नहि तावताऽध्ययनेन किमपि साहित्यिकं ज्ञानमुत्पद्यते। इत्थं प्रायः सर्व्वशास्त्रपरीक्षासु वैपरीत्यं विलोक्यते। भवतु, संस्कृतपरीक्षायाः प्रधानतमोद्देश्यं सुरभारतीसमुन्नतिकरणमेव विद्यते। एतस्मिन्विषये सर्व्वशा विपरीतमेव साधितं भवति। यदा संस्कृतपरीक्षासमितिः देववाचः समुन्नतिं चिकीर्षति तदा कथं कार्य्यपद्धतिमाङ्गलभाषायां चालयति। यदि कश्चिच्छात्रः पण्डितो वा समितौ गीर्व्वाणगव्यां पत्रं प्रहिणोति तस्योत्तरे कदाचनानाभ्यस्तलिपियुक्तां पत्रिकामवाप्य ग्रामाद्ग्रामान्तरमाहिण्डमानो त्रित्रैर्दिनैः पत्रस्थविषयस्य कियदंशं वेत्ति। पुनस्तस्योत्तरदानार्थं कस्यचिदाङ्गलभाषाविदः शरणमेत्य मुहुः स्तुवन्नुत्तरं लेखयति। कार्य्यालये तादृशा एव कार्य्यकर्त्तारः सन्ति ये संस्कृतभाषां मृतभाषां मत्वा घृणायुक्त-दृष्ट्याऽवलोकयन्ति। अतस्तस्य तत्त्वमबुध्वैवोत्तरं लिखन्ति। विहारप्रान्तीय-तथा कलकत्ता संस्कृत-समितौ प्रश्नपत्रं विहायाऽन्यत्कार्यजातमाङ्गलभाषायामेव भवति। संस्कृतपरीक्षायां समुत्तीर्य्याऽपि रक्षोलिपियुक्तं प्रशंसापत्रमवाप्नोतीति किमाश्चर्य्यमतःपरम्। इतोऽपि विशिष्टा का नीतिर्भवेत्? संस्कृतपरीक्षासु सर्वत्र केन्द्रे प्रायः खृष्टीयभाषाविदो निरीक्षका भवन्ति। किं पण्डिता न मिलन्ति? चेत्पण्डितेषु तादृग्विश्वासो नास्ति तर्हि तया समित्या पण्डितानां किं कार्यं सेत्स्यति। यदि नैजेऽपि भवने स्वीयजनस्य विश्वासो नो भवेत्तदा तदाऽऽलयेन किं फलम्। अयि मान्याः पण्डिताः! तथा छात्राः! स्वीयेऽपि गृहे भवतां समादरो नास्ति तथा भवतां वचसि केऽप्यवधानं न ददति। तर्ह्यन्यत्र कुत्र समादरो भवेद्भवतां के वा वचनं श्रोष्यन्ति? चेद्भवन्तः स्वीयां समुन्नतिमभिलषन्ति तदाऽद्यारभ्य शपथं विधाय परीक्षासम्बन्धि निखिलं कार्यं संस्कृतिमे वचस्येव विधीयताम्। प्रतिमण्डलं तथाऽऽन्दोलनं क्रियतां यथा समितौ समस्तं कार्यं संस्कृतभाषायामेव स्यात्। तत्र सर्वे कार्य्यकर्त्तारश्च संस्कृतज्ञा एव भवेयुः। एवं भवन्तश्चेन्न कुर्य्युस्तदा कथमपि भारती भारते न भास्यति। इयं मृतप्रायाऽखिलभाषाजननी रक्षिता सर्व्वानस्मान् पालयिष्यति, शन्नो भवतु।

( संस्कृत-परीक्षासमिति-सञ्चालकैरवधानीयोऽयं लेखः, इति सम्पादकः )

———

संस्कारैश्च सृष्टेरङ्कुरोद्गम इत्यादयो विषया विवेचनीया विद्यन्ते । आसुरी सृष्टिस्तु तमोगुणप्रधानेति विषये सर्वाण्यपि शास्त्राणि न वैमत्यं भजन्ते । सत्त्वापेक्षया तमस एव कार्य्यं प्रथमं प्रारभ्यते इति सर्वत्रैव संसारे समुपलभ्यते इत्यस्मादेव हेतोर्जगति धर्मक्रियापेक्षया अधर्मक्रियाया एव प्राबल्यं व्यापकत्वञ्च सर्वत्राधिक्येनाभाषते । तत्र तमोऽधोगच्छति सत्त्वञ्चोर्ध्वं स्फुरति-अतोऽपि पूर्वं तमोऽभिमुखी एव वृत्तिर्भवति यद्बलेन प्रथममसुराणां सृष्टिर्भवति पश्चाच्च सत्त्वमयी देवसृष्टिरात्मलाभं लभते ।

## कालप्रादुर्भावप्रकारः ।

सृष्ट्या सहैव कालोत्पत्तिर्जायते स एव कालोऽहोरात्रभेदेन सत्त्वगुण-तमोगुणात्मना द्विधात्मानं विभज्य तिष्ठति । अनेनैव हेतुना असुरा देवाश्च भ्रातरः कथ्यन्ते । तत्रासुरा ज्येष्ठा भ्रातरो देवाश्च कनिष्ठा इति । तदनुसारमेव रात्रेरपि प्राथमिक एवाधिकारः कथ्यते । सृष्टेरारम्भकाले पूर्वं रात्रिरेवासीद् । सृष्टेः कालेन सहायमलौकिकः सम्बन्धो न विस्मरणीयः ।

पितृगणा अपि देवभेदा एव गीयन्ते । तेषामपि सृष्टिसामञ्जस्यरक्षणं कर्तव्यम् । ब्रह्माण्डमध्ये मृत्युलोक-प्रेतलोक-नरकलोक-पितृलोकाश्चेति चत्वारो लोका भूलोकशब्दाभिधेया भवन्ति । तत्रैव तेषां पितृगणानां पूर्णोऽधिकारो विद्यते । भगवान् धर्मराजो यमस्तेषां पितृणामधिपो निगद्यते । स एव जीवानां सद्-सत्कर्मफलद ईश्वरोऽभिधीयते । अस्मादेव हेतो र्देवलोकसृष्टेरनन्तरं पितृगणानां सृष्टिरुक्ता । पितृगणानां सन्ध्याशब्दवाच्यत्वस्याऽप्ययमेव हेतुरस्ति यत् जीव उपरि देवलोके वा प्रतिष्ठेत, अधोऽसुरलोके वा पतेत्, नरकं गच्छेत्, स्वर्गं वाऽरोहेत्, सर्वत्र गत्वा पुन स्तत्रैवावागमनचक्रबलेन मृत्युलोके समायात्येव यतो हि मृत्युलोक एव कर्मभूमिः कथ्यते । सोऽपि च पितृशृङ्खलया पितृराज्येन चाबद्धो विद्यते । अत एव पितृगणाः सन्ध्याशब्दवाच्या भवन्ति ।

## सृष्टिरूपकनिदर्शनम् ।

मनुष्यपिण्डमपि सर्वेषां केन्द्रस्थानीयं निगद्यते । अतश्च तद् ज्योत्स्ना-विशिष्टमुषःकालात्मना कथितं विद्यते । अन्तर्दृष्टि-शालिनो योगिराजा हि रहस्यमिदं साधु सञ्जानन्ति । यथा हि पितृगणा देवयोनयो गीयन्ते तथैव राक्षसा यक्षाश्चासुरयोनिसम्बन्धभाजोऽभिधीयन्ते । अन्यतश्च ऋषिगणा अपि पितृगणवद् देवपिण्डधारिण एव भवन्ति । ऋषीणामयं विशेषो विद्यते, यत्तेषां निवासश्च-

तुर्दशस्वपि भुवनेषु विद्यते। येन च शास्त्राणि देवासुरभेदेन द्विधा विभक्तानि श्रूयन्ते। दैवशास्त्राणि च देवलोकस्थर्षिप्रेरणया, आसुरशास्त्राणि तु असुरलोकस्थर्षिप्रेरणया मानवान्तःकरणे शृङ्खला बद्धानि प्रतिष्ठन्ति। नित्यपितृगणाश्च देवश्रेणिगा एव गीयन्ते, त एव ज्ञानराज्यस्य सञ्चालकाः।

इह या सर्पयोनिरुक्ता दृश्यते नैवेयं प्रसिद्धा मृत्युलोकगता सर्पयोनिरपि तु असुरलोकनिवासिनी देवयोनिरेका, यस्याश्च वर्णनमस्मिन् पुराणे पूर्वमेवोक्तम्। पाताललोके तस्या निवासोऽपि सूचित एव। इत्थं हि मांस-भक्षकाणामपि यद्वर्णनमिहासाद्यते तदपि असुरयोनिभिरेव सम्बध्नाति।

गन्धर्वाणां सृष्टिरपि दैवी सृष्टिरेवोच्यते। तस्या अपि सम्बन्ध ऊर्ध्वस्थद्वितीयलोकेनैव विद्यते। ततश्च चतुर्विधानां भूतसङ्घानां यद्वर्णनं विद्यते तत्सहजपिण्डैः सह सम्बन्धमाश्रयति। अन्यान्येषु पुराणेषु आसां सर्वासामपि सृष्टीनां प्रजापतिभ्य एवोद्गमो वर्णितो दृश्यते।

## पुराणीय-सृष्टिक्रमस्य दुर्विज्ञेयत्वकथनमुखेन तज्ज्ञानप्रकारोक्तिः।

पुराणेषु सृष्टिस्तराणां पौर्वापर्य्य-क्रमस्य याथातथ्येन वर्णनाभावात् तथा पूर्वोक्तानां त्रयाणामपि स्तराणां तेषामवान्तर्विभागानाञ्च यथाक्रमं प्रतिपादनविरहाच्च सृष्टितत्त्वावगतौ काठिन्यं प्रतीयते। वर्णन-पद्धतिरपि सामान्यबुद्धीन् मानवान् असम्बद्धवत् प्रतिभाति। अतः प्राकृतिकसृष्टीनां दैवीनां मानससृष्टीनां लौकिक्याश्च मैथुनसृष्टेस्तिसृणामप्यासां सृष्टिस्तराणां पार्थक्येन ज्ञानं स्यात्, उपरितश्च दैव्याः सृष्टेः रहस्यं साधु विदितं भवेत्तदा जिज्ञासूनां कृते सृष्टितत्त्व-विज्ञाने न किञ्चिदपि अवशिष्टं स्यात्।

दैवसृष्टिषु भगवतो ब्रह्मणः सृष्टेः, तत्पुत्राणां प्रजापतीनां सृष्टेश्च, देवपिण्डस्य, सहजपिण्डस्य, मानवपिण्डस्य च पृथगधिकारज्ञानेन सृष्टिप्रकरणं साधु ज्ञातं भवति। अन्यच्च-दैव्या मानससृष्टे रासुरदैव-लौकिकमानवात्मकचतुर्विधभूतसङ्घभेदानाञ्च साधु विज्ञानेन सृष्टिप्रकरणावगतौ सौलभ्यं जायते। वैज्या मैथुनसृष्टेः स्वरूपन्तु मतिमतां दृष्टिगोचरं तिष्ठत्येव। वेदशास्त्राण्यपि तदीयरहस्यं स्फुटमवगमयन्ति, साम्प्रतिकाः पदार्थविज्ञानविदोऽपि तदीयं विज्ञानं बहुत्र विस्तारयन्ति। किन्तु पूर्वकल्पानुसारं नवीन-कल्पे योगयुक्तान्तःकरणेन "यथापूर्वमकल्पयद्" इति वैदिकाज्ञानुसारं या मानसी सृष्टिरुदेति, तस्या एव ज्ञानं कठिनतरम्। तस्याः सृष्टे रहस्यज्ञानेन समाधिप्रकरणावगत्या चेदं ज्ञानं

मनसि ध्रुवमास्पदं करोति यत्सृष्टेरादावेव वेदानामाविर्भावः पुराणानाञ्च प्राकट्यमित्युभयमपि विज्ञानसिद्धम् ।

भगवतो ब्रह्मणोऽन्तःकरणतः ऋषीणामन्तःकरणे वेदानां श्रवणं आनन्दानुगत-समाधिद्वारैव सिध्यति । इत्थञ्च समष्टिरूपात्मकान्तःकरणतो व्यष्टिरूपात्मकान्तःकरणेऽपि विचारानुगत-समाधिद्वारा पूर्वकल्पीयगाथाप्रभृतीनां भावरूपेण पुराणात्मना प्राकट्यमपि विज्ञानसिद्धमेवेति निश्चितम् । तत्र वेदाः यथावच्छब्दद्वारा पुराणानि भावद्वारैवाविर्भावमासादयन्तीति सर्ववादिसिद्धः पन्थाः ॥ १३-४५ ॥

## आदिममानवसृष्टिरहस्योद्घाटनम् ।

यथा हि पूर्वाध्यायोक्तचतुर्विधसृष्टिस्तराणां तदवान्तरभेदानाञ्च याथार्थ्यनिरूपणेन सामञ्जस्यकरणमावश्यकमासीदिति तदनुष्ठितम् । तथैवेहोनपञ्चाशत्तमेऽध्यायेऽपि आदिममानवसृष्टीनामपि सामञ्जस्यविधानेन तद्रहस्योद्घाटनमत्यावश्यकमिति तदपीह वितन्यते । यतो हि अत्रत्य-सृष्टिवर्णनमपि साधारणमानवबुद्धिगोचरं नैव भवितुमर्हति । किन्तु तेषां बुद्धावसम्बद्धवदेव भासते । अतश्च मानवपिण्डानां सृष्टेरादिमावस्था मध्यमावस्था तथा चरमावस्थेति तिस्रोऽप्यवस्था विशदं विचारणीयाः । तासां रहस्योद्घाटनमन्तरा साधारणमानवानां सन्तोषः सुदुर्लभ एव ।

अन्यान्यशास्त्रेषु वर्णितं विद्यते, यद्-यदा पृथिवीयं मनुष्यवासोपयोगिनी समजनि, चतुर्दशभुवनानि च यथास्थानं निवेशितानि सुस्थिराणि सञ्जातानि, तदा मानवपिण्डसमुत्पत्तिः । इत्यत एव तेषां मानवानामाकाशतः च्युतिर्भवतीति तत्राभिहितं विद्यते ।

तत्र प्रथमं सनकादिपरमहंसानां पूर्णा सृष्टिः । तेऽपि भगवतो ब्रह्मदेवस्येच्छयैवाकाशात् प्रच्युता अभवन् । सा हि प्राथमिकी सृष्टिरीदृशी पूर्णा समुत्पन्ना यत्ते महापुरुषाः सनकादयः परमहंसा अभवन् । इच्छाविरहाच्च सृष्टिप्रवृत्तिविरहिताः सृष्टिकरणऽयोग्या स्ततोऽतीता एवासन् ।

ततश्च ब्रह्मदेवस्य द्वितीययेच्छया प्रजापतिनामका देवगणाः समुत्पन्नाः । सेयं सृष्टिः प्रथमसृष्टितोऽवरा द्वितीयोच्यते । यतो हि सृष्टिप्रवाहोऽधोमुखो भवतीति सर्वतन्त्रसिद्धान्तसिद्धोऽर्थः । ते च प्रजापतिगणाः मानससृष्टिकरणे प्रवृत्तास्तत्र सफलाः समर्थाश्च जाताः । तत्कालं यावत् सर्वापि देवपिण्ड-

विज्ञेया । प्रजापतीनां या प्रथमा दैवी सृष्टिः प्रादुरभूत् तथैव सहेयमपि प्रथमा दैव्येव सृष्टिरिति निर्विचिकित्समवगमनीयम् ॥ ६ १४ ॥

## वृत्तिराज्यसृष्टिवर्णनप्रसङ्गेन दैवसृष्टिरहस्यवर्णनम् ।

इदं पञ्चाशत्तमाध्यायमध्यगतमपूर्ववर्णनं वृत्तिराज्यसम्बन्धिसृष्टिविषयकं विज्ञेयम् । इदमलौकिकं विज्ञानमार्य्यसभ्यतायाः मौलिकसिद्धान्तपरिपूर्णमूहनीयम् । इदमपि सृष्टिप्रकरणं सनकादि-परमहंसानां दक्षप्रभृति-प्रजापतीनां मन्वादि-देवपदानां सृष्टिवदेव दैव्याः सृष्टे विषयो विज्ञेयः । एतस्य याथार्थ्यज्ञानेन मानवा धर्माधर्मरहस्यं कामार्थधर्ममोक्षमार्गरहस्यं विज्ञायार्य्यसभ्यताया मूलभित्तिं, तथा तस्या अध्यात्मलक्ष्यप्रवणत्वमपि विज्ञातुं समर्था भवन्तीति निश्चयः ।

इयं हि वर्णनपद्धतिः समाधिभाषया सम्वलिता विद्यते। वैदिक-सिद्धान्तानुसारेण स्थूलमृत्युलोकसम्बन्धिनीयं सृष्टिः चतुर्दशलोकात्मकैकब्रह्माण्डस्य सम्पूर्णाया अपि सृष्टेः चतुर्दशांशस्य चतुर्थांशात्मकैव विज्ञेया । पूर्वमपि साधु स्फुटं समर्थितमिदं विज्ञानमिह प्रसङ्गतोऽभिहितम् । अस्य स्थूलस्य मृत्युलोकस्य सर्वाऽपि व्यवस्था सूक्ष्मस्य दैवलोकस्यैवाश्रयेण निर्वाहिता भवतीत्येतदपि साधु प्रागेव प्रसङ्गेन समाहितम् । एतस्मादेव हेतोः सर्वेषामेव स्थूलभूतानामङ्गप्रत्यङ्गानां पर्वत-नदी-समुद्र-स्वर्ण-रौप्य—वज्रमणि—पद्ममणि-प्रभृतिधातुज-वानस्पत्य-भौमादि-पदार्थानां पृथक्तयाऽधिदैवभावेन रक्षका देवा भवन्तीति सनातन-वैदिकधर्मावलम्बिनां शास्त्राणि सोत्कर्षमुद्घोषयन्ति ।

इत्थं हि उद्भिज्ज-स्वेदजाण्डज-जरायुजादि-चतुर्विधभूतसङ्घानां प्रतिविभागं पृथक्त्वेनाधिदैवभावसंवाहका देवा भवन्तीत्येतदपि आर्य्यशास्त्रसिद्धान्तघोषः सर्वविदित एव । अश्वत्थ-न्यग्रोधप्रभृति-महावृक्षत आरभ्य शालिव्रीहि-प्रभृति-सूक्ष्मवृक्ष-पर्य्यन्तं सर्वत्रैवोद्भिज्जपदार्थेषु पृथक्त्वेन भिन्नभिन्ना देवा रक्षकाः सञ्चालकाश्च सन्तीति आर्य्यशास्त्रसिद्धान्तः । ते हि देवा एकयोनिगं जीवमन्यासु योनिषु यदा प्रापयन्ति तदा तस्य जीवस्य क्रमविकाशोऽभ्युदयश्च भवतीत्युच्यते ।

इत्थमेव स्वेदजादि-रोगघ्नरोगप्रदानां जीवानां पूर्णं रहस्यं पूर्वजाः त्रिकालज्ञा महर्षयो विदन्ति स्मेति शास्त्राध्ययनेनावगम्यते । येषां कीटाणूनां विषये साम्प्रतिकाः पदार्थविज्ञानविदः किञ्चिदेवावगन्तुं समर्था अद्यापि सञ्जाता इति निर्विवादम् ।

एवमेव महामारीप्रभृति-भयङ्कररोगप्रद-स्वेदजादिकीटानां ज्ञानादारभ्य पवित्रसलिलाया भगवत्या भागीरथ्या अपि पावित्र्याधायकानां सर्वरोगविनाशकानामपि रोगघ्न कीटानां ज्ञानं तेषां करतलामलकवज्ज्ञातसंसारसाराणां महर्षीणामासीदिति सर्वजनविदितो वृत्तान्तः।

उद्भिज्जस्वेदजादि-सर्वविधानां जीवानां तथा मयूर-कोकिल-काक-हंस-पारावत-सर्पादि-सर्वप्रकारकाणामण्डजानां हस्ति-वाजि-महिष-गो-प्रभृतिजरायुजानां जीवानां च यावन्तो लक्षशो भेदाः सन्ति, तासां सर्वासामेव जीवजातीनां पृथकया सञ्चालका रक्षकाश्च देवा इन्द्रादिप्रधान-देवैः स्वपदे निर्धारिता नियोजिता भवन्तीति सूक्ष्मलोकविदो विद्वांसो विदन्ति। यदा हि जीवानां संख्या वृद्धिमृच्छति तदा एतेषां देवानामपि पदानां वृद्धिः समेधते। यदा च जीवसंख्याह्रासमुपैति तदा देवपदानामपि क्रमशो ह्रासो भवतीति स्थायिनां सूक्ष्मातिसूक्ष्माणां दैवसृष्टि-रहस्यानां विज्ञानं नाधुनिका पदार्थ-विज्ञान-विदो विद्वांसो वेत्तुं समर्थाः। तेषां चर्मचक्षुष्काणां गोचरतोऽयं विषयो बहुदूरं विद्यते। ते विषयमिमं कल्पनाविषयमपि कर्तुं नार्हन्ति, ज्ञानन्त्वस्य दूरेऽपास्तम्। यतो हि ते स्वीयं चर्म-चक्षुः परमाणुपर्य्यन्तमेव विक्षिपन्ति। अस्य स्थूलस्य जगतोऽभ्यन्तरे यत् सूक्ष्मं दैवं जगद् विद्यते, तस्य ते कल्पनामपि न कुर्वन्ति, तत्र दृष्टिप्रसारस्य तु कथैव नास्ति।

## प्राधान्येन वृत्तिराज्य-रहस्यविमर्शः।

यथेयं दैवी सृष्टिरद्भुत-रहस्यपूर्णा विद्यते, तथैव प्रत्युत ततोऽप्यधिका वृत्तिराज्यसृष्टिरतिरहस्य-परिपूर्णा विज्ञेया। धर्माधर्मयोः पुण्य-पापयोः सदसतोः स्थिरीकरणाय वृत्तिराज्यमेव समर्थम्। अन्तःकरणस्यापि वृत्तिमयमेव स्वरूपम् तदेवान्तःकरणं सर्वेषामेवैषां जीवानां सञ्चालकम्। तद्धि वृत्तिराज्यमहोरात्रोदाहरणानुरूपं अक्लिष्टक्लिष्टभेदेन द्विविधं विभक्तं विद्यते। उक्तञ्च पतञ्जलिना—

"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टा" इति।

तत्र अक्लिष्टानां वृत्तीनां सञ्चालका देवगणाः क्लिष्टानाञ्च तासां सञ्चालका असुरगणा उच्यन्ते। पूर्वमुपात्ता यक्षराक्षसादिगणा आसुरसृष्टिसम्बद्धा एव विज्ञेयाः। देवा असुराश्चोभयेऽपि दैवसृष्टेरेवाङ्गीभूताः सन्ति। यथाऽस्माकं पिण्डं मानवपिण्डमुच्यते तथा देवानामपि विग्रहो देवपिण्डमुच्यते।

देवपिण्डधारिणो नानादेवा असुराश्चेह स्थूले मृत्युलोके धर्माऽधर्मक्रियासञ्चालकतया नियुक्ता विद्यन्ते। तत्रैव कदाचित् देवासुरयोः परस्परसंग्रामे दैवे जगति देवाः पराजयमनुभवन्ति, असुराश्च विजयमनुभवन्ति, तदा अस्मिन् मृत्युलोकेऽपि देवपदेषु असुराः स्वाधिकारमासादयन्ति ।

ते चासुरा युद्धे विजयमासाद्य यदा स्वाधिकारं वर्द्धयन्ति, तदा भूर्भुवः स्वरिति लोकत्रये निजाधिकारमासञ्जयितुं समर्था भवन्ति, नोर्ध्वतनेषु महरादिलोकेषु । स्वर्गे लोके च देवराजस्य प्रधानं नगरममरावती । तत्रैव राज्यसिंहासनञ्चास्तीति तदवधि भवति असुराणामधिकारः । अग्रेतने चोर्ध्वलोके नास्ति तेषामधिकारः, तत्र तेषां प्रवेश एव दुर्घटः । इदं हि देवासुरराज्यस्य संक्षिप्तं रहस्यम् ।

अन्तःकरणवृत्तयो हि उन्नतमानवयोनावुपेत्य पूर्णतां, धर्माधर्मयोः सदसतो र्ज्ञानाज्ञानयोः क्रियां प्रारम्भयन्ति। तासाञ्च वृत्तिजातीनां शक्तिः सर्वप्रधानेति विद्वद्भि रभ्युपेयमेव । यदा उद्भिज्जस्वेदजादि-जड़योनीनां पार्थक्येन सञ्चालका देवाः सन्ति, तदा सूक्ष्मातिसूक्ष्माणां प्रबलानां वृत्तिसमूहानां शृंखलाया व्यवस्थापका देवा असुराश्च पार्थक्येन सन्तीत्यत्र कः सन्देहः । वृत्तयस्तु तेषामध्यात्मस्वरूपा इति पूर्वमभिहितमेव, तेषामधिदैवस्वरूपमपि पृथगेवेति पूर्वमेवोक्तम् । आधिभौतं रूपञ्च तदीयं क्रियासमूहमेव विज्ञेयम् ॥ ६७–७३ ॥

## दुःसहाख्ययक्ष-निवासप्रदानव्याजेनार्य्यकर्तव्यदिग्दर्शनम् ।

यक्षानुशासनसम्बन्धि सर्वमपीदं वर्णनं वृत्तिराज्यसम्बन्धि विज्ञेयम् । पूर्वमपीदं विवृतमेव। धर्मसम्बन्धेन लक्ष्मीदेव्या अधर्मसम्बन्धेनालक्ष्म्या निवासः समुचित एव । अलक्ष्म्याः सन्ततिसम्बन्धिन उपदेशा स्वतः सिद्धाः। इत्थञ्चोपरि वर्णितेन सर्ववृत्तान्तेनार्य्यसभ्यतायाः स्वरूपस्य संक्षेपतो ज्ञानमुपजायते। तत्रैवार्य्यसभ्यतानुकूलानां शकुनानामपि वर्णनं प्रसङ्गतः समुपात्तं विद्यते। येषाञ्च प्रतिपालनं गार्हस्थ्याश्रमवासिनां कल्याणकामनयाऽवश्यकर्तव्यतान्तर्गतं विद्यते। दुःसहाख्य-यक्षानुकूला ये पदार्थास्ते हि अधर्म-वर्द्धका इति दुःसह-सम्पर्कतो दूरीभवनं धार्मिकाणामार्य्याणां दैनन्दिनं कर्तव्यं ज्ञेयमिति संक्षेपः ॥ ७४–८७ ॥

सा च भक्ति विना मदनुग्रहं नैवासाद्यते। फलतो यदा चेतसि ममानन्दसत्ता प्रकाशीभवति, तदा भक्तस्य यावस्था दृग्गोचरी भवति सैव भक्तिरित्युच्यते बुधैः। अतश्च ईश्वरानुग्रहेण लब्धस्यालौकिकस्यापार्थिवस्य चानुरागस्य नाम भक्तिरिति। नेयं भक्तिः चित्तवृत्तिधर्म इति शङ्कनीयम्। इत्थञ्चेदृग्लक्षणशालिन्या भक्त्यैव अवाङ्मनसगोचरमपि परमेश्वरं भक्तस्तदनुग्रहेणैवासादयतीति निर्विवादसिद्धोऽर्थः।

वेदान्तसिद्धान्ततोऽपीमं प्रश्नं समाधातुमर्हन्ति भक्तिमर्मवेदिनो विद्वांसः। तथा हि—वेदान्तनये अज्ञानकार्य्यत्वात् बुद्धिरपि मिथ्या असती चोच्यते तद्गम्या विषया अपि मिथ्या असन्त एव। तदेवं तन्नये ध्यानधारणाप्रभृतयो यावन्तोऽपीश्वरचिन्तनहेतवः सन्ति तेषां सर्वेषामपि मिथ्यात्वेऽसत्वेऽपि स्वप्ने यथा व्याघ्रादीनां दर्शनात् द्रष्टुर्निद्राभङ्गो जायते स चोत्थाय जाग्रदवस्थामुपेतः स्वस्वरूपस्थितो भवति तथैव ईश्वरस्य बुद्धिगोचरताभावेऽपि तदनुग्रहेणैव तं बुद्धिवेद्यं विधाय गौण्या भक्त्या तदुपासनां विदधत्साधकः स्वचित्तस्थैर्य्यं विन्दते। तस्मिंश्चित्ते आनन्दसत्तायाः प्रकाशो जायते। ततश्च तेनैवानन्देनात्यन्ताह्लादपरीतः साधक आनन्दस्वरूपं परमात्मानमासाद्य परानन्दाप्लुतो भवतीति विवेचनीयो विषयः। इत्थञ्च तस्य परमात्मनो बुद्धिवेद्यत्वाभावेऽपि भक्तिलभ्यत्वमावश्यकम् इति सिद्धान्तः।

भगवतः साक्षात्कारेण या मुक्तिरुदेति सा हि भक्तिद्वारेणैव भाग्यशालिना साधकेनासाद्यते। इत्यस्मादेव हेतोर्भक्तिरेव मुक्तिकारणमिति स्मृतिषु बहुश उपलभ्यते—तथा हि—

> एवं हरौ भगवति प्रतिलब्धभावो
> भक्त्या द्रवद् धृदय उत्पुलकः प्रमोदात्॥
> औत्कण्ठ्य-वाष्पकलया मुहुरर्द्यमानः
> तत्रापि चित्तवडिशं शनकैर्वियुङ्क्ते॥
> मुक्ताश्रयं यर्हि निर्विषयं विरक्तं,
> निर्वाणमृच्छति मनः सहसा यथाऽर्चिः।
> आत्मानमत्र पुरुषोऽव्यवधानमेक-
> मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः॥
> सोऽप्येतया चरमया मनसो निवृत्त्या
> तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये॥

हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्—

स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।

शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन !

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥

संक्षेपतः एषां पद्यानामयमेव सरलार्थो विद्यते यत्—भगवति भक्तिकृद्भक्तो भक्ति-युक्तेन चेतसा आनन्दपरीतो भूत्वा तस्मिन्ध्येये सर्वात्मना स्वचित्तार्पणं विधाय गुणातीतो भवन्नात्मसाक्षात्कारं कुरुते ततश्च निःश्रेयसपदमृच्छति ।

योगदर्शनस्यायं सिद्धान्तो यदेकतत्त्वानुसन्धानेन योगिनोऽन्तःकरणं समाधिस्थं भवति सैव योगावस्थेति गीयते । अस्यामेवावस्थायां द्रष्टा पुरुषः स्वस्वरूपे प्रतिष्ठितो भवति । अनेन च योगविज्ञानेनेदमेव सिध्यति यत्—भक्तेरनन्यया वृत्त्या भक्तस्यान्तःकरणमेकतत्त्वमयं जायते, ततश्च स भक्तः स्वयमेव समाधिस्थो भवति । तस्मिन्काले तस्य भक्तिमये समाधिस्थे चेतसि स्वयमेव स परमदयालुः परमेश्वर आविर्भवति । यत्रोक्तम्—

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्व-संशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परापरे ॥ इति । ५ ॥

किं लक्षणात्मिकेयं भक्तिरित्याह—

## साऽनुरागरूपा ॥ ६ ॥

पूर्वोक्ता भक्तिरनुरागात्मिकैवोच्यते । सर्वास्वपि चित्तवृत्तिषु रागद्वेषात्मिके इमे उभे अपि वृत्ती कारणरूपत्वात् प्रधाने गण्येते । तत्र द्वेषात्मिका वृत्तिः तमःप्रधानतया दुःखकारणं रागवृत्तिस्तु सत्त्वोन्मुखरजःप्रधानतया सुखकारणं भवति । उक्तञ्च महर्षिपतञ्जलिनाऽपि योगदर्शने—

"सुखानुशयी रागः" "दुःखानुशयी द्वेषः" इति ।

अनयो स्तात्पर्यमिदमवसेयम्—तथा हि-सुखस्मरणपूर्विका या तस्मिन् प्रवृत्तिः स एव रागः, दुःखस्मरणपूर्विका या ततो विरुद्धा प्रवृत्तिरुदेति सैव द्वेषशब्दवाच्या भवति । भक्तिश्च द्वेष-विरुद्धा रागानुकूला अलौकिकी वृत्तिरेवोच्यते । यद्यपि साधारणतया द्वेषस्तमोगुणमूलो रागश्च रजोगुणमूल एवोच्यते तथापि सुखेच्छारूपसत्त्वगुणेन तस्य सम्बन्धात्स हि रागः सत्त्वोन्मुख-

रजःप्रधाना वृत्तिरेव कथ्यते । अलौकिकी भक्तिरूपा वृत्तिः सात्त्विकी वृत्तिर्यत् कथ्यते तत्र भगवदनुरागसम्बन्ध एव हेतुः । तात्पर्य्यतः—अधोगतिशीलाया द्वेषवृत्तेर्विपरीता उन्नतिप्रदात्री अनुरागात्मिकाया वृत्तेरन्तराले वर्त्तमाना ईश्वरानुरागरूपिणी वृत्ति र्भक्तिरुच्यते । उक्तञ्च स्मृतिशास्त्रे—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ इति ।

गङ्गाया अविरला धारा इव-सर्वभूतस्थिते भगवति अहैतुकी अविच्छिन्ना याऽनुरागपरम्परा सैव भक्तिशब्दवाच्येति तात्पर्य्यम् । यथा बाह्ये जगति आकर्षणविकर्षणात्मिका द्विविधा शक्तिः कार्य्यसाधिका प्रचलति तथान्तर्जगति रागद्वेषरूपा द्विविधा वृत्तिः कार्य्यकारिणी कथ्यते । तत्राकर्षणं यथा रजोगुणमूलकं विकर्षणं तमोगुणमूलकं भवति, तथैवेह रागो रजःसत्त्वप्रधानो द्वेषश्च तमःप्रधानः कथ्यते । यत्राऽऽकर्षणविकर्षणयोरुभयोरेव समन्वयो भवति तत्रैव जगतः सत्त्वप्रधानं स्थितिकार्य्यं समेधते । फलतः आकर्षणविकर्षण-समन्वयेनैवेदं जगत् सुस्थिरं प्रवर्तते । चरमत इदमेव व्याख्यानतः सिध्यति यत् द्वेषाद्विमुक्ता रागानुरूपा या ईश्वरानुगा सत्त्वमयी अलौकिकी विशिष्टानुरागवृत्तिः सैव भक्तिरिति सुस्थिरः सिद्धान्तः ॥ ६ ॥

तस्या विशेषलक्षणमाह—

**स्नेह-प्रेम-श्रद्धातिरेकादलौकिकेश्वरानुरागरूपा ॥ ७ ॥**

परमात्मनि परमानुरागरूपिणी भक्ति र्हि लौकिकीभ्यः स्नेहप्रेमश्रद्धाभ्यो भिन्नैवोच्यते । लौकिकी प्रीतिस्तु त्रिधा विभक्ता विद्यते । स्नेह-प्रेम-श्रद्धारूपेणेति । पुत्रकन्याप्रभृतिषु या प्रीति र्भवति सा किल स्नेह-शब्देनोच्यते । इयं हि प्रीतिः स्वतो न्यूनवर्णवयस्केष्वेव भवति । अतो निम्नगामिनीत्युच्यते । भार्य्यामित्रादिसाम्यभावभाक्षु या प्रीति र्भवति सा हि प्रेमशब्दभाग् भवति । इयं हि समवर्णवयस्केष्वेवोत्पद्यते । मातृपितृगुरुजनादिषु जायमाना प्रीतिः श्रद्धाशब्देनोच्यते । सा हि उच्चप्रवाहा श्रेष्ठोच्यते । इत्थं हि लौकिकी प्रीतिः त्रिधा जगत्पदार्थे विभक्ता गङ्गाप्रवाहवत् त्रिपथगा मानवान् पुनाना चतुर्विधजीवान्तःकरणे प्रवहति ।

अन्तर्जगति बहिर्जगति चोभयत्रापि समानभावेन विराजमाना उभयो-

रपि नियामिका आकर्षण-विकर्षणात्मिका या द्वन्द्वशक्तिः शाश्वतं विराजते तस्या एव रागद्वेषात्मकौ द्वौ भेदौ विद्येते । तत्र रागस्यैव पुण्यमयं विशेष-स्वरूपं दर्शनशास्त्रेष्वनुरागनाम्नाऽभिधीयते । स एवानुरागः काममूलकः प्रेममूलकश्चेति श्रेणिद्वये विभक्तो दृश्यते । तयोश्च काममूलकानुरागेणा-सक्तिः समेधते प्रेममूलकेन च तेन भावः प्रादुर्भवति । कामस्य लक्ष्यमनात्म-स्वरूपमिन्द्रियं विद्यते मूलञ्च स्वार्थपरायणत्वम् । प्रेम्णश्च लक्ष्यमात्मा अस्ति, मूलञ्च परार्थसाधनमेव विज्ञेयम्, इत्यस्मादेव हेतोः कामुको यावतीं स्वार्थ-परतां विजहत् यावतीमेव परार्थ-साधनेच्छां विवर्द्धयति तावानेव सोऽधिकः प्रेमिको निगद्यते । इत्यत एव निष्कामकर्मयोगविज्ञानस्य गीतोपनिषत्प्रतिपा-दितस्य अधिकारवान् प्रेमिक एवोच्यते, न तु कामुकस्तत्र कथमप्यधिकार-भाग् भवितुमर्हति । क्वचन कामुकोऽपि परिणामे प्रेमिकपदमासदन्नव-लोक्यते । यथा पुराणेषु विल्वमङ्गलादीनां निदर्शनमप्युपलभ्यते । तथा हि— विल्वमङ्गलो हि पूर्वावस्थायां वेश्यासक्त एवासीदिति निर्विवादम् । परन्तु स तस्यामप्यवस्थायां स्वसात्त्विकवृत्त्यनुसारेण परार्थवृत्तिबहुल एवा-भवत् । अतश्च पूर्वार्जितपुण्यशालिनि विल्वमङ्गले सत्त्ववृत्तिराविक्येन प्रादुर्भवति स्म, यत्प्रभावेण स परार्थपरायणतया निष्कामभावप्रकाशेन च तदा-त्मिकामेव शुभां वृत्तिं स्फुरयितुमेकपद एव समर्थो बभूव । यतश्च काम-वर्द्धिनीं वेश्यामेकपद एव विस्मृत्य स स्वीयान्तःकरणानुरागतरङ्गिणीं काम-भूमितः प्रच्याव्य प्रेमभूमौ प्रधाहितुं समर्थो बभूव । तत एव प्रेममयस्य भगवतो दर्शनमपि तस्य पुण्यात्मनः समजनीति डिण्डिमघोषमुद्घोष्यते ।

यथार्थतो हि प्रेमिके पुंसि प्रेमवृद्ध्या सह स्वार्थपरताया अपि ह्रासो भवति । येनावसाने पूर्णतामधिगतवति प्रेमिके मूलत एव स्वार्थपरायणा वृत्तिरप-गता भवति । स पूर्णप्रेमिकस्थानमासाद्य नन्दति ।

यथा च पूर्णो भक्तः पूर्णो ज्ञानी वा परायाभक्तेरधिकारी भवितुमर्हति तदनुसारेणेदमपि स्वीकरणीयं यद् ज्ञानी एव पूर्णप्रेमिको भवितु-मर्हति । यतो हि ज्ञानविरोधिनोऽहंतत्त्वस्य विद्यमानत्वे न कोऽप्यात्मज्ञानि-पदमासादयितुं प्रभुः, तथैवाहंकारतत्त्वविशिष्टः स्वार्थपरायणो न कोऽपि पुमान् सत्यप्रेमिको भवितुं समर्थ इति ध्रुवमवसेयम् । स्वार्थो हि अज्ञान-मूलक इति स्वार्थपरोऽज्ञानविमुग्धो न कोऽपि शुद्धप्रेमाश्रयो भवितुं समर्थः, नापि पराया भक्तेरेव सोऽधिकारी भवितुं क्षमः । अत्र विषये श्रीमद्भागवत-वाक्यं विमर्शनीयं विद्यते । तथा हि—

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते,
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ।
भजन्त्यभजतो ये वै करुणाः पितरो यथा,
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ।
भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः,
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ।
नाहन्तु सख्यो भजतोऽपि जन्तून्
भजाम्यमीषामनुवृत्तिवृत्तये,
यथाऽधनो लब्धधने विनष्टे
तच्चिन्तयान्यन्निभृतं न वेद ।
एवं मदर्थोज्झितलोकवेद-
स्वानां हि वो मय्यनुवृत्तयेऽबलाः ।
मया परोक्षं भजता तिरोहितं
माऽसूयितुं माऽर्हथ तत्प्रियं प्रियाः ।
न पारयेऽहं निरवद्य संयुजां
स्वसाधुकृत्यं विबुधायुषापि वः ।
या माऽभजन् दुर्जरगेहशृङ्खलाः
संवृश्च्य तद्वः प्रतियातु साधुना । इति ।

इत्थञ्च पूर्वोक्ताः त्रिविधा अपि स्नेह-प्रेम-श्रद्धाशब्दविभक्ताः प्रीतयो लौकिका एतव्यर्थ्योऽपि विज्ञेयाः। यतो हि जगत एव नश्वरत्वात्तदाश्रया अपि नश्वरा इति ताः सुतरां नाशशीलाः । परन्तु भक्तिस्तु ताभ्यः सर्वाभ्योऽपि प्रीतिभ्यो विलक्षणैव । यतो हि सा शाश्वतिके परमात्मनि लब्धास्पदा अलौकिकी प्रीतिरूपा अनिर्वाच्यैव विद्यते । वस्तुतो हि द्वेषस्तमोमूलको रागश्च रजोमूलक इति शाश्वतिको वादः । परन्तु आत्मसुखेच्छाविशिष्टत्वान्मोह-मिश्रिततया च लौकिकानुरागस्वरूपाः स्नेह-प्रेमश्रद्धात्मकास्तु अनुरागा रजःप्रधानाः सत्त्वोन्मुखा विबोधनीयाः । ईश्वरविषयिणी विशदानुरागात्मिका अलौकिकी भक्तिस्तु मोहराज्यातीतेति शुद्धा सत्त्वस्वरूपैव विज्ञेया । सा हि भगवद्भक्तजनैकहृदयविहारिणी साक्षान्मुक्तिप्रदायिनी भक्तिः लोकातीतप्रभाव विलक्षणा सर्वरसतिरोधायिकेति नाणुरपि सन्देहावसरः ।

अत्र कश्चित् शङ्कते यद् यदा भगवति केऽपि पुत्रभावेन स्निह्यन्ति, केचन मित्रपत्यादिभावनया प्रेमाधानं विदधति, अपरे च प्रभुपितृमातृभावेन श्रद्धा-

मर्षयन्ति चेता वृत्तयो भक्तिशब्दवाच्या भवितुमर्हन्ति न वेति। अत्रोच्यते—सम्भाव्यमानानामीदृशीनामेव शङ्कानां समाधानायेह सूत्रे 'अलौकिक' पदोपादानं विद्यते।

लौकिकव्यवहारानुरूपं पुत्रमित्रपित्रादिभिः सह जायमानं स्नेह-प्रेम-श्रद्धादिकं यथावसरं यथोचितं विवर्द्धमानमपि बन्धनकारणं नश्वरञ्च भवति। यतो हि तदाश्रयविनश्वरत्वं प्रत्यक्षसिद्धमेव। यैः सहैषां व्यवहारो भवति तेषामनित्यत्वाद् एषामनित्यत्वे कः संशय इति। तेषां रोगार्त्तावस्थायां दुःखार्तत्वे सति स्वस्यापि तद्वृत्तिवियोगजन्यदुःखभागित्वमकामतोऽपि प्राप्यत एव।

आभिर्लौकिकस्नेहप्रेमादिवृत्तिभिर्याहि जीवानामानन्दोपलब्धिर्भवति तत्रेदं कारणं विज्ञेयं-यत् पुत्रादिविषयजातैः स्नेहमयीनां वृत्तिजातीनां समुदये अन्याश्चित्तवृत्तयस्तत्रैव वृत्तौ विलीना भवन्ति। इत्थञ्च वृत्त्यन्तराभावात् चित्ते शान्तिरुदेति ततश्च शान्ते चेतसि आनन्दमयस्य परमात्मन आभासश्छायात्मना पतति येन शान्तं चित्तमानन्दभाग् भवति। परन्तु तत्र चित्तवृत्तिविषयस्य पार्थिवत्वान्नश्वरत्वाच्च तन्मूले च मोहमय्याः कामात्मिकाया ममत्वबुद्धेः सत्त्वात्तेनानन्देनाऽपि जीवस्य बन्धनमेव दृढायते न मुक्तिपथः परिष्कृतो भवति। तत्रालौकिके ईश्वरालम्बनात्मकेऽनुरागे तु नायं प्रकारः। यतो हि तस्य परमपितुरीश्वरस्य नित्य-सत्य-सनातनत्वात् निखिलकामनाश्रयतया मायाधीश्वरत्वेन च तत्र मोहमयस्य कामविमुग्धभावस्याप्यर्पणेन भक्तो निष्कामभावं शान्तिञ्चैव लभते न तत्र कोऽपि विमोहपङ्कलेपावसर उदेति। अतश्चेश्वरे परमपुंसि लब्धपदा अपि स्नेहादयो भक्तिपदेनैव वाच्या न तु साधारणस्नेहादिशब्देनेति। फलतोऽस्य निष्कर्षस्तु एवं बोध्यः-यद् उक्ताः त्रिविधा अपि स्नेह-प्रेमश्रद्धाशब्दवाच्याः प्रीतयो लौकिकं विनश्वरं पदार्थमवलम्बन्त इति लौकिका विनश्वर्योऽवसेयाः। परन्तु ता एव परमात्मावलम्बनबलात् शुद्धसत्त्वसम्पर्कजुषो भक्तिशब्दवाच्यतया अलौकिका विलक्षणा प्रीतयश्चेति स्तुत्या सर्वैरेव पुण्यशालिभिरभ्यर्थनीया इति।

यद्धि उपरितनेषु श्रीमद्भागवतपद्येषु श्रीमद्भगवन्मुखेन भक्तशिरोमणीनां श्रीगोपिकानां प्रश्नोत्तररूपेण लौकिकालौकिकभेदेन प्रेम्णो निरूपणं विहितं तद्धि सर्वमपि अस्यैव प्रकृत-विज्ञानस्य पोषकमूहनीयम्। तथा हि यश्च प्रेमकर्तुरुपरि प्रेम करोति तस्य प्रेमफलभागित्वेऽपि तदीया प्रेमगतिः स्वार्थमूलिकेति न शुद्ध-प्रेमास्पदत्वं स लभते। यो हि प्रेमाऽकर्तर्य्यपि प्रेम वितनुते तस्य प्रेमाधिकार स्तदपेक्षया समुन्नतः। यतो हि अत्र स्वार्थो विलय-

नोन्मुखो भवति । उदाहरणतो यथा मातापित्रोर्यः पुत्रादिषु स्नेहो विद्यते तत्र प्रत्यक्षस्वार्थन्यूनत्वेऽपि तन्मूलेऽज्ञानासक्तिसत्तया तस्योन्नतत्वेऽपि नहि तत्र विशुद्धिसंञ्चारो भवितुमर्हति । ये च प्रेम कर्तव्यपि नैव स्निह्यन्ति तेषां चतुर्धाः श्रेण्योऽतिविचित्रताजुषो वेदितव्याः । श्रीमता भगवता श्रीकृष्णेन भक्तशिरोमणीनां गोपिकानां प्रश्नस्योत्तरछद्मना अत्यद्भुतस्य विज्ञानस्य प्राकट्यं व्यधायि । तत्र चतसृष्वपि श्रेणिषु तिस्रः श्रेणयस्तु प्रेमराज्यस्य वहिर्गतायां कोटौ विद्यन्ते एकस्याञ्च चतुर्थ्यां श्रेणौ प्रेमपथ एव निरुद्धो विद्यते । उक्तञ्च केन चित्—

सात्त्विकौ दम्पती नूनं स्यातां ज्ञानरतौ वरौ ।
परस्परार्थिनौ तौ ह जायते पितरौ सदा ॥ इति ।

श्रेष्ठौ सात्त्विकौ दम्पती एव ज्ञाननिरतौ परस्परार्थिनौ भवत इति तात्पर्य्यम् ।

साधकेऽभ्यासवैराग्याभ्यां यथा यथाऽज्ञानमपसरति तथा तथा ज्ञानवृद्धिः प्रजायते । प्रेमवारिकालुष्याधायकं स्वार्थमलमपि तथा तथाऽन्तःकरणत उड्डीयते । उपर्य्युक्तासु चतसृष्वपि प्रेमिकावस्थासु न कापि स्वार्थविरहितेत्यपि बोध्यम् । यतो हि आप्तकामिगुरुद्रोहिकृतघ्नास्तु घृणितस्वार्थप्रतिमूर्तय एव भवन्ति चतुर्थ आत्मारामस्तु स्वशुद्ध-सात्त्विक-स्वार्थस्य पराकाष्ठामुपगतस्तत्रैवानन्दमग्नो भवति प्रकारान्तरेण चत्वारोऽपि स्वार्थिन एवेति निःसन्दिग्धम् । अत एव श्रीभगवानपि स्वात्मानं लक्ष्यीकृत्य कामनाजालरहितं स्वार्थपङ्कविमुक्तं ज्ञानस्वरूपं लक्षयित्वा प्रेमलक्ष्यं दृढीकृतवान् । यावद्धि प्रेमिकेषु अज्ञानलेशोऽपि तिष्ठति तावद्धि परोक्षरूपेणापि स्वार्थवायुः समागत्य प्रेमधारां विपथयितुं समर्थो भवत्येव । अस्मादेव विज्ञानात् श्रीभगवान् श्रीकृष्णः स्ववाक्यतः स्वात्मानमेव यथार्थं सत्यं सर्वोत्तमं प्रेमिकमङ्गीचकार ।

प्रेमिकेण कस्मिंश्चिदप्युन्नतेऽधिकारे समधिगतप्रेमा सर्वदैव सर्वास्वप्यवस्थासु शुद्धो निर्मलो भवितुमर्हति । प्रेमिको हि स्वार्थलेशविरहात् केवलं परार्थवृत्त्यङ्गीकारेण स्वप्रियजनान् प्रेमोपहारं साधु प्रापयितुं क्षम इति श्रीभगवानेव स्वोन्मत्तावस्थाप्रकाशनेन सर्वोन्नतमिमं प्रेमाधिकारं प्रकटयामास ।

विज्ञानमिदन्यथाप्यवगन्तुं पार्य्यते । तथा हि—स्नेह-प्रेम-श्रद्धा-भक्तिरूपाणि चत्वारि नामधेयानि बिभ्रती अनुरागधारा भावात्मकपर्वतराजान्निःसरन्ती परमानन्दमये श्रीमद्भगवच्चरणाम्बुधौ विलीयते । यथा हि हिमालय-